


# विद्या प्रसारक मंडळ, ठाणे

| पुस्तकाचे नाव | : | विदुरनीति : |
|---|---|---|
| संपादक | : | जगन्नाथशास्त्री आणि अनंतरामशास्त्री |
| प्रकाशक | : | वाराणसी : चौखंबा संस्कृत संस्थान |
| प्रकाशन वर्ष | : | १९९७ |
| पृष्ठे | : | २५६ पृष्ठे |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ४२

॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

६८

महर्षिवरश्रीवेदव्यासप्रणीता
श्रीमहाभारतान्तर्गता-

# विदुरनीतिः

साहित्याचार्येण

होशिङ्गजगन्नाथशास्त्रिणा

तथा

वेतालाऽनन्तरामशास्त्रिणा च

'तत्त्वार्थदर्शिनी-' 'सरलार्थबोधिनी'ति
संस्कृतहिन्दीटीकाभ्यां
भूमिकादिभिश्च सम्भूष्य संशोध्य च सम्पादिता



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९६७

HARIDAS SANSKRIT SERIES

98

# VIDURA-NĪTI

A SELECTION FROM THE MAHĀBHĀRATA

OF

SRI VEDAVYĀSA

WITH

'Tattwarthadarśinī'-'Saralārthabodhinī'

Sanskrit-Hindi Commentaries, Introduction etc.

By

**Jagannāth Sāstrī Hośinga**

&

**Anantarām Śāstrī Vetāla**



**Chowkhamba Sanskrit Series Office**

VARANASI-221001

1997

॥ श्रीः ॥

# विदुरनीतिः

## परीक्षोपयोगि–'तत्त्वार्थदर्शिनी'–'सरलार्थबोधिनी'–

## संस्कृताहिन्दीटीकाद्वयसमन्विता ।

अज्ञानध्वान्तविध्वंसबद्धादरमुपास्महे ।
प्रकाशात्मगणेशानगीर्गुरुत्रितयं सदा ॥ १ ॥
काशीस्थराजकीयाऽमरगीर्विधासदः परीक्षासु ।
प्रथमायां निर्दिष्टा नीतिर्व्याख्यायतेऽत्र विदुरस्य ॥ २ ॥

जगदुपकारपरायणो महामुनिर्भगवान् वेदव्यासो महाभारताख्यं ग्रन्थं प्रणिनाय । तत्र च क्रमेण कथाप्रसङ्गे सञ्जयो धृतराष्ट्रं विनिन्द्य 'श्वः सभायां युधिष्ठिरवचः श्रावयिष्यामी'ति प्रणिगद्य निर्जगाम, तेन चिन्तातुरो महीपतिर्धृतराष्ट्रो विदुरं दूतेनानाय्य संशयविच्छेदाय किमपि पृष्टवान् । नीतिमान् विदुरश्च तमर्थं तस्मै निवेदयामासेति प्रसङ्गमुद्दिश्य प्रजागरपर्वात्मिका विदुरनीतिरिदानीं प्रस्तूयते ।

**वैशम्पायन उवाच**–तत्र वैशम्पायन उवाच=वैशम्पायनो मुनिः कथयति—

**द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।**
**विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ १ ॥**

**अन्वयः**—महाप्राज्ञः धृतराष्ट्रः महीपतिः द्वाःस्थं प्राह—( अहं ) विदुरं द्रष्टुम् इच्छामि, ( त्वं ) तं मा चिरम् इह आनयेति ।

**अर्थः—द्वाःस्थमिति ।** महाप्राज्ञः महाँश्चासौ प्राज्ञश्च महाप्राज्ञः अत्यन्तं बुद्धिमान्, धृतराष्ट्रः = धृतराष्ट्रनामा, महीपतिः=मह्याः पतिः महीपतिः पृथ्वीश्वरः राजेत्यर्थः, द्वाःस्थं=द्वारि तिष्ठतीति द्वाःस्थः तं दौवारिकं, 'स्त्री द्वार्द्वारं प्रतीहार' इति, 'प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थित-दर्शकाः' इति चामरौ, प्राह = कथयति । अहं, विदुरं = तन्नामानं, द्रष्टुम्=अवलोकयितुं तेन सह सङ्गम्य भाषितुमित्यर्थः, इच्छामि=अभिलषामि, त्वं, तं=विदुरं, मा चिरं=शीघ्रम्, इह=अस्मिन् स्थाने, आनय=प्रापय ।

**भावार्थः**—राजा धृतराष्ट्रो दूतमाज्ञापयति यत्—विदुरमत्र शीघ्रमुपस्थापय, यतोऽहं तेन सह कञ्चिद्विषये वार्तालापादिकं कर्तुमिच्छामीति ॥

द्विरदवदन मङ्गलसदन एकरदन सुखधाम ।
श्रीगणेश के चरण में बारंबार प्रणाम ॥ १ ॥

**भाषा**—वैशम्पायन बोले—महाबुद्धिमान् राजा धृतराष्ट्र ने द्वारपाल से कहा—मैं विदुर से मिलना चाहता हूं, उन्हे यहाँ शीघ्र लाओ ॥ १ ॥

**प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।**
**ईश्वरस्त्वां महाराजो महाप्राज्ञ ! दिदृक्षति ॥ २ ॥**

**अन्वयः**—धृतराष्ट्रेण प्रहितः दूतः क्षत्तारम् अब्रवीत्—हे महाप्राज्ञ ! ईश्वरः महाराजः त्वां दिदृक्षति ।

**अर्थः—प्रहित इति** । धृतराष्ट्रेण=कौरवेश्वरेण, प्रहितः=प्रेषितः, दूतः=सन्देहारकः, क्षत्तारं सूतं विदुरमित्यर्थः, 'सूतः क्षत्ता च सारथिः' इत्यमरः, अब्रवीत्=कथयामास, हे महाप्राज्ञ !=हे पण्डितेन्द्र ! 'धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः' इत्यमरः, ईश्वरः=स्वामि, महाराजः=राजाधिराजः, त्वां=त्वा, दिदृक्षति=द्रष्टुमिच्छति । दिदृक्षतीति परस्मैपदमार्षम् ।

**भावार्थः**—राजा धृतराष्ट्रेण प्रेषितो दूतो विदुरसमीपमेत्य तमब्रवीत्—राजा त्वां द्रष्टुमिच्छतीति ॥

**भाषा**—धृतराष्ट्र के द्वारा भेजा हुआ दूत विदुर से बोला—हे महाबुद्धिवाले ! श्रीमान् महाराज ( धृतराष्ट्र ) आप से मिलना चाहते हैं ॥ २ ॥

**एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।**
**अब्रवीद् धृतराष्ट्राय द्वाःस्थ ! मां प्रतिवेदय ॥ ३ ॥**

**अन्वयः**—एवम् उक्तः विदुरस्तु राजनिवेशनं प्राप्य द्वाःस्थ ! मां धृतराष्ट्राय प्रतिवेदय ( इति ) अब्रवीत् ।

**अर्थः—एवमिति** । एवं=पूर्वोक्तरीत्या, उक्तः=कथितः दूतेनेति शेषः, विदुरः=तन्नामकः, राजनिवेशनं राज्ञः=भूपस्य निवेशनं=वसतिस्थानं, प्राप्य=आसाद्य, हे द्वाःस्थ ! द्वारपाल !, मां=विदुरं समुपागतमिति शेषः, धृतराष्ट्राय=राज्ञे, प्रतिवेदय='विदुरः समागत' इति बोधय, इत्येवम्, अब्रवीत=कथयामास ।

**भावार्थः**—दूतमुखाद्राजसन्देशं श्रुत्वा राजभवनमुपेत्य विदुरः समुपागतमात्मानं ज्ञापयितुं दूतायाकथयत् ॥

**भाषा**—ऐसा कहने पर विदुर राजमहल के पास जाकर बोले—द्वारपाल ! धृतराष्ट्र को मेरे आने की सूचना दे दो ॥ ३ ॥

**द्वाःस्थ उवाच**—द्वाःस्थः=द्वारपालः, उवाच=धृतराष्ट्राय निवेदयामास ।

**विदुरोऽयमनुप्राप्तो राजेन्द्र ! तव शासनात् ।**
**द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ४ ॥**

**अन्वयः—**हे राजेन्द्र ! तव शासनात् अनुप्राप्तः अयं विदुरः ते पादौ द्रष्टुम् इच्छति, (सः) किं करोतु, (इति) मां प्रशाधि।

**अर्थः—**किं तदित्याह—**विदुर इति**। हे राजेन्द्र ! महाराज !, तव=ते, शासनात्=आदेशात्, अनुप्राप्तः=सम्प्राप्तः, अयम्=एषः, विदुरः, ते=तव, पादौ=चरणौ, द्रष्टुम्=अवलोकयितुम्, इच्छति=वाञ्छति, त्वद्दर्शनाभिलाषी विदुरः प्रतीक्षते इति यावत्, सः, किं करोतु=किमनुतिष्ठतु, इति, मां=सेवकं द्वारपालं, प्रशाधि=आज्ञापय।

**भावार्थः—**त्वदाज्ञया समुपस्थितो विदुरस्त्वद्दर्शनमभिलषन् प्रतीक्षमाणस्तिष्ठति, स किं सम्प्रत्याचारत्विति तदर्थमहं प्रतीक्षे भवदाज्ञाम्॥

**भाषा—**द्वारपाल बोला—महाराज ! आपकी आज्ञा से ये विदुर आये हुये हैं, आप के चरणों का दर्शन करना चाहते हैं। वे क्या करें ! मुझे आज्ञा दीजिए॥ ४॥

**धृतराष्ट्र उवाच—**धृतराष्ट्रः=राजा, द्वारपालोक्तं वचः श्रुत्वा, उवाच=आज्ञापयामास।

**प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम्।**
**अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने॥ ५॥**

**अन्वयः—**दीर्घदर्शिनं महाप्रज्ञं विदुरं प्रवेशय। हि अहम् अस्य विदुरस्य दर्शने जातु न अकल्पः (अस्मि)।

**अर्थः—**किमित्याकाङ्क्षायामाह—**प्रवेशयेति**। अये दूत ! त्वं, दीर्घदर्शिनं=दूरदर्शिनं विवेकिनमिति यावत्, 'दूरदर्शी दीर्घदर्शी' इत्यमरः, महाप्रज्ञं=बुद्धिमत्तमं, विदुरं, प्रवेशय=अन्तोपस्थापय। हि=यस्मात्कारणात्, अहम्, अस्य=एतस्य विदुरस्य, दर्शने=विलोकने, जातु=कदाचित्, 'कदाचिज्जातु' इत्यमरः, नाकल्पः=असमर्थो नास्मि।

**भावार्थः**=विदुरं शीघ्रं प्रवेशय, यतोऽहं विदुरदर्शने सर्वदैव सन्नद्धोऽस्मि, अतस्तदुपस्थितिनिवेदनं ममाकिञ्चित्करम्॥

**भाषा—**धृतराष्ट्र बोले—महाबुद्धिमान् दूरदर्शी विदुर को यहां ले आओ। मुझे इस विदुर से मिलने में कभी भी अड़चन नहीं है॥ ५॥

**द्वाःस्थ उवाच—**द्वाःस्थः=द्वारपालः, विदुरं प्रति उवाच=अब्रवीत् न्यवेदयद्वा।

**प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः।**
**नहि ते दर्शनेऽकल्पो जातु राजाब्रवीद्धि माम्॥ ६॥**

**अन्वयः**=हे क्षत्तः ! धीमतः महाराजस्य अन्तःपुरं प्रविश। हि (सः) ते दर्शने जातु अकल्पः नहि—(इति) राजा माम् अब्रवीत्।

**अर्थः—**किमस्य निवेदनमित्याह—**प्रविशेति**। हे क्षत्तः=हे सूत विदुर !, धीमतः=बुद्धिमतः, महाराजस्य=प्रभोर्धृतराष्ट्रस्य, अन्तःपुरम्=अवरोधनम् 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः, प्रविश=याहि। हि=यतः कारणात्, सः=राजा, ते=तव, दर्शने=अवलोकने,

जातु=कदाचिदपि, 'कदाचिज्जातु' इत्यमरः, अकल्पः=असमर्थः, नहि=नास्तीति, राजा=पार्थिवः धृतराष्ट्रः, 'राजा राट् पार्थिवः क्ष्माभृ'दित्यमरः, मां=मा, अब्रवीत्=अब्रूत ।

**भावार्थः—**हे विदुर ! न ते अन्तःपुरप्रवेशः कदापि राज्ञा निषिद्धः, अतस्त्वं साम्प्रतमप्यन्तःपुरं शीघ्रं गच्छेति राज्ञ आज्ञेति दूतवचनम् ।

**भाषा—**द्वारपाल बोला—हे सूत ( विदुर ) ! बुद्धिमान् महाराज ( धृतराष्ट्र ) के अन्तःपुर ( भीतरी महल ) मे प्रवेश कीजिए । महाराज ने कहा है कि 'आपसे मिलने में मुझे कभी भी अड़चन नहीं है' ॥ ६ ॥

**वैशम्पायन उवाच—**कथाप्रसङ्गेन वैशम्पायनः—तदाख्यो मुनिः, उवाच=प्रकरणसङ्गतिं दर्शयन्नकथयत् ।

**ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।**
**अब्रवीत् प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ७ ॥**

**अन्वयः—**ततः विदुरः धृतराष्ट्रनिवेशनं प्रविश्य प्राञ्जलिः ( सन् ) चिन्तयानं नराधिपं ( वक्ष्यमाणं ) वाक्यम् अब्रवीत् ।

**अर्थः—**दूतेन राज्ञः सन्देशे विदुराय निवेदिते स किमकरोदिति दर्शयति—**तत इति ।** ततः=द्वारपालकथनानन्तर, विदुरः, धृतराष्ट्रनिवेशनं धृतराष्ट्रस्य=राज्ञः निवेशनं=गृहम् अन्तःपुरमित्यर्थः, प्रविश्य=प्रवेशं कृत्वा, प्राञ्जलिः सन्=हस्तौ समानीय नताननः सन्, चिन्तयानं=विचिन्तयन्तं, चिन्तयानमिति प्रयोग आर्षः, नराधिपं=राजानं, वक्ष्यमाणं वाक्यं=वचः, अब्रवीत्=प्रार्थयत ।

**भावार्थः—**द्वारपालोक्तं वचो निशम्य राज्ञोऽन्तःपुरं प्रविश्य नम्रो विदुरश्चिन्तामग्नं राजानं वक्ष्यमाणरीत्या प्रार्थयत ॥

**भाषा—**वैशम्पायन बोले—तब विदुर धृतराष्ट्र के महल के भीतर जाकर, विचार में पड़े हुए राजा से हाथ जोड कर बोले ॥ ७ ॥

**विदुरोऽहं महाप्राज्ञ ! सम्प्राप्तस्तव शासनात् ।**
**यदि किञ्चन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ८ ॥**

**अन्वयः—**हे महाप्रज्ञ ! विदुरः अहं तव शासनात् सम्प्राप्तः । यदि किञ्चन कर्तव्यम् ( अस्ति ), ( तर्हि ) अयम् अस्मि, मां प्रशाधि ।

**अर्थः—**प्रार्थनास्वरूपमाह—**विदुर इति ।** हे महाप्राज्ञ !=बुद्धिमतां वरिष्ठ राजन् !, विदुरः=तन्नामा, अहम्=उपस्थितस्त्वदाज्ञापालकः, तव=ते, शासनात्=निदेशात्, सम्प्राप्तः=आगतोऽस्मि । यदि=चेत्, किञ्चन=किमपि, कर्तव्यं=करणीयं कार्यमस्ति, तर्हि अयमस्मि=उपस्थितोऽस्मि, मां=मा विदुरमिति यावत्, प्रशाधि=आज्ञापय ।

**भावार्थः—**राजन् ! भवदाज्ञया समुपस्थितस्य मे करणीयं कार्यमस्ति चेत्तर्हि तदाज्ञापय, तदर्थमयमहं सन्नद्धोऽस्मीति विदुरोक्तिः ॥

**भाषा—**हे महाबुद्धिवाले ! आपकी आज्ञा से मैं ( विदुर ) आया हूं । यदि कुछ ( मेरे ) करने योग्य कार्य हो तो यह मैं उपस्थित हूं मुझे आज्ञा दीजिए ॥ ८ ॥

**धृतराष्ट्र उवाच—**एवं विदुरेण प्रार्थितो राजा धृतराष्ट्रः, उवाच=बभाषे ।

**सञ्जयो विदुर ! प्राज्ञो गर्हयित्वा च मां गतः ।**
**अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९ ॥**

**अन्वयः—**हे विदुर ! प्राज्ञः सञ्जयः मां गर्हयित्वा गतः । सः श्वः सभामध्ये अजातशत्रोः वाक्यं वक्ष्यति ।

**अर्थः—**किमाहेति दर्शयति—**सञ्जय इति** । हे विदुर ! प्राज्ञः=मनीषी, 'धीरो मनीषी ज्ञः प्राज्ञ' इति कोशः, सञ्जयः=तदभिधानः, मां=मा राजानं धृतराष्ट्रमिति यावत् , गर्हयित्वा=निन्दित्वा, गतः=यातः । सः=सञ्जयः, श्वः=आगामिनि दिवसे, सभामध्ये सभाया मध्यं तस्मिन् , सभायां सर्वसमक्षमित्यर्थः, अजातशत्रोः=न जातः शत्रुर्यस्य सः तस्य युधिष्ठिरस्य, वाक्यं=कथनीयमंशं वक्ष्यति=कथयिष्यति ।

**भावार्थः—**सञ्जयोऽद्य मा विनिन्द्य मदाचरितव्यवहारविषये श्वः सभाया युधिष्ठिराभिप्रायं कथयिष्यामीति च निगद्य निर्गत इति धृतराष्ट्रवचनम् ॥

**भाषा—**धृतराष्ट्र बोले—हे विदुर, बुद्धिमान् सञ्जय मुझे बुरा भला कह कर चला गया है कल वह सभा में युधिष्ठिर की बात कहेगा ॥ ९ ॥

**तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।**
**तन्मे दहति गात्राणि तदकार्षीत् प्रजागरम् ॥ १० ॥**

**अन्वयः—**कुरुवीरस्य तस्य वचः अद्य मया न विज्ञातम् । तत् तत् मे गात्राणि दहति, प्रजागरम् अकार्षीत् ।

**अर्थः—**तद्वचनाऽज्ञानेन चिन्ता मा बाधत इति तात्पर्यं दर्शयन्नाह—**तस्येति** । कुरुवीरस्य कुरुषु=कुरुवंश्येषु, वीरः=शूरः तस्य, तस्य=युधिष्ठिरस्य, वचः=वाक्यं, मया=धृतराष्ट्रेण, न विज्ञातं=न सम्यगवबुद्धम् । तत्=तस्मात्कारणात् , तत्=अज्ञातं वचः, मे=मम, गात्राणि=शरीराणि अवयवान् इत्यर्थः, 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति कोशः, दहति=भस्मीकरोति सन्तापयतीति यावत् , प्रजागरं=जागरणं निद्राऽभावमिति यावत्, अकार्षीत्=अकरोत् । 'डुकृञ् करणे' इत्यस्य लुङि प्रथमपुरुषैकवचने रूपमिदम् ।

**भावार्थः—**युधिष्ठिरवचसोऽभिप्रायमज्ञात्वा तप्यन्ति मे गात्राणि, तेन च न निद्रामप्यवाप्तवानस्मीति धृतराष्ट्रोक्तिः ।

**भाषा—**आज मैं उस कुरुश्रेष्ठ ( युधिष्ठिर ) की बात नहीं समझा, यही मेरे ( शरीर के ) अङ्गों को जला रहा है और इसीसे मुझे नींद नहीं आई ॥ १० ॥

**जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।**
**तद् ब्रूहि त्वं हि नस्तात ! धर्मार्थकुशलोऽसि ॥ ११ ॥**

**अन्वयः—**हे तात ! ( त्वं ) जाग्रतः दह्यमानस्य ( मे ) यत् श्रेयः अनुपश्यसि, तत् नः ब्रूहि । हि त्वं धर्मार्थकुशलः असि ।

**अर्थः—जाग्रत इति ।** हे तात !=हे अनुकम्पनीय !, 'तातोऽनुकम्प्ये पितरी'ति हैमचन्द्रानेकार्थसंग्रहः, त्वं=भवान् , जाग्रतः=निद्राया अभावेन जागरणं कुर्वतः, दह्यमानस्य=सन्तापावयवसमूहस्य, मे, यत् , श्रेयः=निःश्रेयसम् , अनुपश्यसि=विचारयसि, तत्=श्रेयः, नः=अस्मभ्यं मह्यमित्यर्थः, ब्रूहि=कथय । हि=यतः, त्वं, धर्मार्थकुशलः ।धर्मश्च अर्थश्च धर्मार्थौ तयोः कुशलः धर्मः=सदाचारः, अर्थः=अर्थशास्त्रं तयोः कुशलः=कृती धर्मशास्त्रार्थशास्त्रविषयकगूढज्ञानवान् , 'कृती कुशल इत्यपी'त्यमरः, असि=वर्तसे ।

**भावार्थः—**युधिष्ठिरवञ्चनाऽनवबोधाच्चिन्तया निद्रामलभमानस्यात एव विकृतावयवस्य मे श्रेयस्करं यद्भवेत्तत्त्वयाख्येयमिति कुरुराजवाक्यम् ॥

**भाषा—**हे भाई ! मुझे नींद नहीं आती, मैं जला जा रहा हूं । मेरे कल्याण की जो बात तुमने सोची हो वह मुझसे कहो, क्योंकि तुम धर्म और अर्थ में निपुण हो ॥ ११ ॥

**यतः प्राप्तः सञ्जयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशान्तिः ।**
**सर्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव मेऽद्य प्रचिन्ता ॥ १२ ॥**

**अन्वयः—**सञ्जयः यतः पाण्डवेभ्यः प्राप्तः, मे मनसः यथावत् प्रशान्तिः न, सर्वेन्द्रियाणि अप्रकृतिं गतानि । अद्य किं वक्ष्यति इत्येव मे प्रचिन्ता ।

**अर्थः—यत इति ।** सञ्जयः, यतः=यस्मिन् काले, सार्वविभक्तिकस्तसिः, पाण्डवेभ्यः=पाण्डुपुत्राणां सकाशात् , प्राप्तः=आगतः, तस्मात्कालादारभ्येति शेषः, मे=मम, मनसः=चेतसः, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः, यथावत्=उचिता, शान्तिः=विशिष्टस्थिरता, न=नास्ति, सर्वेन्द्रियाणि सर्वाणि च तानि इन्द्रियाणि च सर्वेन्द्रियाणि=समस्तानि मनोऽतिरिक्तान्यपि इन्द्रियाणि, अप्रकृतिम्=अस्वास्थ्यं, गतानि=प्राप्तानि अस्वस्थानि जातानीत्यर्थः, अद्य=इदानीमपि, किं=किमु, वक्ष्यति=कथयिष्यति, इत्येव=एवमेव इयमेवेत्यर्थः, मे=मम, प्रचिन्ता=प्रकृष्टा चिन्ता, महती चिन्ता वर्तते ।

**भावार्थः—**पाण्डवपक्षात् सञ्जयो यदैवागतस्ततःप्रभृति मम मनोऽशान्तमिन्द्रियाणि चान्यानि न स्वस्थानि। केवलमेकैवेयं चिन्ता महती मे मनसि सर्वदा जागरूकास्ति यत्स किं मां वक्ष्यतीति ।

**भाषा—**जब से सञ्जय पाण्डवों के यहां से आया तब से मेरे मन में पहले की-सी शान्ति नहीं है, मेरी सभी इन्द्रियां विकल हो गई हैं । सञ्जय ( आकर ) क्या कहेगा यही एक मुझे आज भारी चिन्ता है ॥ १२ ॥

**विदुर उवाच—**तदिदं धृतराष्ट्रस्य दुःखितस्य वचो निशम्योत्तरणाय कृतमतिः विदुरः, उवाच=अभाषत ।

**अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।**
**हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १३ ॥**

**अन्वयः**-प्रजागराः बलवता अभियुक्तं दुर्बलं हीनसाधनं हृतस्वं कामिनं चोरम् आविशन्ति ।

**अर्थः—**किमित्याकाङ्क्षायामाह—**अभियुक्तमिति ।** प्रजागराः=जागरणानि, बलवता=बलिना, अभियुक्तम्=आक्रान्तं, दुर्बलम्=अशक्तं, हीनसाधनम्—असहायं, हृतस्वं=गतधनं, कामिनं=कामुकं, चोरं=दस्युम् , आविशन्ति=प्रविशन्ति ।

**भावार्थः—**बलवदाक्रान्ता दुर्बला, असहाया, अपहृतवित्ताः, कामिनः, चोराश्चेत्येत एव प्रायो जगति जागरणं कुर्वते । केषां केषां जागरणं भवतीत्युक्त्वा जागरिता भवानपि किमेष्वेवेति विदुरकथनाशयः ।

**भाषा—**विदुर बोले—बलवान् से आक्रान्त किया गया दुर्बल, असहाय, और जिसका सब कुछ हर लिया गया हो इनको तथा कामी (विषयासक्त) और चोर को जागने का रोग हो जाता है ॥ १३ ॥

**कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ! ।**
**कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे ॥ १४ ॥**

**अन्वयः—**हे नराधिप ! एतैः महादोषैः न स्पृष्टोऽसि कच्चित् ? च परवित्तेषु गृध्यन् न परितप्यसे कच्चित् ?

**अर्थः—कच्चिदिति ।** हे नराधिप ! नराणाम् अधिपः नराधिपः तत्सम्बुद्धौ हे नराधिप != राजन् ; एतैः=पूर्वोक्तैः, दोषैः=बलवदाक्रमणादिकैः, न स्पृष्टोऽसि कच्चित्=स्पर्शं न प्राप्तोऽसि किम् ? 'कच्चित्कामप्रवेदने' इति कोशः, च=अपिच, परवित्तेषु परेषां=स्वातिरिक्तानां वित्तानि=धनानि तेषु, द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' इत्यमरः, गृध्यन्=लिप्सावान् तद्ग्रहणाभिलाषीत्यर्थः, न=नैव, परितप्यसे=सन्तापमाप्नोषि, कच्चित्=किम् ?

**भावार्थः—**दुर्बलादयश्चोरान्ताः परवित्तापहारेच्छवश्च चिन्तया जागरणं प्राप्य सन्तापमनुभवन्तीति तथाविधसन्तापानुभवतो भवतोऽपि किं तदन्तर्गत एव कश्चिदाधिरिति धृतराष्ट्रं प्रति विदुरस्य प्रश्नः ॥

**भाषा—**हे राजन् ! कहीं आपको इन महादोषों का संसर्ग तो नहीं हो गया है ? या कहीं पराये धन की लालच से तो आप दुःखी नहीं हो रहे हैं ? ॥ १४ ॥

**धृतराष्ट्र उवाच—**धृतराष्ट्रः=विदुरद्वारा कृतप्रश्नो राजा, उवाच=अकथयत् ।

**श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।**
**अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसम्मतः ॥ १५ ॥**

**अन्वयः—**धर्म्यं परं नैःश्रेयसं ते वचः श्रोतुम् इच्छामि । हि अस्मिन् राजर्षिवंशे एकः त्वं प्राज्ञसम्मतः (असि) ।

**अर्थः—**किमुक्तरितवानिति शङ्कानिरासाय तद्वचनमुपन्यस्यति-**श्रोतुमिति ।** धर्म्यं=धर्मात् अनपेतं धर्म्यं धर्मसहितम् , 'धर्मपथ्यर्थन्यायादनपेते' इति शास्त्रेण यत्प्रत्ययः, परं=भृशं, नैःश्रेयसं=कल्याणकरं, ते=तव, वचः=वचनं, श्रोतुम्=आकर्णयितुम् , इच्छामि=अभिलषामि ।

हि=यतो हेतोः, अस्मिन्=अमुष्मिन्, राजर्षिवंशे राजर्षीणां=नरेन्द्रश्रेष्ठानां वंशे=कुले, एकः=केवलः, 'एके मुख्यान्यकेवलाः' इत्यमरः, त्वं=भवान्, प्राज्ञसम्मतः प्राज्ञानां=विदुषां सम्मतः= माननीयः, असि।

**भावार्थः—**अस्माकं राज्ञां कुले त्वमेवैको विद्वद्भिरादृतो विद्वान्, अतो हितस्य सधर्मस्य च त्वद्वचसः श्रवणेच्छा ममास्तीति धृतराष्ट्रकथनम् ॥

**भाषा—**धृतराष्ट्र बोले—मैं तुम्हारे धर्मयुक्त तथा कल्याण करनेवाले सुन्दर वचनों को सुनना चाहता हूं, क्योंकि इस राजर्षिवंश में केवल तुम्हीं बुद्धिमानों के माननीय (पूज्य) हो ॥१५॥

**विदुर उवाच—**विदुरः=धृतराष्ट्रपृष्टः, उवाच=उत्तरयामास।

**राजा लक्षणसम्पन्नस्त्रैलोक्यस्याधिपो भवेत्।**
**प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र! युधिष्ठिरः ॥ १६ ॥**

**अन्वयः—**हे धृतराष्ट्र! लक्षणसम्पन्नः राजा त्रलोक्यस्य अधिपः भवेत्। प्रेष्यश्च युधिष्ठिरः ते प्रेषित एव।

**अर्थः—**विदुरोक्तिं प्रदर्शयति—**राजेति**। हे धृतराष्ट्र!=राजन्!, लक्षणसम्पन्नः लक्षणैः= राजचिह्नैः सम्पन्नः=युक्तः सहित इति यावत्, 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः, राजा=भूपः, त्रैलोक्यस्य=त्रिभुवनस्यापि, अधिपः=स्वामी, भवेत्=स्यात्। प्रेष्यश्च प्रकर्षेण=अतिशयेन एष्यः= एषणीयः प्रार्थनीय इति यावत्, युधिष्ठिरः=पाण्डोः प्रथमः पुत्रः, ते=त्वया, प्रेषित एव=वनं प्रति प्रहित एव।

**भावार्थः—**राजलक्षणलक्षितो राजा युधिष्ठिरः त्रिभुवनस्वामी भवितुमर्हति, नत्वया स सम्प्रार्थ्य स्थापनीय आसीत्, परं त्वया स वनमेव प्रेषित इत्यनुचितं कृतमिति विदुराभिप्रायः ॥

**भाषा—**विदुर बोले—राजलक्षणों से युक्त राजा (युधिष्ठिर) तीनों लोक के स्वामी हो सकते हैं और आपके प्यार करने योग्य हैं, (किन्तु) हे धृतराष्ट्र! उन्हें आपने (वन में) भेज दिया ॥ १६ ॥

**विपरीततरश्च त्वं भागधेये न सम्मतः।**
**अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ १७ ॥**

**अन्वयः—**धर्मात्मा धर्मकोविदः त्वं विपरीततरः। (तस्मात्) अर्चिषां प्रक्षयाच्चैव भागधेये न सम्मतः।

**अर्थः—विपरीततर इति**। धर्मात्मा=धार्मिकः, धर्मकोविदः धर्मे=धर्माचरणे कोविदः=कुशलः, त्वं=भवान्, विपरीततरः=अतिशयेन विपरीतः=राजचिह्नरहित इति विपरीततरोऽसि। तस्मात्=तत्कारणात्, अर्चिषां=नेत्रज्योतिषां, प्रक्षयाच्चैव=नाशादपि, भागधेये=अंशे राज्यांश इत्यर्थः, न सम्मतः=नाधिकारयोग्यः राजलक्षणहीनोऽन्धश्चापि राज्याधिकारी नेति नीतिः।

**भावार्थः—**यतो न त्वयि राजोचिता गुणा, दृष्टिहीनश्च त्वमसि, अतो न राज्याधिकारयोग्य इति ॥

**भाषा—**आप धर्मात्मा और धर्म के जानकार होते हुए भी राजलक्षणों से एकदम हीन तथा अन्धे होने के कारण राज्य का हिस्सा पाने योग्य नहीं समझे जाते ॥ १७ ॥

**आनृशंस्यादनुक्रोशाद्धर्मात् सत्यात् पराक्रमात् ।**
**गुरुत्वात्त्वयि सम्प्रेक्ष्य बहून् क्लेशांस्तितिक्षते ॥ १८ ॥**

**अन्वयः—**( युधिष्ठिरः ) आनृशंस्यात्, अनुक्रोशात् धर्मात् सत्यात् पराक्रमात् गुरुत्वात् त्वयि सम्प्रेक्ष्य च बहून् क्लेशान् तितिक्षते ।

**अर्थः—आनृशंस्यादिति ।** युधिष्ठिरः=अजातशत्रुः अध्याहृतोऽयं कर्ताऽत्र पद्ये, आनृशंस्यात् ननृशंसः अनृशंसः अनृशंस्य भावःआनृशंसत्वं तस्मात्,न नृशंसः=क्रूरः 'नृशंसो घातुकः क्रूर' इत्यमरः, अनृशंसः=दयालुः तस्य भावः=धर्मः तस्मात् क्रूरताया अभावात्, अनुक्रोशात्=दयायाः 'कृपा दयाऽनुकम्पा स्यादनुक्रोश' इत्यमरः, धर्मात्=सदाचारात्, सत्यात्=तथ्यात्, सत्यवचनाश्रयादित्यर्थः, पराक्रमात्=विक्रमात्, गुरुत्वात्=पूज्यत्वात्, त्वयि=भवति, सम्प्रेक्ष्य च=विलोक्य च, त्वां च गुरुं मत्वापीति यावत्, बहून्=बहुलान्, क्लेशान्=दुःखानि, तितिक्षते = सहते ।

**भावार्थः—**आनृशंस्यादिगुणेषु सत्स्वपि त्वयि पूज्यत्वधिया युधिष्ठिरो दुःखपरम्परामनुभवतीति ॥

**भाषा—**( युधिष्ठिर ) क्रूरता न होने से और दया, धर्म, सत्य तथा पराक्रम के कारण आपको पूज्य बुद्धि से देखते हुए बहुत से कष्टों को सहते रहते हैं ॥ १८ ॥

**दुर्योधने सौबले च कर्णे दुःशासने तथा ।**
**एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ १९ ॥**

**अन्वयः—**त्वं दुर्योधने सौबले कर्णे तथा दुःशासने चेत्येतेषु ऐश्वर्यम् आधाय भूतिं कथम् इच्छसि ।

**अर्थः—दुर्योधन इति ।** त्वं=भवान्, दुर्योधने=ज्येष्ठे स्वपुत्रे, सौबले=शकुनौ, कर्णे=अङ्गदेशाधिपे, तथा=तेन प्रकारेण, दुःशासने=दुर्योधनानुजे स्वसूनौ चेति, एतेषु=पूर्वोक्तेषु दुर्योधनादिषु अयोग्येषु, ऐश्वर्यं=राज्यभारम्, आधाय=संस्थाप्य, भूतिं=समृद्धिं कल्याणमिति यावत्, कथं=केन प्रकारेण, इच्छसि=वाञ्छसि । अविवेकिषु राज्यभारस्थापनं नोचितं राज्ञामिति नीतिः ।

**भावार्थः—**अयोग्येषु दुर्योधनादिषु चतुर्षु राज्यभारं निक्षिप्य ते कथं श्रेयो भविता ?

**भाषा—**आप दुर्योधन, शकुनि, कर्ण तथा दुःशासन इन ( अयोग्यों ) पर राज्य का भार छोड़ कर किस प्रकार समृद्धि की इच्छा करते हैं ॥ १९ ॥

**आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।**
**यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ २० ॥**

**अन्वयः—**आत्मज्ञानं समारम्भः तितिक्षा धर्मनित्यता अर्थाः यं न अपकर्षन्ति, सः पण्डितः उच्यते वै ।

**अर्थः—**राज्यरक्षणे पाण्डित्यमप्यपेक्ष्यते, न च तदेतेषु विद्यत इति पण्डितत्वं विशदीकरोति पञ्चदशभिरात्मज्ञानमित्यादिभिः पद्यैः—**आत्मज्ञानमिति**। आत्मज्ञानम् आत्मनः=स्वस्य, ज्ञानं=शक्त्यादिसहकृतनैतिकर्तव्यताकः शास्त्रापेक्षः बोधः, समारम्भः=प्रारम्भः सामर्थ्योचितः, तितिक्षा=सहनशीलता, धर्मनित्यता=सश्रद्धं सदाचरणासङ्गः, इत्येते, अर्थात्=पुरुषार्थात्, यं=पुमांसं, नापकर्षन्ति=न भ्रंशयन्ति, सः=पुरुषः, पण्डितः=सदसद्विवेकशाली, उच्यते=कथ्यते। 'वै' इति निश्चये पादपूरणे वा।

**भावार्थः—**शास्त्रशक्तिक्षमाश्रद्धाश्रयाः स्वबोधोत्साहशान्तिसदाचरणाग्रहा यस्य पुरुषार्थहानिकरा न, स एव विवेकी।

**भाषा—**अपने वास्तविक स्वरूप का ज्ञान, उद्योग, दुःख सुख सहने की शक्ति और धर्म में स्थिरता ये गुण जिस मनुष्य को पुरुषार्थ से च्युत नहीं करते ( अर्थात् पुरुषार्थ में स्थिर रखते हैं, ) वही पण्डित कहलता है॥ २०॥

**निषेवते प्रशस्तानि निन्दितानि न सेवते।**
**अनास्तिकः श्रद्धधान एतत् पण्डितलक्षणम्॥ २१॥**

**अन्वयः—**( यः ) प्रसस्तानि निषेवते, निन्दितानि न सेवते, अनास्तिकः श्रद्धधानश्च ( अस्ति, सः पण्डितः इति ) एतत् पण्डितलक्षणम् ( अस्तीति ज्ञेयम् )।

**अर्थः—निषेवते इति**। यः=पुरुषः, प्रशस्तानि=लोकशास्त्रसम्मतानि कर्माणि, निषेवते=आश्रयति, निन्दितानि=लोकशास्त्रप्रतिषिद्धानि कर्तव्यानि, न सेवते=नाचरति, अनास्तिकः=आस्तिकः, श्रद्धधानः=श्रद्धावान् देवताशास्त्रादिषु विश्वसंश्च, अस्ति=वर्तते, सः=पुरुषः, पण्डितः=विवेकीति, एतत्=इदं, पण्डितलक्षणं=संख्यावतां लक्ष्म, अस्तीति ज्ञेयम्।

**भावार्थः—**प्रशस्तमार्गावलम्बी निन्दितकर्माऽसेवी श्रद्धावानास्तिकश्च पुरुषः पण्डित इति।

**भाषा—**( जो ) अच्छे कामों में लगा रहता है और बुरे कामों से दूर रहता है तथा आस्तिक और श्रद्धालु है ( वही पण्डित है, ) क्योंकि यही पण्डित का लक्षण है॥ २१॥

**क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।**
**यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते॥ २२॥**

**अन्वयः—**क्रोधः हर्षः दर्पः ह्रीः स्तम्भः मान्यमानिता च अर्थात् यं न अपकर्षन्ति, सः वै पण्डितः उच्यते।

**अर्थः—क्रोध इति**। क्रोधः=कोपः, हर्षः=प्रीतिः, दर्पः=मदः, ह्रीः=लज्जा, 'कोपः क्रोधामर्षरोषप्रघाः, मुत्प्रीतिः प्रमदो हर्षः, दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः, मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः, स्तम्भः=असन्नतिः औद्धत्यमित्यर्थः, मान्यमानिता=आत्मानं मान्यं=श्रेष्ठं मन्यतेऽसौ मान्यमानी तस्य भावस्तत्ता च, अर्थात्=पुरुषार्थात्, यं=नरं, न अपकर्षन्ति=न च्यावयन्ति, सः=पुरुषः, वै=निश्चयेन, पण्डितः=विवेकी, उच्यते=निगद्यते।

**भावार्थः—**क्रोधादिपरवशो यः स्वकार्यभ्रंशकरो न भवति, स किल पण्डित इति।

**भाषा—**क्रोध, हर्ष, गर्व, लज्जा, औद्धत्य तथा अपने को पूज्य समझना—ये ( भाव ) जिसको पुरुषार्थ से नहीं हटाते, वही पण्डित कहलाता है ॥ २२ ॥

**यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।**
**कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ २३ ॥**

**अन्वयः—**परे यस्य कृत्यं मन्त्रितं मन्त्रं वा न जानन्ति, ( अपितु ) यस्य कृतम् एव जानन्ति, सः पण्डितः उच्यते वै।

**अर्थः—यस्येति।** परे=अन्ये शत्रवो वा, यस्य=पुरुषस्य, कृत्यं=प्रारब्धं क्रियमाणं च कर्म, मन्त्रितं=विचारितं, मन्त्रं=रहस्यं वा, न जानन्ति=नावगच्छन्ति, अपितु=किन्तु, अस्य=पुरुषस्य, कृतमेव=अनुष्ठितमेव कार्यं, जानन्ति=बुध्यन्ते, सः=पुरुषः, पण्डितः=मेधावी, उच्यते=कथ्यते, वै=निश्चयः।

**भावार्थः—**यदारब्धं यद्विचारितं च कार्यं समाप्त्यन्तं न केऽपि ज्ञातुं शक्नुवन्ति, स पण्डित पदव्यवहार्यो भवति।

**भाषा—**दूसरे लोग जिसके कार्य को अथवा कार्य के विचार को नहीं जानते बल्कि हो जाने पर ही काम को जानते हैं, वही पण्डित कहलाता है ॥ २३ ॥

**यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।**
**समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ २४ ॥**

**अन्वयः—**शीतम् उष्णं भयं रतिः समृद्धिः असमृद्धिर्वा यस्य कृत्यं न विघ्नन्ति, सः वै पण्डितः उच्यते।

**अर्थः—यस्येति।** शीतं=हिमं, हेमन्तादिकालोत्पन्नमिति यावत्, 'तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः' इत्यमरः, उष्णम्=आतपः, ग्रीष्मर्तुजन्यः सन्ताप इत्यर्थः, 'उष्ण ऊष्मागमस्तपः' इति कोशः, भयं=राष्ट्रोत्पातादिजन्या भीतिः, 'भीतिर्भीः साध्वसं भयम्' इति कोशः, रतिः=प्रेम, समृद्धिः=सम्पत्तिः, असमृद्धिः=विपद्वा, यस्य=पुरुषस्य, कृत्यं=क्रियमाणं-कार्यं, न विघ्नन्ति=न बाधन्ते नाशयन्ति वा, सः=पुरुषः, वै=निश्चयेन, पण्डितः=ज्ञानी, उच्यते=आख्यायते।

**भावार्थः—**यदारब्धं कार्यं शीतादिभिर्बाधितं सदपि समाप्तमेव जायते, स किल पण्डित इति।

**भाषा—**गर्मी सर्दी, भय, अनुराग, सम्पत्ति अथवा दरिद्रता ( ये सब ) जिसके कार्य में विघ्न नहीं डालते, वही पण्डित कहलाता है ॥ २४ ॥

**यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते।**
**कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ २५ ॥**

**अन्वयः—**संसारिणी यस्य प्रज्ञा धर्मार्थौ अनुवर्तते, यः कामात् अर्थं वृणीते, सः पण्डितः उच्यते वै।

**अर्थः—यस्येति।** संसारिणी=संसरणशीला, चञ्चला अस्थिरेत्यर्थः, यस्य=पुरुषस्य, प्रज्ञा=

बुद्धिः, 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः, धर्मार्थौ धर्मः=सश्रद्धं वेदोदितकर्माचरणम्, अर्थश्च न्यायोपार्जितसम्पत्तिश्चेति तौ, अनुवर्तते=साधयति, अथ च, यः=पुमान्, कामात्=अभिलाषात्, अर्थं=पुरुषार्थं परमनिःश्रेयससाधनीभूतमिति यावत्, वृणीते=स्वीकुरुते श्रेष्ठं मन्यते साधयतीत्यर्थः, सः=जनः, पण्डितः=बुद्धिमान्, उच्यते=गण्यते, वै=इति निश्चितम्।

**भावार्थः**—यः किलाऽस्थिरयापि बुद्ध्या सदाचारं सत्सम्पत्तिं च साधयति, प्रेम्णा च परमपुरुषार्थप्राप्त्यै यतते, स एव किल पण्डितशब्दवाच्यः॥

**भाषा**—जिसकी लौकिक बुद्धि धर्म और अर्थ का ही अनुसरण करती है और जो काम से अर्थ को अच्छा समझता है, वही पण्डित कहलाता है॥ २५॥

**यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते।**
**न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः॥ २६॥**

**अन्वयः**—पण्डितबुद्धयः नराः यथाशक्ति चिकीर्षन्ति, यथाशक्ति कुर्वते, च किञ्चित न अवमन्यन्ते।

**अर्थः—यथाशक्तीति।** पण्डितबुद्धयः पण्डितानां=विमर्शवतां बुद्धिरिव बुद्धिः=मतिः येषान्ते, नराः=पुरुषाः, यथाशक्ति शक्तिमनतिक्रम्येति यथाशक्ति=शक्त्यनुसारं, चिकीर्षन्ति=कर्तुमिच्छन्ति, यथाशक्ति=शक्तिसाध्यं, कुर्वते=विदधति, च=अपिच, किञ्चित्=किमपि, न अवमन्यन्ते=न तिरस्कुर्वते।

**भावार्थः**—स्वशक्तिं पर्यालोच्य कार्यं चिकीर्षवः कुर्वाणाश्च किमपि नापमानदृशा पश्यन्ति ये, त एव पण्डिता इति।

**भाषा**—विवेकपूर्णबुद्धिवाले पुरुष शक्ति के अनुसार काम करने की इच्छा करते हैं और करते भी हैं तथा किसी बात को तुच्छ नहीं समझते हैं॥ २६॥

**क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात्।**
**नासम्पृष्टो व्युपयुङ्क्ते परार्थे तत् प्रज्ञानं प्रथमं पण्डितस्य॥ २७॥**

**अन्वयः**—क्षिप्रं विजानाति, चिरं शृणोति, विज्ञाय च अर्थं भजते; कामान् न, असम्पृष्टः परार्थे न व्युपयुङ्क्ते, तत् पण्डितस्य प्रथमं प्रज्ञानम्।

**अर्थः—क्षिप्रमिति।** क्षिप्रं=द्रुतं, 'लघुक्षिप्रमरं द्रुत'मित्यमरः, विजानाति=सम्यगवगच्छति, चिरं=चिराय, शृणोति=ज्ञानदार्ढ्याय आकर्णयति, विज्ञाय च=सम्यगवबुध्यैव, चकारोऽत्र एवार्थे, अर्थं=पुरुषार्थं, भजते=सेवते, कामात्=इच्छायाः, न=न सेवते, अपिच, असम्पृष्टः=यथावदकृतप्रश्नः, परार्थे=अन्यार्थे, न व्युपयुङ्क्ते=न वाग्व्ययं करोति न भाषत इत्यर्थः, तत्=इदं, पण्डितस्य=विवेकिनः, प्रथमम्=आद्यं, प्रज्ञानं=लक्षणमस्ति।

**भावार्थः**—यस्य हि शीघ्रं वस्तुज्ञानं, 'विसंवादि न स्या'दितीव चिरायाकर्णनं, ज्ञानोत्तरं निष्कामं पदार्थसेवनं, परस्य विषये विना प्रश्नमनुत्तरणं भवति, स खलु पण्डितः॥

**भाषा**—(किसी विषय को) शीघ्र ही समझ लेता है परन्तु उसे देर तक सुनता रहता है

और समझ कर बिना आसक्ति के उसमें प्रवृत्त हो जाता है तथा बिना पूछे दूसरे की बात में दखल नहीं देता, वह पण्डितका पहला लक्षण है ॥ २७॥

**नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।**
**आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २८ ॥**

**अन्वयः—**पण्डितबुद्धयः नराः अप्राप्यं न अभिवाञ्छन्ति नष्टं ( च ) शोचितुं न इच्छन्ति-आपत्सु च न मुह्यन्ति ।

**अर्थः—नेति ।** पण्डितबुद्धयः=विमर्शवद्बुद्धिशालिनः, नराः=पुरुषाः 'पुरुषाः पूरुषा नराः' इत्यमरः, अप्राप्यं=प्राप्तुमशक्यं प्रयत्नशतैरपीति शेषः, न अभिवाञ्छन्ति=न समीहन्ते, नष्टं=नयनागोचरतां यातञ्च, न इच्छन्ति=नाभिलष्यन्ति, आपत्सु च=विपत्स्वपि, चोऽप्यर्थे, न मुह्यन्ति=मोहग्रस्ता बुद्धिहीना न भवन्ति ।

**भावार्थः—**ये स्वाऽसाध्यं वस्तु न कामयन्ते, नच लुप्तस्य कृते शोकं कुर्वते, नापि विपदि मोहाच्छन्नमतयो भवन्ति, त एव किल पण्डिताः ।

**भाषा—**विवेकपूर्णबुद्धिवाले पुरुष दुर्लभ वस्तु की कामना नहीं करते, खोई हुई वस्तु के विषय मे शोक करना नही चाहते और विपत्तियों में मोह को नही प्राप्त होते ( अर्थात् घबराते नही ) ॥ २८ ॥

**निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।**
**अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ २९ ॥**

**अन्वयः—**यः निश्चित्य प्रक्रमते, कर्मणः अन्तः न वसति, ( किञ्च ) अवन्ध्यकालः वश्यात्मा च ( विद्यते ), सः वै पण्डितः उच्यते ।

**अर्थः—निश्चित्येति ।** यः=पुमान्, निश्चित्य=पूर्वापरकार्यसन्दर्भपर्यालोचनया निर्णयं कृत्वा, प्रक्रमते=कार्यमारभते, कर्मणः=कार्यस्य, अन्तः=मध्य एव, न वसति=न विरमति, किञ्च अवन्ध्यकालः अवन्ध्यः=सफलः 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः, कालः=समयो यस्यैवम्भूतः, सर्वदैव सफलकर्माचरणशीलः, वश्यात्मा वश्यः=वशङ्गतः आत्मा यस्यासौ जितेन्द्रियश्चेत्यर्थः, विद्यते, सः=जनः, वै=निश्चयेन, पण्डितः=विवेकशाली, उच्यते=कथ्यते ।

**भावार्थः—**विचार्य कार्यारम्भकारी, समारब्धस्य च पूर्तिकरो, जितेन्द्रियश्च समयं व्यर्थमयापयन् पण्डितपदभाग् भवतीति ।

**भाषा—**जो मनुष्य निश्चय करके ही कार्य का आरम्भ करता है कार्य के बीच में नहीं रुकता, समय को व्यर्थ नहीं जाने देता और चित्तको वश में रखता है, वही पण्डित कहलाता है। २९

**आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।**
**हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ! ॥ ३० ॥**

**अन्वयः—**हे भरतर्षभ ! पण्डिताः आर्यकर्मणि रज्यन्ते, भूतिकर्माणि कुर्वते, हितं न अभ्यसूयन्ति च ।

**अर्थः—आर्यकर्मणीति** । हे भरतर्षभ !=भरतकुलश्रेष्ठ ! धृतराष्ट्रं प्रति विदुरस्येयं सम्बुद्धिः, पण्डिताः=ज्ञानिनः, आर्यकर्मणि आर्यस्य कर्म तस्मिन्=सत्पुरुषोचिते कार्ये, रज्यन्ते=रमन्ते प्रीयन्ते, भूतिकर्माणि भूतेः=ऐश्वर्यस्य 'विभूतिर्भूतिरैश्वर्य'मित्यमरः, ऐश्वर्यसम्पादकानीत्यर्थः, कर्माणि=कार्याणि, कुर्वते=विदधते, हितं=हितकरं, वचनं पुरुषं वेति शेषः, न अभ्यसूयन्ति=न द्विषन्ति च ।

**भावार्थः**-सत्कार्यानुरागी सत्कर्मानुष्ठाता हिताऽनसूयकः पुरुषो बुद्धिमत्त्वेन परिगण्यत इति।

**भाषा—**हे भरतकुलश्रेष्ठ ! पण्डितलोग सत्कर्म मे रुचि रखते है, उन्नति के कार्यों को करते हैं तथा भलाई करनेवालों में दोष नही निकालते ॥ ३० ॥

**न हृष्यत्यात्मसम्माने नावमानेन तप्यते ।**
**गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ३१ ॥**

**अन्वयः—**यः आत्मसम्माने न हृष्यति, अवमानेन न तप्यते, ( अथ च ) गाङ्गः ह्रदः इव अक्षोभ्यः ( भवति ), सः पण्डितः उच्यते ।

**अर्थः—नेति** । यः=पुरुषः, आत्मसम्माने आत्मनः=स्वस्य सम्मानः=आदरः तत्र, न हृष्यति=न हर्षं प्रकाशयति, अवमानेन=अवज्ञया तिरस्कारेणेत्यर्थः, न तप्यते=सन्तप्तो न भवति क्रोधं नादत्त इत्यर्थः, अथच=किञ्च, गाङ्गः=गङ्गासम्बन्धी, ह्रदः इव, अक्षोभ्यः=अविचाल्यश्च भवति, सः=पुरुषः, पण्डितः उच्यते=पण्डितशब्देन सम्बोध्यते।

**भावार्थः—**प्रशंसायामामोदं निन्दायां खेदमप्यननुभवन्निव यः स्थिरप्रकृतिर्दृश्यते, तं लोके पण्डित इति जना ब्रुवते ।

**भाषा—**अपना आदर होने पर फूल नहीं जाता तथा अनादर होने पर दुःखी नहीं होता ( इस प्रकार ) जो पुरुष गङ्गाजी के कुण्ड के समान क्षुब्ध ( चञ्चल ) नहीं होता ( अर्थात् स्थिर रहता है ) वह पण्डित कहलाता है ॥ ३१ ॥

**तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।**
**उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ३२ ॥**

**अन्वयः**—सर्वभूतानां तत्त्वज्ञः सर्वकर्मणां योगज्ञः मनुष्याणाम् उपायज्ञः नरः पण्डितः उच्यते

**अर्थः—तत्त्वज्ञ इति** । सर्वभूतानां सर्वाणि=सम्पूर्णानि च तानि भूतानि=प्राणिनः जगदादिपदार्था वा तेषां, तत्त्वज्ञः तत्त्वं=विनाशित्वं जानाति=वेत्तीति, उत्पत्तिमतो वस्तुनो विनाशावश्यम्भावित्वात् , सर्वकर्मणां सर्वाणि च तानि कर्माणि च सर्वकर्माणि तेषां=सर्वकार्याणां, योगज्ञः योगम्=उपायं रचनाविधिमिति यावत् , 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः, जानाति=वेत्तीति योगज्ञः, मनुष्याणां=मानवानां मध्ये मनुष्येष्वित्यर्थः, 'यतश्च निर्धारणम्' इति षष्ठी उपायज्ञः=युक्तिप्रदर्शकः, 'इगुपधज्ञाप्रीकिरः कः' इति तत्त्वज्ञादिषु त्रिषु प्रयोगेषु कप्रत्ययः, नरः=पुरुषः, पण्डितः उच्यते=पण्डितनाम्ना व्यवह्रियते ।

**भावार्थः—**जगतस्तत्स्थवस्तुजातस्य विनाशित्वं सर्वविधकार्यजातोपायविधित्वं मनुष्येषु युक्तिप्रदर्शकत्वं च पण्डितस्य लक्षणं ज्ञेयम् ॥

**भाषा—**सब जीवों की असलियत को जाननेवाला, सब कार्यों के करने का ढंग जाननेवाला तथा मनुष्यों में ( सबसे बढ़कर ) उपाय जाननेवाला पुरुष पण्डित कहलाता है ॥ ३२ ॥

**प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।**
**आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ ३३ ॥**

**अन्वयः—**यः प्रवृत्तवाक् चित्रकथः ऊहवान् प्रतिभानवान् ग्रन्थस्य आशु वक्ता च (अस्ति) सः पण्डितः उच्यते ।

**अर्थः—प्रवृत्तवागिति ।** यः=पुरुषः, प्रवृत्तवाक् प्रवृत्ता=सततगामिनी वाक्=वाणी यस्य सः अस्खलितवचन इति यावत्, चित्रकथः चित्राः=विचित्राः कथाः=पुराणेतिहासवार्ता यस्य तथाभूतः नानेतिहासाभिज्ञ इत्यर्थः, ऊहवान्=तर्कवान्, 'अध्याहारस्तर्क ऊह' इत्यमरः, प्रतिभानवान्=प्रतिभावान्, ग्रन्थस्य=निबन्धतात्पर्यस्य, आशु=शीघ्रं, वक्ता=बोधयिता च अस्ति, सः=पुरुषः पण्डितः=ज्ञानी, उच्यते=गद्यते ।

**भावार्थः—**अस्खलितवचननानेतिहासज्ञानतार्किकत्वप्रतिभावत्त्वग्रन्थमार्मिकत्वं लक्षणं पण्डितस्येति ॥

**भाषा—**जिसकी वाणी कहीं रुकती नहीं, जिसकी बातें विचित्र होती हैं, जो तर्क करने में निपुण तथा प्रतिभाशाली होता है और जो ग्रन्थ का अर्थ शीघ्र कह डालता है, वह पण्डित कहलाता है ॥ ३३ ॥

**श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।**
**असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ ३४ ॥**

**अन्वयः—**यस्य श्रुतं प्रज्ञानुगं, प्रज्ञा च श्रुतानुगैव ( विद्यते ), असम्भिन्नार्यमर्यादः सः पण्डिताख्यां लभेत ।

**अर्थः—श्रुतमिति ।** यस्य=पुरुषस्य, श्रुतं=शास्त्रश्रवणं, प्रज्ञानुगं=बुद्ध्यनुसारि, प्रज्ञा=बुद्धिश्च श्रुतानुगा अनुगच्छतीति अनुगा श्रुतस्य अनुगा श्रुतानुगा=शास्त्रानुसारिण्येव, विद्यते=वर्तते, असम्भिन्नार्यमर्यादः न सम्भिन्ना=अतिक्रान्ता, आर्याणां=सत्पुरुषाणां, मर्यादा=स्थितिर्येन सः तथाभूतः, सः=नरः, पण्डिताख्यां=पण्डित इत्येवं रूपां पदवीं, लभेत=प्राप्नुयात् ।

**भावार्थः—**य आर्यमर्यादया वर्तमानः शास्त्रानुसारिणीं बुद्धिं धत्ते, बुद्ध्यनुसारं च शास्त्रमाकलयति न तु व्याकुलयति, सोऽत्र पण्डितपदवीयोग्यः ॥

**भाषा—**जिसकी विद्या बुद्धि का अनुसरण करती है तथा बुद्धि विद्या का अनुसरण करती है और जो शिष्टपुरुषों की मर्यादा का उल्लङ्घन नहीं करता वह 'पण्डित' नाम पाने का अधिकारी है ॥ ३४ ॥

**अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।**
**अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३५ ॥**

**अन्वयः**—अश्रुतः समुन्नद्धः दरिद्रश्च महामनाः अकर्मणा अर्थान् प्रेप्सुश्च ( नरः ) बुधैः मूढः इति उच्यते ।

**अर्थः**—कीदृशो मनुष्यः पण्डितो भवतीति कतिभिश्चित् पद्यैरुपवर्ण्य साम्प्रतं मूढः किमाकारो भवतीति विवेक्तुमुपक्रमते 'अश्रुत' इत्यादिभिर्दशभिः पद्यैः—**अश्रुत इति ।** अश्रुतः नास्ति श्रुतं=शास्त्रं यस्मिन् सः, समुन्नद्धः=अतिक्रान्तमर्यादः, दरिद्रश्च=दुर्गतोऽपि, महामनाः महत्त्वाकाङ्क्षी, अकर्मणा=दुष्कर्मणा नीचकृत्येनेत्यर्थः, अर्थान्=द्रव्याणि पदार्थान् वा, प्रेप्सुश्च=प्राप्तुमिच्छुश्च, नरः, बुधैः=विद्वद्भिः, मूढः=मूर्खः, उच्यते=कथ्यते । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु, अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरौ ।

**भावार्थः**—पूर्वोक्तैः पद्यैरुपवर्ण्य पाण्डित्यं तदभावं च दुर्योधनादिषु राजविश्वासपात्रे प्रदर्श्य तावताऽप्यतृप्तो विदुरस्तेषु मौर्ख्यमेवास्तीति दर्शयितुकामो मूर्खलक्षणमुपक्रम्य सामान्यतः शास्त्रानभिज्ञत्वौद्धत्यदारिद्र्योच्चाकाङ्क्षित्वकुकर्मद्रव्याप्तिकामत्वं मूढस्य लक्षणं प्रत्यपादयत् ॥

**भाषा**—विना पढ़े ही गर्व करनेवाले, दरिद्र होते हुए भी बड़ा हौसला रखनेवाले और विना काम किये ही पदार्थों को पाने की इच्छा करनेवाले पुरुष को पण्डित लोग मूर्ख कहते हैं॥३५॥

**स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।**
**मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३६ ॥**

**अन्वयः**—यः स्वम् अर्थं परित्यज्य परार्थन् अनुतिष्ठति, यश्च मित्रार्थे मिथ्या आचरति, सः मूढः उच्यते ।

**अर्थः—स्वमिति ।** यः=पुमान् , स्वं=स्वकीयम् , अर्थं=प्रयोजनं कार्यमित्यर्थः, परित्यज्य=विहाय, परार्थम्=अन्यार्थम् , अनुतिष्ठति=कुरुते, यश्च=पुरुषः मित्रार्थे=सुहृदर्थं, मिथ्या=असत्यम् , आचरति=कुरुते, सः=नरः, मूढः=मूर्खः, उच्यते=निगद्यते ।

**भावार्थः**—स्वार्थत्यागपूर्वकपरार्थानुष्ठाता मित्रार्थं वस्तुतोऽव्यवहरन्नपि तथा-व्यवहारप्रदर्शकश्च मूर्खो ज्ञेयः ।

**भाषा**—जो अपना काम छोड़ कर दूसरे का काम करने लगता है तथा मित्र के साथ असत्य का व्यवहार करता है, वह मूर्ख कहलाता है ॥ ३६ ॥

**अकामान् कामयति यः कामयानान् परित्यजेत् ।**
**बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३७ ॥**

**अन्वयः**—यः अकामान् कामयति, कामयानान् परित्यजेत् , यः च बलवन्तं द्वेष्टि, (बुधाः) तं मूढचेतसम् आहुः ।

**अर्थः—आकामानिति ।** यः=पुरुषः, अकामान्=भक्तिहीनान् , कामयति=इच्छति, कामयानान्=भक्तियुक्तान् , अत्र मुगभाव आर्षः, परित्यजेत्=मुञ्चेत् वर्तमानार्थे लिङ् , मुञ्चती-

-त्यर्थः, यश्च=पुमान्, बलवन्तं=बलिनं, द्वेष्टि=वैरायते, बुधाः, तं=नरं, मूढचेतसं=मुग्धहृदयम् अज्ञमिति यावत्, आहुः=कथयन्ति । ब्रूधातोः 'णलः पञ्चानामादित आहो ब्रुवः' इति शास्त्रेणाहादेशः ।

**भावार्थः**—भक्तिहीनाङ्गीकारो भक्तिमदङ्गीकारो बलवद्विरोधश्च येन क्रियते स मूढपदवाच्यो भवति ।

**भाषा**—जो न चाहनेवालो को चाहता है और चाहनवालों को छोड़ देता है तथा बलवान् से शत्रुता करता है, उसे मूढचित्तवाला (अविवेकी) कहते हैं ॥ ३७ ॥

**अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।**
**कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३८ ॥**

**अन्वयः**—( यः ) अमित्रं मित्रं कुरुते, मित्रं द्वेष्टि हिनस्ति च, दुष्टं कर्म च आरभते, तं मूढचेतसं ( बुधाः ) आहुः ।

**अर्थः—अमित्रमिति** । यः=पुरुषः, अमित्रं=शत्रुं, 'द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः' इत्यमरः, मित्रं=सखायम्, 'अथ मित्रं सखा सुहृत्' इत्यमरः, कुरुते=विधत्ते, मित्रं=सुहृदं, द्वेष्टि=असूयति, हिनस्ति च=नाशयति च, दुष्टं=परोद्वेगकरं नीचमिति यावत्, कर्म=कार्यं च, आरभते=प्रारभते, तं=नरं, मूढचेतसं मूढं=मुग्धं ज्ञानशून्यं चेतो यस्य हृदयं यस्य तथाभूतं, 'चित्तं तु चेतो हृदयम्' इत्यमरः, बुधः, आहुः=प्रणिगदन्ति ।

**भावार्थः**—असहृदयेषु मैत्रीं सहृदयेषु सद्वेषं हिंसनं दुष्कृत्यारम्भं च कुर्वाणो नरः प्राज्ञैर्मूढनाम्ना गण्यते ।

**भाषा**—( जो ) शत्रु को मित्र बनाता है, मित्र से द्रोह करता है और उसे पीड़ा पहुँचाता है तथा बुरे काम को शुरू करता है, उसे मूढ़चित्तवाला ( अविवेकी ) कहते हैं ॥ ३८ ॥

**संसारयति कृत्यानि सर्वत्र विचिकित्सते ।**
**चिरं करोति क्षिप्रार्थे समूढो भरतर्षभ ! ॥ ३९ ॥**

**अन्वयः**—( यः ) कृत्यानि सारयति, सर्वत्र विचिकित्सते, क्षिप्रार्थे चिरं करोति च, हे भरतर्षभ ! सः मूढः ( अस्ति ) ।

**अर्थः—संसारयतीति** । यः, कृत्यानि=कार्याणि, संसारयति=प्रपञ्चयति भृत्यादिद्वारा प्रवर्तयति, सर्वत्र=सर्वस्मिन्नपि विषये, विचिकित्सते=संशेते, 'विचिकित्सा तु संशयः' इत्यमरः, क्षिप्रार्थे=द्रुतमनुष्ठेये कार्ये, चिरं करोति=विलम्बते च, हे भरतर्षभ । धृतराष्ट्र !, सः, मूढः= मूर्खोऽस्ति ।

**भावार्थः**—स्वस्य कार्यानुष्ठानालस्यं; सर्वत्र संशयात्मता, विलम्बकारित्वं चेति मूर्खधर्माः ॥

**भाषा**—हे भरतकुलश्रेष्ठ ! ( जो, व्यर्थ ही ) कामों को फैलाता है, सब जगह सन्देह करता है तथा शीघ्रता के काम में देर करता है, वह मूर्ख है ॥ ३९ ॥

**श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।**
**सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ४० ॥**

**अन्वयः**—( यः ) पितृभ्यः श्राद्धं न ददाति, दैवतानि न अर्चति, सुहृत् मित्रं च न लभते, ( बुधाः ) तं मूढचेतसम् आहुः ।

**अर्थः—श्राद्धमिति ।** यः, पितृभ्यः=अग्निष्वात्तादिभ्यः, श्राद्धं=श्रद्धया क्रियमाणे कर्मणि दीयमानं वस्तुजातं, न ददाति=न प्रयच्छति, दैवतानि=देवान् , न अर्चति=न पूजयति, सुहृत् शोभनं=सुन्दरं हृदयं=मनो यस्य तत् , मित्रं=सखायं च, न लभते=न प्राप्नोति, बुधाः, तं=नरं, मूढचेतसं=ज्ञानशून्यम् , आहुः=कथयन्ति । अस्य पद्यस्य प्रथमे पादे नवा-ऽक्षराणि सन्ति ।

**भावार्थः**—अश्राद्धकर्ता देवापूजकः सन्मित्राभाववान् पुमान् मूर्खेषु गण्यते ॥

**भाषा**—( जो ) न पितरों का श्राद्ध करता है, न देवताओं की पूजा करता है, न सहृदय ( शुद्धहृदयवान् ) मित्र को प्राप्त करता है या प्राप्त करने की चेष्टा करता है, उसे मूढ़चित्तवाला ( अविवेकी ) कहते हैं ॥ ४० ॥

**अनाहूतः प्रविशति अपृष्टो वहु भाषते ।**
**अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ४१ ॥**

**अन्वयः**—मूढचेताः नराधमः अनाहूतः ( सन् ) प्रविशति, अपृष्टः बहु भाषते, अविश्वस्ते विश्वसिति च ।

**अर्थः—अनाहूत इति ।** मूढचेताः=मुग्धमनाः, नराधमः=दुर्जनः, अनाहूतः सन्=अना-मन्त्रितोऽपि, प्रविशति=समागच्छति, अपृष्टः=अकृतप्रश्नोऽपि, बहु=बहुलं यथा स्यात्तथा, भाषते=वक्ति, अविश्वस्ते=विश्वासानर्हे पुरुषे, विश्वसिति=विस्रम्भं कुरुते च 'समौ विस्रम्भ-विश्वासौ' इत्यमरः । अत्र प्रथमद्वितीयपादयोः सन्धावसन्धिरार्षः ।

**भावार्थः**—स किल मूढ एव, यः खलु अनिमन्त्रितोऽपि यत्र क्वापि गच्छेत् , अननुयुक्त एव वा निरर्थकं बहु प्रलपेत् , अपात्रे च विश्वासं विदध्यात् ॥

**भाषा**—मूढचित्तवाला ( अविवेकी ) नीच पुरुष विना बुलाये ही भीतर चला आता है. बिना पूछे ही बोलता है तथा अविश्वसनीय ( बेईमान ) आदमी पर विश्वास करता है ॥ ४१ ॥

**परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।**
**यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ४२ ॥**

**अन्वयः**—( यः ) नरः स्वयं तथा वर्तमानः परं दोषेण क्षिपति, अनीशानः ( सन् ) क्रुध्यति च, सः मूढतमः ।

**अर्थः—परमिति ।** यः, नरः=पुरुषः, स्वयं, तथा=दोषपूर्णः, वर्तमानः=सन् , परम्= इतरं, दोषेण=अपराधेन, क्षिपति=आक्षिपति, अनीशानः सन्=अप्रभुः सन् , क्रुध्यति=व्यर्थं कुप्यति च, सः, मूढतमः=महामूर्खः, इति ज्ञेयम् ।

**भावार्थः**—स्वयं दोषवानपि तद्दोषाक्षेपमन्यस्मिन् विदधानः कर्तृत्वहीनतया कुपितश्च नरः परममूर्ख इति ॥

**भाषा—**जो स्वयं दोष युक्त होने पर ( भी ) दूसरे पर दोषारोपण करता है और असमर्थ होते हुए ( व्यर्थ का ) क्रोध करता है, वह मनुष्य सब से बड़ा मूर्ख है ॥ ४२ ॥

**आत्मना बलमज्ञाय धर्मार्थपरिवर्जितम् ।**
**अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ४३ ॥**

**अन्वयः—**( यः ) आत्मनः बलम् अज्ञाय नैष्कर्म्यात् धर्मार्थपरिवर्जितम् अलभ्यम् इच्छन् ( वर्तते, सः ) इह मूढबुद्धिः उच्यते ।

**अर्थः—आत्मन इति ।** यः=पुरुषः, आत्मनः=स्वस्य, बलं=सैन्यं शक्तिं वा, अज्ञाय=अविदित्वा, नैष्कर्म्यात्=अनुद्योगात्, धर्मार्थपरिवर्जितं धर्मश्च अर्थश्च धर्मार्थौ ताभ्यां परिवर्जितं धर्मः=सदाचारः अर्थः=पुरुषार्थः, ताभ्यां परिवर्जितं=हीनम्, अलभ्यं=लब्धुमशक्यमपि वस्तु, इच्छन्=अभिलषन् वर्तते, सः, इह=संसारे, मूढबुद्धिः मूढा=मन्दा, बुद्धिः=मतिर्यस्य तथाभूतः, उच्यते=आख्यायते ।

**भावार्थः—**आत्मबलाज्ञानपूर्वकधर्मार्थशून्यालभ्यवस्तुप्राप्तीच्छा किञ्चिदप्यकुर्वाणस्य मौर्ख्यं द्योतयति ॥

**भाषा—**अपने बल को न समझकर, बिना काम किये ही, धर्म और अर्थ से विरुद्ध तथा न पाने योग्य वस्तु की इच्छा करने वाला पुरुष इस संसार में मूढ़बुद्धिवाला कहा जाता है ॥४३॥

**अशिष्यं शास्ति यो राजन्! यश्च शून्यमुपासते ।**
**कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ४४ ॥**

**अन्वयः—**हे राजन्! यः अशिष्यं शास्ति, यश्च शून्यम् उपासते, यश्च कदर्यं भजते, ( बुधाः ) तं मूढचेतसम् आहुः ।

**अर्थः—अशिष्यमिति ।** हे राजन्! धृतराष्ट्र!, यः=पुरुषः, अशिष्यं=शासनानर्हं, शास्ति=उपदिशति, यश्च, शून्यम्=लक्ष्यहीनं यथा स्यात्तथा, उपासते=उपास्ते सेवते कर्तुरनुरोधात् 'उपास्ते' इत्येकवचनस्थाने 'उपासते' इति बहुवचनान्तः प्रयोग आर्षः, यश्च, कदर्यं=कृपणम् अदातारमित्यर्थः, 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः' इत्यमरः भजते=सेवते, बुधाः, तं=नरं, मूढचेतसं=मूर्खम्, आहुः=कथयन्ति ।

**भावार्थः—**शासनायोग्यशासनं लक्ष्यहीनोपासनं कृपणाराधनं च मूर्खचिह्नम् ॥

**भाषा—**हे राजन्! जो अनधिकारी को उपदेश देता है, गुणहीन की उपासना करता है और कृपण का आश्रय लेता है उसे मूढचित्तवाला ( अविवेकी ) कहते हैं ॥ ४४ ॥

**अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।**
**विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ ४५ ॥**

**अन्वयः—**यः महान्तम् अर्थं विद्याम् ऐश्वर्यम् एव वा आसाद्य असमुन्नद्धः ( सन् ) विचरति, सः पण्डितः उच्यते ।

**अर्थः—**मूर्खलक्षणं निरूप्य भूयोऽपि पण्डितं लक्षयन्नाह—**अर्थमिति ।** यः=नरः,

महान्तं=विपुलम्, अर्थं=धनं, विद्यां=ज्ञानम्, ऐश्वर्यमेव=सम्पत्तिमपि वा, आसाद्य=प्राप्य, असमुन्नद्धः=अगर्वितः सन्, 'अनद्धिषु समुन्नद्धौ पण्डितम्मन्यगर्वितौ' इत्यमरः, विचरति=तिष्ठति, सः=नरः, पण्डितः=विद्वान्, उच्यते=कथ्यते ।

**भावार्थः**—धनविद्याराज्यादिकं लब्ध्वापि यो विनीतस्तिष्ठति, स किल पण्डितः ॥

**भाषा**—बड़ी वस्तु, विद्या तथा ऐश्वर्य को पाकर जो इठलाता नहीं फिरता, वह पण्डित कहलाता है ॥ ४५ ॥

**एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम् ।**
**योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ४६ ॥**

**अन्वयः**—यः भृत्येभ्यः असंविभज्य एकः सम्पन्नम् अश्नाति, शोभनं वासश्च वस्ते, ततः नृशंसतरः कः अस्ति ।

**अर्थः**—भूयो मूर्खं लक्षयति—**एक इति** । यः=पुरुषः, भृत्येभ्यः=दासेभ्यः सेवकेभ्यः 'भृत्ये दासेरदासेय' इत्यमरः, असंविभज्य=सम्यग् विभागमकृत्वा, एकः=एकाकी सन्, सम्पन्नं=परिपूर्णं स्वाद्विति यावत्, अश्नाति=भुङ्क्ते, शोभनं=सुन्दरं, 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्' इत्यमरः, वासः=वस्त्रं च वस्त्रमाच्छादनं वासः' इत्यमरः, वस्ते=परिधत्ते, ततः=तस्मान्नरात्, नृशंसतरः=क्रूरतरः, 'नृशंसो घातुकः क्रूरः' इत्यमरः, कः=पुरुषः अस्ति ? न कोऽपीत्यर्थः ।

**भावार्थः**—स्वाश्रितेभ्यो दानमन्तरा वस्तूपभोगकरणं महामूर्खलक्षणं ज्ञेयम् ॥

**भाषा**—जो मनुष्य नौकरों को विना बांटे ही बढ़िया भोजन कर लेता है तथा सुन्दर कपड़े पहन लेता है, उससे बढ़ कर क्रूर कौन होगा ? ॥ ४६ ॥

**एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।**
**भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ४७ ॥**

**अन्वयः**—एकः पापानि कुरुते, महाजनः फलं भुङ्क्ते, भोक्तारः विप्रमुच्यन्ते, कर्ता दोषेण लिप्यते ।

**अर्थः**—**एक इति** । एकः=कश्चिदेकः पुरुषः, पापानि=दुराचरणानि, कुरुते=करोति, महाजनः=विशिष्टः कश्चिदपरः, फलं=पापपरिणामं, भुङ्क्ते=भक्षयति, अनुभवतीत्यर्थः, भोक्तारः=उपभोगकर्तारः, विप्रमुच्यन्ते=मुक्तिमासादयन्ति, कर्ता=पापनां कारकश्च, दोषेण=पापाचरणरूपेण अपराधेन, लिप्यते=युक्तो भवति, पापभाग् भवतीति ।

**भावार्थः**—पापिकृतस्य दुष्कर्मणः फलमन्येऽपि लभन्ते, किन्तु तत्कर्मदोषभाक् तु स पापात्मैवेति दुष्कर्मकर्तापि मूर्खकोटौ प्रवेशयोग्य इति ॥

**भाषा**—( मनुष्य ) अकेले पाप करता है और बहुत से लोग उससे मौज उड़ाते हैं। मौज उड़ानेवाले तो छूट जाते हैं और ( पाप ) करनेवाला दोष का भागी होता है ॥ ४७ ॥

**एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।**
**बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ४८ ॥**

**अन्वयः—**धनुष्मता मुक्तः इषुः एकं हन्यात् न हन्याद्वा, ( परं ) बुद्धिमता उत्सृष्टा बुद्धिः सराजकं राष्ट्रं हन्यात् ( एव ) ।

**अर्थः—**सद्बुद्धित्यागे राज्यनाशो भवतीति दर्शयति—**एकमिति** । धनुष्मता=धानुष्केण, 'धन्वी धनुष्मान् धानुष्क' इत्यमरः, मुक्तः=लक्ष्यमुद्दिश्य क्षिप्तः, इषुः=बाणः, एकं=शत्रुं, हन्यात्=नाशयेत् , न हन्याद्वा=अथवा नैव नाशयेत् , परं=किन्तु, बुद्धिमता=मतिमता पुरुषेण, उत्सृष्टा=त्यक्ता किञ्चिदुद्दिश्य कथमपि प्रयुक्ता, बुद्धिः=मतिः, सराजकं=राजसहितं, राष्ट्रं=राज्यं, हन्यात्=नाशयेदेव ।

**भावार्थः—**धनुर्धारिणो बाणः कदाचिल्लक्ष्यं हन्ति कदाचिन्नापि, किन्तु बुद्धिमत्पुरुषप्रयुक्ता बुद्धिस्तु न केवलं राज्यम् , अपितु राजानमपि विनाश्यैव शान्तिमुपैति । तस्माद् बुद्धिमद्भिरस्थाने तत्प्रयोगो न करणीय इति तात्पर्यम् ॥

**भाषा—**धनुर्धर द्वारा छोड़ा गया बाण किसी एक को भी मारे या न मारे, परन्तु बुद्धिमान् द्वारा प्रयुक्त की गई बुद्धि राजा समेत राष्ट्र का नाश कर सकती है ॥ ४८ ॥

**एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।**
**पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥ ४९ ॥**

**अन्वयः—**( त्वम् ) एकया द्वे विनिश्चित्य चतुर्भिः त्रीन् वशे कुरु, पञ्च जित्वा षट् विदित्वा सप्त हित्वा सुखी भव ।

**अर्थः—**नीतिसम्मतं कर्तव्यमुपदिशति—**एकयेति** । त्वं=भवान् , एकया=केवलया बुद्ध्या, द्वे=कर्तव्याकर्तव्ये, विनिश्चित्य=निर्णीय, चतुर्भिः=सामाद्युपायैः, 'सामदाने भेददण्डा'विति कोशात् , त्रीन्=मित्रोदासीनशत्रून् , वशे कुरु=वशय, पञ्च=ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि वा, जित्वा=विजित्य, षट्=गुणान् 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षट् गुणाः' इति कोशोक्तान् , विदित्वा=ज्ञात्वा, सप्त=स्त्रीप्रभृतीन् दोषान् स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च ॥' इत्युक्तान् , हित्वा=त्यक्त्वा, सुखी=प्राप्तसुखः, भव । अध्यात्मपक्षेऽपि पद्यस्यास्य व्याख्या युज्यत इति सापि दर्श्यते, यथा—त्वम् एकया=बुद्ध्या द्वे=नित्यानित्ये, विनिश्चित्य, चतुर्भिः=शमदमोपरमश्रद्धाभिः, त्रीन्=कामक्रोधलोभान् , वशे कुरु, पञ्च=इन्द्रियाणि, जित्वा, षट्=अशनायापिपासाशोकमोहजरामृत्यून् , विदित्वा, सप्त=इन्द्रियपञ्चकं बुद्धिमनसी चेति सप्त, हित्वा, सुखी भव=शान्तिं भज ।

**भावार्थः—**बुद्ध्या कार्याकार्ये निर्णीय सामादिभिर्मित्रादीन् वशीकृत्य जितेन्द्रियः सन्धिविग्रहादियथार्थज्ञानवांश्च दोषरहितः सुखी भवतीति तथैव भवितुं भवानपि यततामिति धृतराष्ट्रं प्रति विदुरकथनम् ॥

**भाषा—**एक ( बुद्धि ) से दो ( कार्य और अकार्य ) को निश्चय करके चार ( साम, दान,

भेद, दण्ड ) से तीन ( मित्र, शत्रु तथा उदासीन ) को वश में करो। पांच ( इन्द्रियों को जीत-कर, छः ( सन्धि, विग्रह, यान, आसन, द्वैधीभाव और संश्रय ) गुणों को जान कर तथा सात ( स्त्री, द्यूत, मृगया, मद्य, कठोर वचन, दण्ड की कठोरता और अन्याय से धनका उपार्जन ) को छोड़ कर सुखी हो ओ ॥ ४९ ॥

**एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।**
**सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ ५० ॥**

**अन्वयः—**विषरसः एकं हन्ति, शस्त्रेण च एकः वध्यते, मन्त्रविप्लवः सराष्ट्रं सप्रजं राजानं हन्ति ।

**अर्थः—**रहस्योद्भेदो राजहानिकर इति कथयति—**एकमिति ।** विषरसः=विषं=गरलमेव रस इति विषरसः 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः, एकं=पुरुषं, हन्ति=नाशयति, शस्त्रेण=आयु-धेन च, एकः=एक एव, वध्यते=हन्यते, एकसमयावच्छेदेनेत्युभयत्रान्वेति, मन्त्रविप्लवः मन्त्र-स्य=रहस्यस्य विप्लवः=भेदः नाश इति यावत्, सराष्ट्रं=सराज्यं, सप्रजं=सजनं ससन्ततिं वा, 'प्रजा स्यात् सन्ततौ जने' इत्यमरः, राजानं=नृपं, हन्ति=विनाशयति ।

**भावार्थः—**विषेण शस्त्रेण च सकृदेक एव विनाश्यते, किन्तु मन्त्रोद्घाटनं समूलं भूपमु-न्मूलयतीति मन्त्ररक्षा सुतरामावश्यिका ।

**भाषा—**विष का रस एक ( पीनेवाले ) को मारता है और शस्त्र से एक ही मारा जाता है, किन्तु मन्त्र का फूटना राष्ट्र और प्रजा के सहित राजा का नाश कर डालता है ५० ॥

**एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।**
**एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ५१ ॥**

**अन्वयः—**एकः स्वादु न भुञ्जीत, एकश्च अर्थान् न चिन्तयेत्, एकः अध्वानं न गच्छेत्, एकः सुप्तेषु न जागृयात् ।

**अर्थः—**साधारणां नीतिं प्रकाशयति—**एक इति ।** एकः=एकाकी पुरुषः, स्वादु=मिष्टं वस्तु, न भुञ्जीत=नाश्नीयात्, आत्मीयेभ्यस्तनो दत्त्वैव भक्षयेदित्यर्थः, एकश्च=अद्वितीयश्च, अर्थान्=द्रव्याणि विषयान् वा, न चिन्तयेत्=न विचारयेत्, अर्थोपभोगे न कञ्चनापि भागिनं कुर्यामिति चेतसि नानयेत्, विषयविचारमन्येन सह कुर्यादिति च यावत्, एकः=असहायः, अध्वानं=मार्गम्, 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः, न गच्छेत्=न यायात्, मार्गद्वयापाते आवश्यककार्योपस्थितौ च सहायकान्तरावश्यकताप्रतीतेरिति, एकः=पुमान्, सुप्ते-षु=निद्रितेषु स्ववयःसु सर्वेषु, न जागृयात्=जागरणं नाचरेत्, कृते जागरणे तद्विषये संशयो-त्पत्तिसम्भवात् ।

**भावार्थः—**नैकाकिना भोजनार्थचिन्तनदेशान्तरगमनजागरणानि कार्याणीति ।

**भाषा—**अकेला स्वादिष्ट भोजन न करे, अकेला किसी विषय का विचार न करे, अकेला रास्ता न चले और अकेला सोये हुए लोगों में न जागे ॥ ५१ ॥

**एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।**
**सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ५२ ॥**

**अन्वयः**—हे राजन् ! यत् न अवबुध्यसे, तत् पारावारस्य नौरिव स्वर्गस्य सोपानम् अद्वितीयम् एकम् एव सत्यम् ( अस्ति ) ।

**अर्थः**—सत्यस्य प्रशंसामाह—**एकमिति** । हे राजन् !=धृतराष्ट्र ! यत्=सत्यं तत्त्वं, त्वं. न अवबुध्यसे=न जानासि, तत् , पारावारस्य=समुद्रस्य, 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' इत्यमरः नौरिव=तरणिरिव पोत इवेत्यर्थः, 'स्त्रिया नौस्तरणिस्तरिः' इत्यमरः, स्वर्गस्य=दिवः, सोपानम्=आरोहणम् , 'आरोहणं स्यात् सोपानम्' इत्यमरः, अद्वितीयं=द्वितीयरहितं भेदरहितमित्यर्थः, एकमेव सत्यम्=सत्यमेवैकं तदस्तीति ।

**भावार्थः**—एकं सत्यमेव स्वर्गप्राप्तिकरणं, तत्त्वयाऽवश्यं ज्ञेयमिति ।

**भाषा**—हे राजन् ! जिस प्रकार समुद्र के पार जाने के लिए नाव ही एकमात्र साधन है, उसी प्रकार स्वर्ग को पाने के लिये एक सत्य ही अनुपम सोपान ( सीढ़ी ) है, जिसे कि आप नहीं समझ रहे हैं ॥ ५२ ॥

**एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।**
**यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५३ ॥**

**अन्वयः**—क्षमावताम् एकः दोषः उपपद्यते, द्वितीयः न, यत् जनः क्षमया युक्तम् एनम् अशक्तं मन्यते ।

**अर्थः**—क्षमागुणं दर्शयति—**एक इति** । क्षमावतां=शमवतां मध्ये, एकः=एक एव, दोषः=दुर्गुणः, उपपद्यते=उपलभ्यते, द्वितीयः=तद्भिन्नः, न=नोपपद्यते, यत्=यतः, जनः=लोकः, 'लोकस्तु, भुवने जने' इति कोशः, क्षमया=शान्त्या, युक्तं=सहितम् , एनं=नरम् , अशक्तं=दुर्बलं, मन्यते=जानाति ।

**भावार्थः**—क्षमाशीलं पुरुषं जना अशक्तं मन्यन्त इत्येष एवैको दोषः क्षमिषु, नान्य इति।

**भाषा**—क्षमाशील पुरुष को लोग असमर्थ समझते हैं, केवल यही एक दोष क्षमाशील पुरुषों में मिलता है दूसरा नहीं ॥ ५३ ॥

**सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।**
**क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ।**
**क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ॥ ५४ ॥**

**अन्वयः**—सः अस्य दोषः न मन्तव्यः, हि क्षमा परमं बलम् ( अस्ति ) । हि क्षमा अशक्तानां गुणः, क्षमा शक्तानां भूषणं, क्षमा वशीकृतिः, लोके क्षमया किं न साध्यते ?

**अर्थः**—षट्पादोऽयं श्लोकः क्षमाप्रभावं वर्णयति—**सोऽस्येति** । सः=अशक्तिरूपः, अस्य=क्षमाशीलस्य पुंसः, दोषः=अपराधः, न मन्तव्यः=न ज्ञातव्यः, हि यस्मात्कारणात् , क्षमा=मर्षणं, परमम्=अत्यन्तं, बलं=सामर्थ्यम् अस्ति, हि=तथाहि, क्षमा=तितिक्षा, 'क्षान्तिस्तिति-

क्षा' इत्यमरः, अशक्तानां=दुर्बलानां, गुणः, क्षमा=सहनं, शक्तानां=बलवतां, भूषणम्=अलङ्कारः, क्षमा=सैव, वशीकृतिः=वशीकरणोपायः, लोके=संसारे, क्षमया=तितिक्षया, किं न साध्यते=किं न सम्पाद्यते ? अपितु क्षमया सर्वमेव सुसाधं भवतीति ।

**भावार्थः**—क्षमैव कचित् गुणः, कचिद्भूषणं, कचिद्वशीकरणं, कचिच्च बलमिति न सा दोषपदव्यवहार्या, तस्मात्तद्वानेव वरम् ॥

**भाषा**—लेकिन उसमे ( क्षमाशील पुरुष मे ) इसे ( असमर्थता के दोषारोपण को ) स्वीकार नहीं करना चाहिए क्योंकि क्षमा बहुत बड़ा बल है। क्षमा असमर्थों के लिए गुण है तथा समर्थों के लिये भूषण है। संसार मे क्षमा वशीकरणस्वरूप है। क्षमा से क्या नहीं सिद्ध होता ? ॥ ५४ ॥

**शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ।**
**अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ५५ ॥**

**अन्वयः**—यस्य करे शान्तिखड्गः, दुर्जनः ( तस्य ) किं करिष्यति ? अतृणे पतितः वह्निः स्वयम् एव उपशाम्यति ,

**अर्थः**—**शान्तिखड्ग इति ।** यस्य=पुरुषस्य, करे=हस्ते, 'बलिहस्तांशवः कराः' इति कोशः, शान्तिखड्गः शान्तिः=शम एव, खड्गः=असिः, अस्तीति शेषः, दुर्जनः=दुष्टः, तस्य=पुरुषस्य, किं करिष्यति=किं विधास्यति ? उदाहरणेन द्रढयति=अतृणे=तृणरहितप्रदेशे, पतितः=च्युतः, वह्निः=अग्निः, अग्निर्वैश्वानरो वह्नि'रित्यमरः, स्वयमेव=आत्मनैव अन्यकर्तृकोपायान्तराभावेऽपीति यावत्, उपशाम्यति=शान्तिमधिगच्छति ।

**भावार्थः**—अतृणपतितवह्न्युपशमदृष्टान्तेन शान्तचेतसो विषये दुर्जनस्याऽप्रसर इति ।

**भाषा**—जिस पुरुष के हाथ में शान्तिरूपी तलवार है, दुष्ट उसका क्या कर लेगा ? तृणरहित स्थान में गिरी हुई आग आप से आप बुझ जाती है ॥ ५५ ॥

**क्षमावान् परं दोषरात्मानं चैव योजयेत् ॥ ५६ ॥**

**अन्वयः**—अक्षमावान् दोषैः परम् आत्मानं च एव योजयेत् ।

**अर्थः**-**अक्षमावानिति ।** अक्षमावान्=अक्षान्तः, दोषैः=अवगुणैः, परम्=अन्यम्, आत्मानं चैव=आत्मानमपि, योजयेत्=संयोजयेत् ।

**भावार्थः**—असहनशीलस्तु स्वयं दोषी भूत्वा परमपि दूषयतीति तात्पर्यम् ॥

**भाषा**—क्षमाहीन पुरुष अपने को तथा औरों को दोषयुक्त कर देता है ॥ ५६ ॥

**एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।**
**विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५७ ॥**

**अन्वयः**—एकः धर्मः परं श्रेयः, एका क्षमा उत्तमा शान्तिः, एका विद्या परमा तृप्तिः, एका अहिंसा सुखावहा ।

**अर्थः**—**एक इति ।** एकः=श्रुत्युक्तः, धर्मः=आचारः, परम्=अत्यन्तं, श्रेयः=श्रेयस्करः

एका=केवला, क्षमा=अपराधेऽप्यप्रतीकारः, उत्तमा=समीचीना, शान्तिः=शमः, एका=पारलौकिकी, विद्या=ज्ञानं, परमा=विशिष्टा, तृप्तिः=सन्तोषः, एका, अहिंसा=जीवान्तर्दुःखोत्पादनाभावः, सुखावहा=कल्याणकारिणी।

**भावार्थः—**धर्मक्षमाविद्याऽहिंसानां श्रेयःशान्तिसन्तोषसुखावहत्वं परिणामः, अतस्तदुपासनं करणीयमिति॥

**भाषा—**धर्म ही परम कल्याण कारक है, क्षमा ही सब श्रेष्ठ शान्ति (को देनेवाली) है, विद्या ही सबसे बढ़ कर सन्तोष (देनेवाली) है और अहिंसा ही सुख देनेवाली है॥ ५७॥

**द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव।**
**राजानं चाऽविरोद्धारं ब्राह्मणं चाऽप्रवासिनम्॥५८॥**

**अन्वयः—**भूमि सर्पः बिलशयान् इव, अविरोद्धारं राजानम् अप्रवासिनं ब्राह्मणं च इमौ द्वौ ग्रसते।

**अर्थः—**अविरोद्धा राजा नोचित इति प्रकटयति—**द्वाविति**। भूमिः=भूः, सर्पः=भुजगः, बिलशयानिव=भेकादिजन्तूनिव, 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक् सर्पार्थे भवति, तथाच 'दन्दशूको बिलेशयः' इत्यमरः, अविरोद्धारं=विरोधमकुर्वाणं राजानं=नृपतिम्, अप्रवासिनं=सर्वदैवैकत्र निवासिनं, ब्राह्मणं विप्रं चेति, इमौ=पूर्वोक्तौ, द्वौ=उभौ, ग्रसते=कवलीकरोति, आत्मसात्करोतीत्यर्थः।

**भावार्थः—**यथा सर्पो बिलस्थितानन्यान् जन्तून् अपसारयति, तथैव भूमी राजानमविरोधिनं प्रवासानतुरक्तं विप्रं च आच्छादयति, नोदेतुं तौ प्रभवेतामित्याशयः॥

**भाषा—**बिल में सोने (रहने) वालों को साँप की तरह यह पृथ्वी, (शत्रु से विरोध न करनेवाले राजा तथा परदेश सेवन न करनेवाले ब्राह्मण, इन दोनों को खा डालती है॥ ५८॥

**द्वे कर्मणी नरः कुर्वन्नस्मिल्लोके विरोचते।**
**अब्रुवन् परुषं किञ्चिदसतोऽनर्चयंस्तथा॥ ५९॥**

**अन्वयः—**नरः अस्मिन् लोके किञ्चत् परुषम् अब्रुवन् तथा असतः अनर्चयन् (इति) द्वे कर्मणी कुर्वन् (सन्) विरोचते।

**अर्थः— द्वे इति।** नरः=जनः, अस्मिन्=एतस्मिन्, लोके=भुवने, किञ्चित्=किमपि, परुषं=क्रूरं यथा स्यात्तथा, अब्रुवन्=अभाषमाणः, तथा=तेनैव प्रकारेण, असतः=असज्जनान् दुष्टानिति यावत्, अनर्चयन्=अपूजयन्, इत्येते, द्वे कर्मणी=कार्यद्वयं, कुर्वन्=कुर्वाणः सन्, विरोचते=विराजते शोभत इत्यर्थः।

**भावार्थः—**मनुष्योऽत्र लोके सर्वदा मृदु वचो व्यवहरन् मान्यान् सम्मानयंश्च प्रतिष्ठां लभत इति॥

**भाषा—**किसी प्रकार का कठोर वचन न बोलना तथा असज्जनों का आदर न करना—इन दो कामों को करता हुआ पुरुष इस लोक में शोभित होता है॥ ५९॥

**द्वाविमौ पुरुषव्याघ्र ! परप्रत्ययकारिणौ ।**
**स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ ६० ॥**

**अन्वयः**—हे पुरुषव्याघ्र ! कामितकामिन्यः स्त्रियः, पूजितपूजकः लोकः, इमौ द्वौ परप्रत्ययकारिणौ ( स्तः ) ।

**अर्थ—द्वाविती** । हे पुरुषव्याघ्र ! = पुरुषश्रेष्ठ राजन् !, 'पुंसि श्रेष्ठार्थगोचराः । स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः, इत्यमरः, कामितकामिन्यः कामितम्=अन्याभिलषितं, कामयन्ते=वाच्छन्ति तास्तथाभूताः, स्त्रियः=नार्यः, 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः, पूजितपूजकः पूजितं=महितं पूजयति=अर्चति तथाभूतः, लोकः=जनः, इमौ=एतौ द्वौ=उभौ, परप्रत्ययकारिणौ परेषु=अन्येषु प्रत्ययः=विश्वासः, तं कर्तुं शीलं ययोस्तौ, गतानुगतिकावित्यर्थः, स्तः=भवतः ।

**भावार्थः**—अन्याभिलषिताभिलाषिण्यः कामिन्यः परपूजितपूजाकरो लोकश्चेत्युभावपि परेषां विश्वासेन कार्यं कुरुतः, तस्मादेतादृशास्तु मूर्खाः सन्ति, मूढः, परप्रत्ययनेयबुद्धि' रिति कालिदासोक्तेः ॥

**भाषा**—हे नरश्रेष्ठ ! ( दूसरी स्त्री द्वारा ) चाहे गये ( पुरुष ) को चाहने वाली स्त्रियां तथा ( दूसरों द्वारा ) पूजे गये ( पुरुष अथवा देवता ) को पूजनेवाले ( मूर्ख ) लोग, ये दोनों दूसरों पर विश्वास करनेवाले ( अर्थात् गतानुगतिक ) होते हैं ॥ ६० ॥

**द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।**
**यश्चाऽधनः कामयते, यश्च कुप्यत्यनीश्वरः ॥ ६१ ॥**

**अन्वयः**—अधनः।यश्च कामयते, अनीश्वरः यश्च कुप्यति, इमौ द्वौ शरीरपरिशोषिणौ तीक्ष्णौ कण्टकौ ( स्तः ) ।

**अर्थः—द्वाविती** । अधनः=निर्धनः, यश्च=पुरुषः, कामयते = अत्यन्तं द्रव्यमिच्छति, अनीश्वरः=अशक्तः, यश्च=जनः, कुप्यति = व्यर्थं क्रुध्यति, इमौ = एतौ, द्वौ = द्विसंख्याकौ, शरीरपरिशोषिणौ शरीरं = देहं, परितः = सर्वतोभावेन, शोषयतः=कार्श्यमापादयत इति तौ, तीक्ष्णौ = निशितौ, कण्टकौ = शल्यरूपौ स्तः ।

**भावार्थः**—बहुद्रव्याभिलाषो निर्धनः क्रोधशीलोऽशक्तश्च शरीरनाशाय कण्टकरूपेण तिष्ठत इति ॥

**भाषा**—जो निर्धन हो कर भी ( किसी वस्तु ) की इच्छा करता है तथा जो असमर्थ होने पर भी क्रोध करता है—ये दोनों शरीर को सुखा देनेवाले तेज कांटे ( के समान ) हैं ॥ ६१ ॥

**द्वावेव न विराजेते विपरीतेन कर्मणा ।**
**गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ ६२ ॥**

**अन्वयः**—निरारम्भः गृहस्थः, कार्यवान् भिक्षुकः एव च ( इतीमौ ) द्वौ एव विपरीतेन कर्मणा न विराजेते ।

**अर्थः—द्वावेवेति ।** निरारम्भः आरम्भात् निर्गत इति निरारम्भः=आरम्भशून्यः उदासीन इति यावत्, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति वार्तिकेन पञ्चमीतत्पुरुषसमासः, गृहस्थः= द्वितीयाश्रमी, कार्यवान्=कार्यरतः व्यवसायीति यावत्, भिक्षुक एव च=भिक्षाशीलः संन्यासीति यावत्, इतीमौ, द्वौ=उभौ एव, विपरीतेन=स्वाश्रमानुपयुक्तेन, कर्मणा=कार्येण, न विराजेते= न शुशुभाते ।

**भावार्थः**—गृहस्थेनोद्यमपरेण सन्यासिना चोदासीनेन भवितव्यमिति तद्विपरीताचारिणो- स्तयोर्लोके न सम्मान इति ॥

**भाषा**—अकर्मण्य गृहस्थ तथा काम धन्धे मे लगा हुआ भिक्षुक ये दोनों ही उल्टा काम करने के कारण शोभित नहीं होते ॥ ६२ ॥

**द्वाविमौ पुरुषौ राजन् ! स्वर्गस्योपरि तिष्ठतः ।**
**प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ६३ ॥**

**अन्वयः**—राजन् ! क्षमया युक्तः प्रभुः प्रदानवान् दरिद्रः च इमौ द्वौ पुरुषौ स्वर्गस्य उपरि तिष्ठतः ।

**अर्थः—द्वाविति ।** राजन् !=नृप !, क्षमया = तितिक्षया अपराधमर्षणेनेत्यर्थः, युक्तः= सहितः, प्रभुः=अधिपः, 'प्रभुः परिवृढोऽधिपः' इत्यमरः, प्रदानवान्=दानशीलः, दरिद्रश्च= दीनोऽपि, इमौ द्वौ=एतावुभौ, पुरुषौ=पुमांसौ, स्वर्गस्य=त्रिदिवस्य, 'स्वरव्ययं स्वर्गनाक- त्रिदिवत्रिदशालयाः' इत्यमरः, उपरि=उपरिष्टात्, तिष्ठतः=स्थानं प्राप्नुतः ।

**भावार्थः**—क्षमाशीलस्य राज्ञो दातुर्दरिद्रस्य च महान् सम्मान इति ॥

**भाषा**—हे राजन्, शक्तिशाली होने पर भी क्षमा करनेवाला तथा निर्धन होने पर भी दान देनेवाला, ये दो ( प्रकार के ) पुरुष स्वर्ग के ( भी ) ऊपर रहते हैं ॥ ६३ ॥

**न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।**
**अपात्रे प्रतिपत्तिश्च पात्रे चाऽप्रतिपादनम् ॥ ६४ ॥**

**अन्वयः**—न्यायागतस्य द्रव्यस्य अपात्रे प्रतिपत्तिः पात्रे अप्रतिपादनं च द्वौ अतिक्रमौ बोद्धव्यौ ।

**अर्थः—न्यायागतस्येति ।** न्यायागतस्य न्यायेन=सन्मार्गेण, आगतस्य=लब्धस्य, द्रव्यस्य=धनस्य, 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' इत्यमरः, अपात्रे=अयोग्ये पुरुषे स्थाने वा, प्रतिपत्तिः=दानं, पात्रे=सत्पुरुषे योग्यस्थले वा, अप्रतिपादनम्=अदानं च, द्वौ= एतावुभौ, अतिक्रमौ=असदुपयोगौ, बोद्धव्यौ=ज्ञातव्यौ ।

**भावार्थः**—पात्रापात्रयोर्दानादाने न्यायोपार्जितधनस्य दुरुपयोगस्तदनुष्ठाता च मूढत्वेन परिगणनीयो भवेदिति ॥

**भाषा**—कुपात्र को देना तथा पात्र ( देने योग्य ) को न देना, इन दोनों को न्याय ( उचित ढङ्ग ) से कमाये हुए धन का दुरुपयोग समझना चाहिए ॥ ६४ ॥

**द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।**
**धनवन्तमदातारं दरिद्रं चाऽतपस्विनम् ॥ ६५ ॥**

**अन्वयः—**अदातारं धनवन्तम् अतपस्विनं दरिद्रं च द्वौ गले दृढां शिलां बद्ध्वा अम्भसि निवेष्टव्यौ ।

**अर्थः—द्वावम्भसीति ।** अदातारम् = अदानिनं कृपणमिति यावत्, धनवन्तं = धनिनम्, अतपस्विनं = तपस्यापराङ्मुखं, दरिद्रं = दीनं च, द्वौ=एतौ पुरुषौ, गले=कण्ठे, 'कण्ठो गल' इत्यमरः, दृढां = गुर्वीं, शिलां = दृषदं पाषाणमित्यर्थः, 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः, बद्ध्वा, अम्भसि=पानीये, 'अम्भोऽर्णस्तोयपानीय' इत्यमरः, निवेष्टव्यौ=प्रक्षेपणीयौ ।

**भावार्थः—**रज्ज्वा गले शिलां बद्ध्वा कृपणो धनी, दरिद्रश्चाऽतपस्वी क्वचिज्जलाशये निक्षेप्तव्यौ, यतस्तयोर्लोके न प्रयोजनम् । तादृशौ तौ तु मूढावेवेति रहस्यम् ॥

**भाषा—**दान न देनेवाले धनी तथा तपस्या न करनेवाले निर्धन, इन दोनों को गले में भारी पत्थर बाँध कर, पानी में डाल ( डुबा ) देना चाहिये ॥ ६५ ॥

**द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।**
**परिव्राड् योगयुक्तश्च रणे चाऽभिमुखो हतः ॥ ६६ ॥**

**अन्वयः—**पुरुषव्याघ्र ! योगयुक्तः परिव्राट् रणे अभिमुखः हतः च इमौ द्वौ सूर्यमण्डलभेदिनौ ( भवतः ) ।

**अर्थः—द्वाविति ।** पुरुषव्याघ्र=नरश्रेष्ठ ! योगयुक्तः योगेन=ध्यानेन समाधिनेत्यर्थः, 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः, युक्तः=सहितः, परिव्राट् परित्यज्य सर्वं व्रजतीति परिव्राट्=भिक्षुः, 'परौ व्रजेः षः पदान्ते' इति षत्वम्, भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी'त्यमरः, संन्यासीति यावत्, रणे=समरे, 'अस्त्रियां समरानीकरणाः' इति कोशः, अभिमुखः=सम्मुखः, हतश्च=मृतोऽपीति, इमौ द्वौ=पूर्वोक्तावुभौ पुरुषौ, सूर्यमण्डलभेदिनौ सूर्यस्य= रवेः मण्डलं=बिम्बं भिन्तः=विदारयतस्तच्छीलौ, अत्युच्चब्रह्मपदाधिकारिणौ भवतः ।

**भावार्थः—**योगी संन्यासी, युद्ध एव मृतो वीरश्चेत्युभौ ब्रह्मलोकमवाप्नुतः सूर्यमण्डलं भित्त्वेति तथाविधौ तौ सम्मानार्हौ पण्डितत्वेन गण्येते इति ।

**भाषा—**हे नरश्रेष्ठ ! योगाभ्यासी संन्यासी और रण में सामने से मारा गया ( योद्धा ), ये दोनों सूर्यमण्डल के पार ( स्वर्ग में ) जाते हैं ॥ ६६ ॥

**त्रयोपाया मनुष्याणां श्रूयन्ते भरतर्षभ ? ।**
**कनीयान् मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ६७ ॥**

**अन्वयः—**हे भरतर्षभ ! वेदविदः मनुष्याणां कनीयान् मध्यमः श्रेष्ठः त्रयः उपायाः श्रूयन्ते इति विदुः ।

**अर्थः—त्रयोपाया इति ।** त्रयोपाया इत्यत्र व्याकरणसिद्धान्तविरुद्धो गुणसन्धिरार्षः

त्रयः उपाया इति पदच्छेदः, हे भरतर्षभ=भरतकुलोत्पन्न राजन्! वेदविदः वेदं विदन्तीति वेद-विदः=वेदार्थज्ञाः, मनुष्याणां=मानवानां, कनीयान्=कनिष्ठः युद्धमित्यर्थः, मध्यमः=उत्तमान्तिम-मध्यगतः दानभेदावुपायाविति यावत्, श्रेष्ठः=उत्तमः सामाख्य उपायः इति, त्रयः=त्रिविधाः, उपायाः=साधनानि, श्रूयन्ते=आकर्ण्यन्ते, इति=एवं, विदुः=जानन्ति। अथवा त्रयोपाया इत्यत्र त्रयः=अपायाः इति छेदः, अत्र पक्षे प्रयोगस्तु सिद्धान्तसम्मतः, काम्ययोगकान्यधर्मसांसारिक-लोभाख्यास्त्रयोऽपाया इत्यर्थः।

**भावार्थः**—वेदविद्भिः सामादिषु चतुर्षूपायेषु उत्तममध्यमाधमभेदेन त्रैविध्यमेव प्रतिपादि-तम्। काम्ययोगाद्यपायत्रैविध्यमपि सूचितम्।

**भाषा**—हे भरतकुलश्रेष्ठ! अधम, मध्यम तथा उत्तम (क्रम से दण्ड, दान–भेद और साम) ये तीन प्रकार के मनुष्यों के (कार्य साधन के) उपाय सुने जाते हैं, जिन्हे वेद (नीतिशास्त्र) को जाननेवाले जानते है॥ ६७॥

**त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः।**
**नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु॥ ६८॥**

**अन्वयः**—राजन्! पुरुषाः उत्तमाधममध्यमाः त्रिविधाः (सन्ति), (प्रभुः) तान् त्रिवि-धेषु कर्मसु एव यथावत् नियोजयेत्।

**अर्थः—त्रिविधा इति**। राजन्! पुरुषाः=नराः, उत्तमाधममध्यमाः उत्तमश्च अधमश्च मध्यमश्च उत्तमाधममध्यमाः=उत्तमाधममध्यमप्रकृतिकाः, त्रिविधाः=त्रिप्रकारकाः, सन्ति, प्रभुः= स्वामी, तान्=त्रिविधान् नरान्, त्रिविधेषु=त्रिप्रकारकेषु उत्तमाधममध्यमेष्विति यावत्, कर्म-सु=कार्येष्वेव, यथावत्=उचितं यथा स्यात्तथा, नियोजयेत्=स्थापयेत्।

**भावार्थः**—त्रिविधानपि पुरुषान् परीक्ष्य तदुचितकार्येष्वेव तन्नियोजनं कार्यं प्रभुणेति।

**भाषा**—हे राजन्! (इस संसार में (तीन प्रकार के उत्तम, मध्यम तथा निकृष्ट मनुष्य होते हैं, उनको यथायोग्य तीनों प्रकार के कार्यों में लगाना चाहिए॥ ६८॥

**त्रय एवाऽधना राजन्! भार्या दासस्तथा सुतः।**
**यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥ ६९॥**

**अन्वयः**—राजन्! भार्या दासः तथा सुतः (इति) त्रयः एव अधनाः (सन्ति, यतः) ते यस्य (वर्तन्ते), यस्य तत् धनं, यत् ते समधिगच्छन्ति।

**अर्थः—त्रय इति**। राजन्!=भूपाल!, भार्या=स्त्री, दासः=सेवकः, तथा=तद्वत्, सुतः= पुत्रः, 'सुतः पुत्रः स्त्रियां त्वमी' इत्यमरः, इति त्रय एव, अधनाः=धनरहिताः सन्ति, यतः, ते= भार्यादयस्त्रयः, यस्य=पुरुषस्य, वर्तन्ते, तस्य=पुरुषस्य, तत् धनं=तत् द्रव्यमस्ति, यत्= धनं, ते=भार्यादयः, समधिगच्छन्ति=प्रेमोपायनादिरूपेण लभन्ते।

**भावार्थः**—स्त्रीसेवकपुत्राणां धनं तत्स्वामिन एवेत्यतस्ते सदा निर्धना एवेति॥

**भाषा**—हे राजन्! पत्नी, दास (गुलाम) तथा पुत्र ये तीनों धन के अधिकारी नहीं होते।

ये ( तीनों ) जो धन कमाते हैं वह उसी का होता है जिसके ( अधीन ) ये रहते हैं ॥ ६९ ॥

**हरणं च परस्वानां परदाराभिमर्शनम् ।**
**सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ७० ॥**

**अन्वय—**परस्वानां हरणं परदाराभिमर्शनं सुहृदः परित्यागः च त्रयः दोषाः क्षयावहाः ( सन्ति ) ।

**अर्थः—हरणमिति ।** परस्वानां=परद्रव्याणां, हरणम्=अपहरणं, परदाराभिमर्शनं परेषां= स्वेतरेषामन्येषां दाराः=स्त्री, 'दाराः पुंभूम्नी'ति कोशः, तेषाम् अभिमर्शनं=सङ्गमः, सुहृदः=मित्रस्य, परित्यागः=बहिष्करणं च, अमी, त्रयः=त्रिसंख्याकाः, दोषाः=दूषणानि, क्षयावहाः= क्षयकारकाः सन्ति ।

**भावार्थः—**परद्रव्यापहरणं परस्त्रीसङ्गमं सुहृत्परित्यागञ्च न कदापि कुर्यादिति ॥

**भाषा—**दूसरे के धन का हरण करना, दूसरे की स्त्री से सङ्ग करना तथा मित्र का त्याग करना, ये तीनों दोष ( दुर्गुण ) नाश करनेवाले हैं ॥ ७० ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ७१ ॥**

**अन्वयः—**कामः क्रोधः तथा लोभः इदम् आत्मनः नाशनं त्रिविधं नरकस्य द्वारं (वर्तते), तस्मात् एतत्त्रयं त्यजेत् ।

**अर्थः—त्रिविधमिति ।** कामः=इच्छा, क्रोधः=कोपः, तथा, लोभः=लाभेच्छा इदम्= एतत् , आत्मनः=स्वस्य, नाशनं=नाशकं, त्रिविधं=त्रिप्रकारकं, नरकस्य=निरयस्य 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः, द्वारं=द्वाः प्रवेशमार्गः, वर्तते, तस्मात्=तत्कारणात्, एतत्त्रयम् एतेषां=कामादीनां त्रयं=त्रितयं, त्यजेत्=मुञ्चेत् दूरीकुर्यात् ।

**भावार्थः—**कामादयस्त्रयः स्वात्मनाशनपूर्वकं नरकवासकारका इति तत्त्यागः श्रेयस्करः ॥

**भाषा—**काम, क्रोध और लोभ, ये तीन प्रकार के आत्मा का नाश करनेवाले नरक के दरवाजे हैं । इसलिए इन तीनों को जीतना चाहिए ॥ ७१ ॥

**वरप्रदानं राज्यं च पुत्रजन्म च भारत ! ।**
**शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥७२॥**

**अन्वयः—**भारत ! वरप्रदानं राज्यं पुत्रजन्म च ( इति ) त्रीणि ( हर्षप्रदानि सन्ति ), शत्रोः कृच्छ्रात् मोक्षणं च एकं तत्समम् ( अस्ति ) ।

**अर्थः—वरप्रदानमिति ।** भारत !=भरतवंशीय भूप !, वरप्रदानं=मनोरथावाप्तिः, राज्यं=राज्यलाभः, पुत्रजन्म पुत्रस्य=पुमपत्यस्य जन्म=उत्पत्तिश्च, पुत्रोत्पत्तिरिति यावत् , त्रीणि, हर्षप्रदानि सन्ति, शत्रोः=रिपोः, कृच्छ्रात्=कष्टात् , मोक्षणं=मुक्तिश्च, एकम्=एकमेव, तत्समं=तैः समं वरप्रदानादिसदृशम् अस्ति ।

**भावार्थः**—यथाहि मनोरथराज्यपुत्राणामवाप्तिः प्रत्येकं परमं सन्तोषं जनयति, तथा शत्रुहस्तगतत्वरूपदुःखान्मुक्तिस्तत्त्रितयजन्यसुखसदृशीं तृप्तिं समुत्पादयतीति॥

**भाषा**—हे राजन्! वरदान (का पाना), राज्य (का पाना) तथा पुत्र का पैदा होना, इन तीनों के बराबर शत्रु के कष्ट से छूटना—यह अकेला ही (सुख देनेवाला) होता है॥ ७२॥

**भक्तं च भजमानं च तवाऽस्मीति च वादिनम्।**
**त्रीनेतांश्छरणं प्राप्तान् विषमेऽपि न सन्त्यजेत्॥ ७३॥**

**अन्वयः**—(जनः) भक्तं भजमानं तव अस्मीति वादिनं च शरणं प्राप्तान् एतान् त्रीन् विषमेऽपि न सन्त्यजेत्!

**अर्थः—भक्तमिति।** जनः=लोकः, भक्तं=श्रद्धावन्तं, भजमानं=सेवकं, तव=भवतः, अस्मीति, वादिनं=वक्तारं च, शरणम्=आश्रयं, प्राप्तान्=आगतान्, शरणयोग्यानित्यर्थः, एतान्=पूर्वोक्तान्, त्रीन्=पुरुषान्, विषमेऽपि=विपत्तिकालेऽपि, न सन्त्यजेत्=न जह्यात्।

**भावार्थः**—विपत्तावपि शरणागतरक्षणकरणं नितान्तमावश्यकमिति भक्तादिपरित्यागस्तु कथमपि नोचित इति॥

**भाषा**—श्रद्धा रखनेवाले, आश्रय मे रहनेवाले तथा 'मै आप ही का हूं' इस भाँति कहने वाले, इन तीन प्रकार के शरण में आये हुए मनुष्यों को (अपने पर) संकट पड़ने पर भी नहीं छोड़ना चाहिये॥ ७३॥

**चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात्।**
**अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्न दीर्घसूत्रै रभसैश्चारणैश्च॥ ७४॥**

**अन्वयः**—(नीतिविदः) महाबलेन राज्ञा तु चत्वारि वर्ज्यानि आहुः, पण्डितः तानि विद्यात्, (राजा) अल्पप्रज्ञैः सह मन्त्रं न कुर्यात्, (तथा) दीर्घसूत्रैः, रभसैः, चारणैः अरणैर्वा च (सह मन्त्रं) न (कुर्यात्)।

**अर्थः—चत्वारीति।** नीतिविदः=नयज्ञाः, महाबलेन=सेनाशक्तिसम्पन्नेन, राज्ञा=भूपेन तु, चत्वारि=वक्ष्यमाणानि, वर्ज्यानि=हेयानि, आहुः=कथयन्ति, पण्डितः=बुद्धिमान्, तानि=चत्वारि, विद्यात्=जानीयात्, राजा, अल्पप्रज्ञैः=मन्दमतिभिः, सह=सार्धं, मन्त्रं=गुप्तविचारं रहस्यमित्यर्थः, न कुर्यात्=न विदध्यात्, तथा दीर्घसूत्रैः=विलम्बेन कार्यकर्तृभिः, रभसैः=हर्षपूर्णैः त्वरायुक्तैर्वा, रभसैरित्यत्र 'अलसै'रिति पाठान्तरं; तत्पक्षे आलस्ययुक्तैरित्यर्थः, चारणैः=कुशीलवैः बन्दिभिरिति यावत्, 'चारणास्तु कुशीलवाः' इत्यमरः, च—अरणैरिति पदच्छेदे अरणैः=रणरहितैः भीरुभिरित्यर्थः, वा च, सह मन्त्रं न कुर्यात्।

**भावार्थः**—अल्पप्रज्ञादिभिश्चतुर्भिः समं मन्त्रकरणं राज्ञो वर्ज्यमुक्त्वा ते तदनर्हा इति बुद्धिमतोऽपि तज्ज्ञानं लौकिककार्यसिद्ध्य आवश्यकम्।

**भाषा**—थोड़ी बुद्धि वालों, बहुत देर में काम करनेवालों, जल्दबाज़ों, तथा चारणों (भाँटों)

या डरपोकों के साथ सलाह नहीं करनी चाहिये, ये चारों महाबली ( प्रभूनशक्तिवाले ) राजा के लिए वर्जित हैं, बुद्धिमान् को इन्हें जान लेना चाहिये ॥ ७४ ॥

**चत्वारि ते तात ! गृहे वसन्तु श्रियाऽभिजुष्टस्य गृहस्थधर्मे ।**
**वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चाऽनपत्या ॥७५॥**

**अन्वयः**—तात ! गृहस्थधर्मे श्रिया अभिजुष्टस्य ते गृहे वृद्धः ज्ञातिः अवसन्नः कुलीनः दरिद्रः सखा अनपत्या भगिनी च चत्वारि वसन्तु ।

**अर्थः—चत्वारीति ।** प्रभुत्वात् पितृसादृश्येन धृतराष्ट्रं प्रति विदुरस्य 'तात' इत्युक्तिः, हे तात !=राजन् !, गृहस्थधर्मे=गार्हस्थ्ये, वसत इति शेषः, श्रिया=सम्पदा, अभिजुष्टस्य=युक्तस्य, ते=तव, गृहे=भवने, वृद्धः=स्थविरः, 'प्रवयाः स्थविरो वृद्धः' इति कोशः, ज्ञातिः=सगोत्रः बन्धुरिति यावत्, 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः, कुलधर्मोपदेशकारित्वात्, अवसन्नः=आपन्नः, कुलीनः=उच्चकुलोत्पन्नः बालकेषु सदाचारशिक्षोपदेशकत्वात्, दरिद्रः= निर्धनः, सखा=मित्रं हितभाषित्वात्, अनपत्या=सन्ततिरहिता, भगिनी=स्वसा च धनादिरक्षणकारित्वात्, 'भगिनी स्वसा' इत्यमरः, चत्वारि=उपकारकाण्येतानि, वसन्तु=वासं कुर्वन्तु

**भावार्थः**—गृहस्थस्य गृहे सदुपकारकारित्वात् वृद्धज्ञातिविपन्नकुलीननिर्धनमित्रानपत्यभगिनीनां निवासः शोभन इति तेषां त्वद्गृहे स्थितिरावश्यिकेति धृतराष्ट्रं प्रति विदुरस्य नीतिज्ञस्योक्तिः ॥

**भाषा**—हे तात ! गार्हस्थ्य का पालन करते हुए आप ऐसे लक्ष्मीवाले के घर में चार ( प्रकार के लोग ) रह सकते हैं—बिरादरी का बूढ़ा आदमी, कष्ट में पड़ा हुआ ऊँचे कुल का आदमी, निर्धन मित्र तथा निःसन्तान बहन ॥ ७५ ॥

**चत्वार्याह महाराज ! साद्यस्कानि बृहस्पतिः ।**
**पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७६ ॥**
**देवतानां च सङ्कल्पमनुभावं च धीमताम् ।**
**विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ७७ ॥**

**अन्वयः**—महाराज ! बृहस्पतिः पृच्छते त्रिदशेन्द्राय चत्वारि साद्यस्कानि आह ! ( त्वं ) देवतानां सङ्कल्पं धीमताम् अनुभावं कृतविद्यानां विनयं पापकर्मणां विनाशं च—इमानि तानि मे निबोध ।

**अर्थः**—चतुर्णां सद्यःफलदायकत्वं युग्मेनाह—**चत्वारीति, देवतानामिति च ।** महाराज !=धृतराष्ट्र !, बृहस्पतिः=गुरुः 'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः' इत्यमरः, पृच्छते=प्रश्नं कुर्वते, त्रिदशेन्द्राय, त्रिदशानां=सुराणाम् 'त्रिदशा विबुधाः सुराः' इत्यमरः, इन्द्राय=स्वामिने मघवते इति यावत्, चत्वारि=वक्ष्यमाणानि वस्तूनि, साद्यस्कानि=सद्यःफलदानि, आह=पुराऽकथयत् । त्वं=भवान्, देवतानां=देवानां, सङ्कल्पं=मानसं कर्म 'सङ्कल्पः कर्म मानसम्' इत्यमरः, धीमतां—बुद्धिमताम्, अनुभावं=प्रभावं, कृतविद्यानां=कृता

विद्या यैस्ते तेषां विदुषां, विनयं=नम्रतां, पापकर्मणां=पाप्मनां, विनाशं=नाशं च इमानि=पूर्वोक्तानि, तानि=सद्यःफलप्रदानि चत्वारि वस्तूनि, मे=मम मत्सकाशादित्यर्थः, निबोध=जानीहि।

**भावार्थः—**देवतासङ्कल्पबुद्धिमत्प्रभावविद्वद्विनयपापिनाशाः सद्यःफलदत्वमुपयान्तीति गुरुणा प्रश्नोत्तरे मघवा बोधितः। तदेवाद्य प्रसङ्गतो मया तुभ्यं निवेद्यत इति चेतसाऽवधारय स्वामिनि॥

**भाषा—**हे महाराज! इन्द्र के पूछने पर उनसे बृहस्पति ने इन चारो को तत्काल फल देनेवाला बताया, उन्हे आप मुझसे सुनिए—देवताओ का मनोती, बुद्धिमानों का प्रभाव, विद्वानों की नम्रता और पापियों का विनाश॥ ७६–७७॥

**चत्वारि कर्माण्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि।**
**मानाग्निहोत्रमुत मानमौनं मानेनाऽधीतमुत मानयज्ञः॥ ७८॥**

**अन्वयः—**मानाग्निहोत्रम् उत मानमौनं मानेन अधीतम् उत मानयज्ञः (एतानि) चत्वारि कर्माणि अभयङ्कराणि (सन्ति), (परं, तानि) अयथाकृतानि भयं प्रयच्छन्ति।

**अर्थः—चत्वारीति।** मानाग्निहोत्रं मानेन=आदरेण श्रद्धापूर्वकमित्यर्थः, अग्निहोत्रम्=अग्न्याधानादिकम्, उत=आहोस्वित्, मानमौनं मानेन=आदरेण परिमाणेन वा यथोचितमिति यावत्, मौन=मौनधारणं तूष्णीभावाश्रयणं, मानेन=आदरेण गुरूपदेशानुसारमिति यावत्, अधीतम्=अध्ययनम्, उत=अथवा, मानयज्ञः=सश्रद्धं यागानुष्ठानम्, एतानि चत्वारि=चतुःसंख्याकानि, कर्माणि=कार्याणि, अभयङ्कराणि=निर्भयतासम्पादकानि सन्ति, परं, तानि=कर्माणि, अयथाकृतानि=विपरीतमाचरितानि सन्ति, भयं=भीति, 'भीतिभीः साध्वसं भयम्' इत्यमरः, प्रयच्छन्ति=ददति।

**भावार्थः—**आदरपूर्वकमनुष्ठितानि कर्माण्यग्निहोत्रादीनि कर्तुरभयं जनयन्ति परं विपरीतानि तु भयहेतव एव जायन्त इति यथावत् तदनुष्ठानं श्रेयसे भवतीति तात्पर्यम्।

**भाषा—**आदर (श्रद्धा) के साथ अग्निहोत्र करना (मन्त्रपूर्वक अग्नि मे आहुति देना), मान (आदर या यथोचित मात्रा) के साथ मौन धारण करना, आदर (गुरूपदेश) के साथ अध्ययन करना तथा श्रद्धापूर्वक यज्ञ करना, ये चार काम (अच्छी तरह करने पर) भय को दूर करनेवाले है और ये ही ठीक तौर पर न करने से भय उत्पन्न करनेवाले हैं॥ ७८॥

**पञ्चाऽग्नयो मनुष्येण परिचर्याः प्रयत्नतः।**
**पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ!॥ ७९॥**

**अन्वयः—**भरतर्षभ! मनुष्येण पिता माता अग्निः आत्मा गुरुः च (इति) पञ्च अग्नयः प्रयत्नतः परिचर्याः।

**अर्थः—पञ्चेति।** भरतर्षभ!=राजन्!, मनुष्येण=मानवेन, पिता=जनकः, माता=जननी, 'मनुष्या मानुषा मर्त्या मनुजा मानवाः, तातस्तु जनकः पिता, जनयित्री प्रसूर्माता जननी' इत्यमराः, अग्निः=विवाहसमये स्त्रिया सह स्वीकृतो गृह्याग्निः, आत्मा, गुरुः=उपदेष्टा चेति, पञ्च=पञ्चसंख्याकाः; अग्नयः=अग्निवत्तेजस्विनः, प्रयत्नतः=उद्योगात्, परिचर्याः=

उपासनीयाः सेव्या इत्यर्थः, 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासना' इत्यमरः, सन्तीति शेषः ।

**भावार्थः**—पित्रादीनां पञ्चानां नित्योपासना समुचिता ।

**भाषा**—हे भरतकुलश्रेष्ठ ! पिता, माता, ( मन्त्र द्वारा स्थापित गृह्य ) अग्नि, आत्मा तथा गुरु, इन पांच अग्नियों ( तेजस्वियों ) की सेवा मनुष्य को यत्नपूर्वक करनी चाहिए ॥ ७९ ॥

**पञ्चैव पूजयंल्लोके यशः प्राप्नोति केवलम् ।**
**देवान् पितॄन् मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ८० ॥**

**अन्वयः**—देवान् पितॄन् मनुष्यान् भिक्षून् अतिथिपञ्चमान् पञ्च एव पूजयन् ( पुरुषः ) लोके केवलं यशः प्राप्नोति ।

**अर्थः**—**पञ्चैवेति** । देवान्=सुरान्, पितॄन्=अग्निष्वात्तादीन, मनुष्यान्=मान्यान् गुरुप्रभृतीन्, भिक्षून्=भिक्षाव्रतिकान्, अतिथिपञ्चमान् अतिथयः=अभ्यागता एव पञ्चमः=पञ्चसंख्यापूरकः येषु तान्, पञ्चैव=नाधिकान्, पूजयन्=अर्चन् सम्मानयन् वा पुरुषः, लोके=संसारे, केवलं=निर्मलं, यशः=कीर्तिं, प्राप्नोति=लभते ।

**भावार्थः**—देवादीनां पञ्चानां पूजको लोके यशस्वी भवतीति ।

**भाषा**—देवताओं, पितरों, मनुष्यों, याचकों और अतिथियों, इन पांचों की ही पूजा करनेवाला ( पुरुष ) शुद्ध यश प्राप्त करता है ॥ ८० ॥

**पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि ।**
**मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ८१ ॥**

**अन्वयः**—( त्वं ) यत्र यत्र गमिष्यसि, ( तत्र ) मित्राणि अमित्राः मध्यस्थाः उपजीव्योपजीविनः पञ्च त्वा अनुगमिष्यन्ति ।

**अर्थः**—**पञ्चेति** । त्वं, यत्र यत्र=यस्मिन् कस्मिन्नपि स्थाने, गमिष्यसि=यास्यसि, तत्र=तस्मिन् प्रदेशे, मित्राणि=सुहृदः, 'अथ मित्रं सखा सुहृत्' इत्यमरः, अमित्राः=शत्रवः 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः, मध्यस्थाः=न मित्राणि नाप्यमित्राश्च तटस्था उदासीना इति यावत्, उपजीव्योपजीविनः उपजीव्याश्च=गुरवश्च, उपजीविनश्च=सेवकाश्च आश्रयदातारः आश्रयकर्तारश्चेति यावत्, पञ्च=एते पञ्च, त्वाम्, अनुगमिष्यन्ति=अनुयास्यन्ति ।

**भावार्थः**—यत्र क्वापि स्थिताम् प्राणिनो मित्रादयः पञ्च न त्यजन्ति, अपितु अनुवर्तन्त एवेति॥

**भाषा**—( हे राजन् ) जहाँ जहाँ आप जायँगे ( वहाँ वहाँ ) मित्र, शत्रु, उदासीन, आश्रय देनेवाले, तथा आश्रय पानेवाले, ये पाँच आपके पीछे लगे रहेंगे ॥ ८१ ॥

**पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।**
**ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ८२ ॥**

**अन्वयः**—पञ्चेन्द्रियस्य मर्त्यस्य एकम् इन्द्रियं छिद्रं चेत् ( तर्हि ) दृतेः पात्राद् उदकम् इव ततः अस्य प्रज्ञा स्रवति ।

**अर्थः—पञ्चेन्द्रियस्येति।** पञ्चेन्द्रियस्य पञ्च=पञ्चसंख्याकानि ज्ञानेन्द्रियाणि यस्य तादृशस्य, मर्तस्य=मनुष्यस्य 'मनुष्या मानुषा मर्त्याः' इत्यमरः, एकम्=अन्यतमम्, इन्द्रिय=विषयग्राहकं वस्तु, छिद्रं=सदोषं, चेत्=यदि, तर्हि, दृतेः पात्रात्=चर्ममयात् सच्छिद्रात् जलपात्रात्, उदकम् इव=जलमिव 'कबन्धमुदकं पाथः पुष्करं सर्वतो मुखम्' इति जलपर्यायेष्वमरः, ततः=तस्मादिन्द्रियात्, अस्य=पुरुषस्य, प्रज्ञा=बुद्धिः, स्रवति=गलति।

**भावार्थः—**सच्छिद्राच्चर्ममयाज्जलपात्रादुदकं यथा स्रवति, तथैवास्य पुंस एकस्मिन्नपीन्द्रिये विकले जाते बुद्धिर्भ्रंश्यत्येवेति।

**भाषा—**पांच ज्ञानेन्द्रियों वाले पुरुष की यदि एक भी इन्द्रिय छिद्रयुक्त (दोषयुक्त) होती है तो उसमें से उसकी बुद्धि इस प्रकार बाहर निकल जाती है जैसे मशक (के छेद) में से पानी॥ ८२॥

**षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।**
**निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥ ८३॥**

**अन्वयः—**भूतिम् इच्छता पुरुषेण इह निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता (इति) षट् दोषाः हातव्याः।

**अर्थः—षड् दोषा इति।** भूतिम्=ऐश्वर्यं कल्याणमित्यर्थः, इच्छता=अभिलष्यता, पुरुषेण=नरेण, इह=संसारे, निद्रा=स्वापः 'स्यान्निद्रा शयनं स्वापः' इत्यमरः, तन्द्रा=अर्धशयनं, भयं=भीतिः, क्रोधः=कोपः, आलस्यं=मन्दता दीर्घसूत्रता=विलम्बः, इति षट्, दोषाः=अवगुणाः, हातव्याः=त्याज्याः।

**भावार्थः—**कल्याणाकाङ्क्षी पुरुषो निद्रादीन् षड् दोषान् सर्वथा त्यजेत्॥

**भाषा—**ऐश्वर्य चाहनेवाले पुरुष को नींद, तन्द्रा (नींद के पहले तथा बाद में होनेवाली शिथिलता), डर, क्रोध, आलस्य तथा देर से काम करने की आदत, इन छः दुर्गुणों को छोड़ देना चाहिए॥ ८३॥

**षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे।**
**अप्रवक्तारमाचार्यमनधीयानमृत्विजम्॥ ८४॥**
**अरक्षितारं राजानं भार्यां चाऽप्रियवादिनीम्।**
**ग्रामकामं च गोपालं वनकामं च नापितम्॥ ८५॥**

**अन्वयः—**पुरुषः अप्रवक्तारम् आचार्यम्, अनधीयानम् ऋत्विजम्, अरक्षितारं राजानम्, अप्रियवादिनीं भार्यां, ग्रामकामं गोपालं, वनकामं नापितं च इमान् षट् अर्णवे भिन्नां नावम् इव जह्यात्।

**अर्थः—**दोषषट्कत्यागं पुनरपि युग्मेनाह—**षडिति, अरक्षितारमिति च।** पुरुषः=नरः, अप्रवक्तारम्=अनुपदिशन्तम्, आचार्यं=मन्त्रव्याख्याकृतं गुरुम् 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः, अनधीयानं=मन्त्रानपठन्तं मन्त्रोच्चारणमकुर्वन्तम्, ऋत्विजं=होतारम्,

अरक्षितारम्=अपालकं, राजानं=भूपतिम्, अप्रियवादिनीं न प्रियं=मधुरं वदितुं=गदितुं शीलं=स्वभावः यस्याः तादृशीं, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः, भार्यां=स्त्रियं, ग्रामकामं ग्रामं कामयतेऽसौ तं=ग्रामाभिलाषिणं, गोपालस्य गोभिः सह वनप्रियताया औचित्यात्, गोपालं=गोपं, वनकामं=काननाकाङ्क्षिणं वने निर्जनत्वेन क्षौरादिस्वकर्मणोऽनवाप्तेः, नापितं=वपनकर्तारं चेति, इमान्=पूर्वोक्तान्, षट्=षट्प्रकारकान् मनुष्यान्, अर्णवे=सागरे 'सरस्वान् सागरोऽर्णवः' इत्यमर, भिन्नां=शीर्णां विदीर्णामिति यावत्, नावम् इव=तरिमिव, जह्यात्=त्यजेत्।

**भावार्थः**—समुद्रमध्ये पोतभङ्गे जाते यथा मनुष्यस्ततोऽपसर्पति, यतो मज्जनप्रसङ्गः, तथैवाऽप्रवक्तृत्वादिविशेषणवतामाचार्यादीनां षण्णां त्यागः समुचितः, वैपरीत्ये हानेः सम्भवात्।

**भाषा**—उपदेश न देनेवाले आचार्य, अध्ययन न करनेवाले पुरोहित, रक्षा न करनेवाले राजा, कटुवचन बोलनेवाली पत्नी, गांव में रहने की इच्छा करनेवाले ग्वाला तथा वन में रहने की इच्छा करनेवाले नाई इन छः को मनुष्य समुद्र में टूटी हुई नाव की भांति छोड़ देवे॥८४-८५॥

**षडेव तु गुणाः पुंसा न हातव्याः कदाचन।**
**सत्यं दानमनालस्यमनसूयाक्षमा धृतिः॥ ८६॥**

**अन्वयः**—पुंसा कदाचन सत्यं दानम् अनालस्यम् अनसूया क्षमा धृतिः (इति) षट् गुणा तु न एव हातव्याः।

**अर्थः**—**षडेवेति**। पुंसा=पुरुषेण, 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः' इत्यमरः, कदाचन=कदाचिदपि, सत्यं=तथ्यं, दानं=त्यागः, 'सत्यं तथ्यमृतम्, त्यागो विहापितं दानम्' इत्यमरौ, अनालस्यम्=आलस्याभावः कर्तव्यतत्परतेत्यर्थः, अनसूया=गुणेषु दोषाऽनाविष्करणम्, क्षमा=क्षान्तिः, धृतिः=धैर्यम्, इति, षट् गुणाः तु, न एव, हातव्याः=त्याज्याः।

**भावार्थः**—सत्यादयः षड् गुणा न कदापि पुंसा त्याज्या इति।

**भाषा**—सच्चाई, दान देना, आलस्य का न होना, गुणों में दोष ढूँढ़ने की प्रवृत्ति का न होना, क्षमा तथा धैर्य, ये छः गुण पुरुष को कदापि नहीं छोड़ने चाहिये॥ ८६॥

**अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च।**
**वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन्!॥८७॥**

**अन्वयः**—राजन्! जीवलोकस्य अर्थागमः नित्यम् अरोगिता प्रिया भार्या प्रियवादिनी च वश्यः पुत्रः अर्थकरी विद्या च (इति) षट् सुखानि।

**अर्थः**—राजन्=भूप! जीवलोकस्य=मनुष्यजातेः, अर्थागमः अर्थस्य=द्रव्यस्य आगमः=सदा लब्धिः, नित्यं=प्रतिदिनम्, अरोगिता रोगः अस्यास्तीति रोगी न रोगी अरोगी तस्य भावः अरोगिता=चित्तस्वास्थ्यं, प्रिया=प्रेमाश्रया, भार्या=जाया 'भार्या जायाऽथ पुम्भूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः, सैव, प्रियवादिनी=मधुरभाषिणी च, वश्यः=वशं गतः आज्ञाकारी, पुत्रः=

आत्मजः, 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः, अर्थकरी=द्रव्यप्राप्तिसाधनीभूता, विद्या च, इति षट्=षट् पदार्थाः, सुखानि=सुखकराणि, सन्तीति शेषः।

**भावार्थः—**अर्थागमादिभिः षड्भिर्वस्तुभिः पुरुषस्य नियतं सुखं भवतीति॥

**भाषा—**हे राजन्! नित्य धन का मिलना, स्वस्थ रहना, स्त्री का प्यारी तथा मधुरभाषिणी होना, पुत्र का आज्ञाकारी होना तथा विद्या का धन पैदा करने वाली होना, ये छः संसार मे सुखदायक है॥ ८७॥

**षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति।**
**न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः॥ ८८॥**

**अन्वयः—**यः नित्याना षण्णाम् आत्मनि ऐश्वर्यम् अधिगच्छति, विजितेन्द्रियः सः पापैः न युज्यते, अनर्थैः कुतः।

**अर्थः—षण्णामिति।** यः=पुरुषः, नित्यानां–नियतस्थितिकानां, षण्णां कामक्रोधशोकमोहमदमानानाम्, आत्मनि स्वस्मिन्, ऐश्वर्यं=वशित्वम्, अधिगच्छति=प्राप्नोति, विजितेन्द्रियः=वशी, सः=नरः, पापैः=दुष्कृतैः, न युज्यते=युक्तो न भवति, अनर्थैः, कुतः=कस्मात्?

**भावार्थः—**कामक्रोधादीनां वशीकरणेन पापीयान् न भवति, अनर्थकारी स्यादिति कुतः सम्भावना॥

**भाषा—**शरीर मे नित्य रहनेवाले छः काम, क्रोध, शोक, मोह, मद तथा मान को जो वश मे कर लेता है वह संयमी पुरुष पाप तक मे नहीं लिप्त होता, हानिकर कामों की तो बात ही दूर ही रही॥ ८८॥

**षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते।**
**चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः॥ ८९॥**
**प्रमदाः कामयानेषु यजमानेषु याजकाः।**
**राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः॥ ९०॥**

**अन्वयः—**चौराः, प्रमत्ते जीवन्ति, चिकित्सकाः व्याधितेषु जीवन्ति, प्रमदाः कामयानेषु जीवन्ति, याजकाः यजमानेषु जीवन्ति, राजा विवदमानेषु नित्यं जीवति, पण्डिताः मूर्खेषु नित्यं जीवन्ति–इमे षट् षट्सु जीवन्ति, सप्तमः न उपलभ्यते।

**अर्थः—**चौराः=तस्कराः 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः, प्रमत्ते=मदिरादिमदाऽनवधानशीले जने' बहुत्वाभिप्रायकमेकवचनमत्र, जीवन्ति=जीवनं विदधति, चिकित्सकाः=वैद्याः, व्याधितेषु=रोगिषु, जीवन्ति, प्रमदाः=कान्ताः, 'प्रमदा मानिनी कान्ता' इत्यमरः, कामयानेषु=आत्मानमिच्छत्सु पुरुषेषु, जीवन्ति, याजकाः=यज्ञकारयितारः पुरोहितादयः, जयमानेषु=यष्टृषु जीवन्ति, राजा=भूपः, विवदमानेषु=परस्परं कलहायमानेषु पुंसु, नित्यं=सर्वदा, जीवति, पण्डिताः=विद्वांसः, मूर्खेषु=अज्ञेषु, नित्यं=सततं, देहलीदीपकन्यायेनोभयोपकारकत्वादा

त्यद्वये नित्यशब्दस्य प्रयोगः कृतः, जीवन्ति । इमे षट्=एते षट् पुरुषाः, षट्सु=अमीषु षट्सु, जीवन्ति=जीविका विदधति, सप्तमः, षडतिरिक्तोऽन्यः कश्चन, न उपलभ्यते=न प्राप्यते ।

**भावार्थः—**चौरादीनां षण्णां प्रमत्तादयः षड् जीविकाधारभूताः सन्ति नान्य इति ॥

**भाषा—**चोर असावधान पुरुष से, वैद्य रोगी से, मस्त स्त्रियां कामियों से, पुरोहित यज्ञ करनेवालों से, राजा झगड़ा करनेवालों से तथा बुद्धिमान् मूर्खों से इस प्रकार ये छः इन छः से अपनी जीविका चलाते हैं ॥ ८९-९० ॥

**षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।**
**गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ ९१ ॥**

**अन्वयः—**गावः सेवा कृषिः भार्या विद्या वृषलसङ्गतिः इमानि षट् मुहूर्तम् अनवेक्षणात् विनश्यन्ति ।

**अर्थः—षडिति ।** गावः=धेनवः, सेवा=शुश्रूषा, कृषिः=क्षेत्रकर्म, भार्या=जाया, विद्या=अध्ययनं, वृषलसङ्गतिः वृषलस्य=शूद्रस्य सङ्गतिः=सहवासः, इमानि=एतानि, षट्=षड् वस्तूनि, मुहूर्तम्=क्षणम्, अनवेक्षणात्=मुहूर्मुहुरपर्यालोचनात्, विनश्यन्ति=नाशं गच्छन्ति ।

**भावार्थः—**धेन्वादीनां षण्णां सर्वदा निरीक्षणमावश्यकम्, अन्यथा नाशसम्भवः ॥

**भाषा—**गायें, सेवा, खेती, स्त्री, विद्या, तथा शूद्रों का साथ, ये छः क्षण भर न देखने से भी नष्ट हो जाते हैं ॥ ९१ ॥

**षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।**
**आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥ ९२ ॥**
**नारीं विगतकामास्तु कृतार्थश्च प्रयोजकम् ।**
**नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥ ९३ ॥**

**अन्वयः—**एते षट् पूर्वोपकारिणं नित्यम् अवमन्यन्ते । हि-शिक्षिताः शिष्याः आचार्यं, कृतदाराः मातरं, विगतकामाः नारीं, कृतार्थाः प्रयोजकं, निस्तीर्णकान्ताराः नावम्, आतुराः चिकित्सकं च (इति)।

**अर्थः—**पूर्वोपकारिणामवमानकारिणो दर्शयति द्वाभ्याम्-**षडेत इति, नारी मिति च ।** एते=वक्ष्यमाणाः, षट्=षट्प्रकारकाः पुरुषाः, पूर्वोपकारिणं=पूर्वमुपकर्तारं जनं, नित्यं=निश्चयेन, अवमन्यन्ते=तिरस्कुर्वन्ति । हि=तथाहि तदेव दर्शयतीत्यर्थः, शिक्षिताः=प्राप्तशिक्षाः, शिष्याः=छात्राः 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः, आचार्यम्=उपदेष्टारं गुरुमित्यर्थः, कृतदाराः=जातविवाहाः पुत्राः, मातरं=जननीं, विगतकामाः=शान्तमन्मथाः, नारीं=स्त्रियं, कृतार्थाः=सफलप्रयोजनाः, प्रयोजकं=प्रेरयितारं मार्गदर्शकमिति यावत्, निस्तीर्णकान्ताराः निस्तीर्णम्=अतिक्रान्तं कान्तारं=नद्यादि दुर्गमं वर्त्म यैस्ते तादृशाः, 'कान्तारं वर्त्म दुर्गमम्' इति कोशः, नावं=नौकाम्, आतुराः=रोगिणः, रोगमुक्ताविति शेषः, चिकित्सकं=वैद्यं च इति ॥

**भावार्थः—**शिष्यादयो हि आचार्यादीनां समाप्ते प्रयोजनेऽनादरं कुर्वते ।

**भाषा**—पढ़े लिखे शिष्य आचार्य ( गुरु ) का, विवाहित ( बेटे ) माता का, कामवासना से रहित ( पुरुष ) स्त्री का, कृतकार्य ( पुरुष ) सहायता करनेवाले का, कठिन रास्ते के पार पहुँचे हुए लोग नाव का और ( निरोग होने पर ) वैद्य का, इस प्रकार ये छः पहले के उपकार करनेवाले का नित्य तिरस्कार करते हैं ॥॥ ९२=९३ ॥

**आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह सम्प्रयोगः ।**
**स्वप्रत्यया वृत्तिरभीतवासः षड् जीवलोकस्य सुखानि राजन् ! ॥९४॥**

**अन्वयः**—राजन् ! आरोग्यम् आनृण्यम् अविप्रवासः सद्भिः मनुष्यैः सह सम्प्रयोगः स्वप्रत्यया वृत्तिः अभीतवासः ( एतानि ) षट् जीवलोकस्य सुखानि ।

**अर्थः**—**आरोग्यमिति** । राजन्=प्रभो !, आरोग्यं=नीरोगता, आनृण्यम्=ऋणराहित्यम्, अविप्रवासः=परदेशवासप्रसङ्गाभावः, सद्भिः मनुष्यैः=सज्जनैः, सह=समं, सम्प्रयोगः=सङ्गतिः, स्वप्रत्यया=आत्मविश्वासा, वृत्तिः=जीवनं, 'वृत्तिर्वर्तनजीवने' इत्यमरः, अभीतवासः अभीतं= निर्भयं यथा स्यात्तथा वासः=वसतिः निर्भयं स्थितिरिति यावत्, एतानि, षट्=वस्तूनि, जीवलोकस्य=संसारस्य, सुखानि=शर्माणि 'शर्मशातसुखानि च' इत्यमरः, सन्तीति शेषः ।

**भावार्थः**—आरोग्यादयः षट् पदार्थाः संसारे मनुष्यान् सुखयन्तीति ॥

**भाषा**—हे राजन् ! स्वस्थ रहना, कर्जदार न होना, पारदेशवास का न होना, भले लोगों का साथ, अपने भरोसे जीविका चलाना और निडर होकर रहना, ये छः संसार के सुख हैं॥९४॥

**ईर्षुर्घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः ।**
**परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९५ ॥**

**अन्वयः**—ईर्षुः घृणी नसन्तुष्टः क्रोधनः नित्यशङ्कितः परभाग्योपजीवी च एते षट् नित्य-दुःखिताः ( सन्ति ) ।

**अर्थः**—**ईर्षुरिति** । ईर्षुः=परोत्कर्षासहिष्णुः, घृणी=दयावान्, 'कारुण्यं करुणा घृणा' इत्यमरः, नसन्तुष्टः=असन्तुष्टः, क्रोधनः=कोपी, नित्यशङ्कितः नित्यं=सर्वदा शङ्कितः=सन्देहवान्, परभाग्योपजीवी परस्य=अन्यस्य भाग्येन=दैवेन 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिः' इत्यमरः, उपजीवी=आजीवकारी च, एते=अमी षट्=पुरुषाः, नित्यदुःखिताः=सर्वदा दुःखग्रस्ताः, सन्तीति ।

**भावार्थः**-ईर्ष्यावत्प्रभृतयः षट् सर्वदा दुःखमेवानुभवन्तीति ॥

**भाषा**—ईर्ष्या ( डाह ) करनेवाला, दया करनेवाला, असन्तुष्ट, क्रोध करनेवाला, हमेशा डरता रहनेवाला तथा दूसरे के भाग्य ( धन आदि ) पर निर्वाह करनेवाला, ये छः नित्य दुःखी रहते हैं ॥ ९५ ॥

**सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।**
**प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ९६ ॥**

**स्त्रियोऽक्षा मृगया पानं वाक्पारुषं च पञ्चमम् ।**
**महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ९७ ॥**

**अन्वयः**—राज्ञा सदा व्यसनोदयाः स्त्रियः अक्षाः मृगया पानं पञ्चमं वाक्पारुष्यं महत् दण्डपारुष्यम् अर्थदूषणं च एव सप्त दोषाः हातव्याः । ( हि ) कृतमूलाः अपि ईश्वराः यैः प्रायशः विनश्यन्ति ।

**अर्थः**—त्याज्यं दोषसप्तकं युग्मेन दर्शयति—**सप्तेति, स्त्रिय इति च** । राज्ञा=नृपेण, सदा=सर्वदा, व्यसनोदयाः व्यसनस्य=विपदः नाशस्य च उदयः=उत्पत्तिः येभ्यः ते, स्त्रियः=कामिन्यः, अक्षाः=अक्षादिहेतुकं द्यूतं मृगया=पश्वादिवधाऽभिरतिः, पञ्चमं=पञ्चसंख्यापूरकं 'तस्य पूरणे डट्' इति डट् प्रत्ययः, वाक्पारुष्यं वाचि=वचने वा पारुष्यं=क्रूरता, महत्=पृथुलं 'विशालं पृथुलं महत्' इत्यमरः, दण्डपारुष्यं दण्डे=दण्डविषये पारुष्यम्=अतिवादः 'पारुष्यमतिवादः स्या'दित्यमरः, कठोरतेति यावत्, अर्थदूषणम् अर्थस्य=द्रव्यस्य विषये दूषणं=दोषप्रदर्शनं चैव सप्त, दोषाः=अवगुणाः, हातव्याः=त्याज्याः । हि=यस्मात्कारणात्, कृतमूलाः=बद्धमूला अपि, ईश्वराः=राजानः, यैः=दोषैः, प्रायशः=प्रायेण, विनश्यन्ति=भ्रश्यन्ति ।

**भावार्थः**— नाशकारिणः स्त्रीप्रभृतीन् सप्त दोषान् राजा सदा सर्वथा च वर्जयेत् ॥

**भाषा**—स्त्रियां, जुआ, शिकार, शराब पीना, वचन की कर्कशता, दण्ड की अत्यधिक कठोरता तथा धन का दुरुपयोग, इन सात कष्टकारक दोषों का राजा को सदा त्याग करना चाहिये, क्योंकि इनसे मजबूत जड़वाले राजा भी प्रायः नष्ट हो जाते हैं ॥ ९६-९७ ॥

**अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।**
**ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणश्च विरुध्यते ॥ ९८ ॥**
**ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।**
**रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ९९ ॥**
**नैनान् स्मरति कृत्येषु याचितश्चाऽभ्यसूयति ।**
**एतान् दोषान्नरः प्राज्ञो बुध्येद् बुद्ध्वा विसर्जयेत् ॥ १०० ॥**

**अन्वयः**—विनशिष्यतः नरस्य अष्टौ पूर्वनिमित्तानि ( सन्ति ) । ( एषः ) प्रथमं ब्राह्मणान् द्वेष्टि, च ब्राह्मणैः विरुध्यते, ब्राह्मणस्वानि आदत्ते, ब्राह्मणान् जिघांसति, एषां निन्दया रमते, एषां प्रशंसां न अभिनन्दति, एनान् कृत्येषु न स्मरति, याचितः च अभ्यसूयति । प्राज्ञः नरः एतान् दोषान् बुध्येत् बुद्ध्वा विसर्जयेच्च ।

**अर्थः**— इत आरभ्य पद्यत्रयेण नाशमुपेष्यतो नरस्य पूर्वचिह्नानि दर्शयति—**अष्टाविति, ब्राह्मणस्वानिति, नैनानिति च** । विनशिष्यतः=नङ्क्ष्यतः नाशमुपेष्यतः, अत्र इडागम आर्षः, नरस्य=पुरुषस्य, अष्टौ=अष्टसंख्याकानि, पूर्वम्=आदावेव भावीनि, निमित्तानि=कारणानि चिह्नानीत्यर्थः, सन्ति । एषः=नाशं प्राप्स्यन् नरः, प्रथमम्=आदौ सर्वस्मात् पूर्वमिति यावत्, ब्राह्म-

णान्=विप्रान् 'विप्रश्च ब्राह्मणोऽसौ षट्कर्मा' इत्यमरः, द्वेष्टि=द्वेषं करोति, च ततः, ब्राह्मणैः=विप्रैः, विरुध्यते=विरोधं करोति, ब्राह्मणस्वानि ब्राह्मणानां=विप्राणां स्वानि=तदधिकारं गतानि द्रव्याणि, आदत्ते=गृह्णाति, ब्राह्मणान् विप्रान् जिघांसति=हन्तुमिच्छति हन्तेः सन्नन्तद्रूपमिदम्, एषां=ब्राह्मणानां, निन्दया=दोषारोपणादिना, रमते=क्रीडति, एषां प्रशंसां=स्तुतिं, न अभिनन्दति=न कामयते, एनान्=ब्राह्मणान्, कृत्येषु=समुपस्थितेषु योजनादिकर्मसु, न स्मरति=स्मरणमपि न करोति, याचितः च=प्रार्थितः सन्नपि, अभ्यसूयति=निन्दति। प्राज्ञः=बुद्धिमान्, नरः=जनः, एतान्=पूर्वोक्तान् ब्राह्मणद्वेषादीन्, दोषान्=अवगुणान्, बुध्येत्=जानीयात्, बुध्येदिति परस्मैपदमार्षम्, बुद्ध्वा=ज्ञात्वा, विसर्जयेत्=त्यजेच्च।

**भावार्थः—**ब्राह्मणैः, सह द्वेषो विरोधश्च, ब्राह्मणानां द्रव्यहरणं, जिघांसा, निन्दाप्रीतिः, प्रशंसाऽनभिनन्दनं, कृत्येष्वस्मरणं याचने चाभ्यसूयेति नाशमुपेष्यतः पुरुषस्य पूर्वचिह्नानि प्रदर्शयता विदुरेण तान् दोषात्मना विज्ञाय तत्त्यागः कर्तव्यत्वेन सूचितः॥

**भाषा—**(जो) ब्राह्मणों से द्वेष करता है, उनका विरोध करता है, उनके धन को ले लेता है, उनको मार डालने की इच्छा करता है, उनकी निन्दा से प्रसन्न रहता है, उनकी प्रशंसा को पसन्द नहीं करता, कार्यों में उनका स्मरण नहीं करता और माँगने पर द्वेष निकालने लगता है, उस विनाशोन्मुख मनुष्य के ये आठ विनाश के पहले लक्षण हैं। बुद्धिमान् पुरुष को इन दोषों को जान लेना और जान कर छोड़ देना चाहिये॥ ९८–१००॥

**अष्टाविमानि हर्षस्य नवनीतानि भारत!।**
**वर्तमानानि दृश्यन्ते तान्येव स्वसुखान्यपि॥ १०१॥**

**अन्वयः—**भारत! इमानि अष्टौ हर्षस्य नवनीतानि वर्तमानानि दृश्यन्ते, तानि एव स्वसुखानि अपि (सन्ति)।

**अर्थः—**अष्टौ हर्षकारणानि वर्णयति त्रिभिः पद्यैः—**अष्टाविति।** भारत!=भरतकुलोत्पन्न राजर्षे!, इमानि=वक्ष्यमाणानि, अष्टौ, हर्षस्य=मुदः 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः, नवनीतानि=हैयङ्गवीनानीव रुचिकराणि, वर्तमानानि=विराजमानानि, दृश्यन्ते=अवलोक्यन्ते, तानि एव=तानि तु, स्वसुखानि अपि=आत्मसुखकारकाण्यपि, सन्ति।

**भावार्थः—**स्वसुखसाधनीभूतान्यष्टौ कारणानि लोके दृश्यन्ते, तान्युपादेयानीति॥

**भाषा—**हे भरतवंशीय राजन्! ये आठ हर्ष के सार उपस्थित दिखाई देते हैं, और वे ही अपने को सुख देनेवाले भी होते हैं॥ १०१॥

**समागमश्च सखिभिर्महांश्चैव धनागमः।**
**पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने॥ १०२॥**

**अन्वयः—**सखिभिः समागमः महान् धनागमः एव च पुत्रेण परिष्वङ्गः मैथुने सन्निपातःच।

**अर्थः—**कानि तानि हर्षकारणानीत्याह—**समागम इति।** सखिभिः=मित्रैः सह, समागमः=संमेलनं, महान्=अधिकः, धनागमः एव=धनप्राप्तिरिति, पुत्रेण=तनयेन सह, सहार्थे तृती-

या, परिष्वङ्गः=आलिङ्गनं, मैथुने=रते 'व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्' इत्यमरः, संनिपातः=विशेषेण प्रवृत्तिश्च ।

**भावार्थः—**मित्रसमागमधनागमपुत्रालिङ्गनमैथुनप्रवृत्तयो हर्षस्थानानीति ॥

**भाषा—**मित्रों से मिलना, प्रचुर धन की प्राप्ति, पुत्र का आलिङ्गन, तथा मैथुन ( स्त्रीसम्भोग ) में प्रवृत्ति ॥ १०२ ॥

**समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।**
**अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ १०३ ॥**

**अन्वयः—**समये प्रियालापः स्वयूथ्येषु समुन्नतिः अभिप्रेतस्य लाभः जनसंसदि पूजा च ।

**अर्थः—**पूर्वपद्येन चत्वारि हर्षसाधनान्युक्त्वाऽवशिष्टानि तावन्त्येव दर्शयति—**समय इति।** समये=योग्यकाले, प्रियालापः=मधुरभाषणं, स्वयूथ्येषु स्वस्य=आत्मनः यूथानि=स्वजातिसमुदायाः तत्र भवाः=उत्पन्नाः तेषु स्वयूथ्येषु, समुन्नतिः=वृद्धिः, अभिप्रेतस्य=अभीष्टस्य, लाभः=प्राप्तिः, जनसंसदि=लोकसभायां, पूजा च=सपर्या च सम्मान इति यावत् , 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः ।

**भावार्थः—**समयोचितप्रियालापस्वजातीयसमुन्नतिमनोरथावाप्तिजनसंसत्समादरा इत्येतान्यपि हर्षकारणानि सन्ति ॥

**भाषा—**( उचित ) समय पर प्रियवचन बोलना, अपने वर्ग के लोगों में उन्नति तथा अभीष्ट की प्राप्ति और जनसमाज में सम्मान ॥ १०३ ॥

**अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च ।**
**पराक्रमश्चाऽबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ १०४ ॥**

**अन्वयः—**प्रज्ञा कौल्यं दमः श्रुतं पराक्रमः अबहुभाषिता यथाशक्ति दानं कृतज्ञता च अष्टौ गुणाः पुरुषं दीपयन्ति ।

**अर्थः—**पुरुषप्रकाशकान् गुणान् वर्णयति—**अष्टाविति** । प्रज्ञा=बुद्धिः प्रकृष्टं ज्ञानं च कौल्यं=कुलीनता सत्कुलोपन्नत्वमिति यावत् , दमः=दमनम् इन्द्रियाणामिति शेषः, श्रुतं=शास्त्रं तदर्थावगतिरित्यर्थः, पराक्रमः=विक्रमः, अबहुभाषिता=अनावश्यकभाषणपरिहारः, यथाशक्ति शक्तिमनतिक्रम्येति यथाशक्ति=शक्त्यनुसारं, दानं=वितरणं, कृतज्ञता कृतं=विहितं जानाति=वेत्तीति कृतज्ञः तस्य भावः कृतज्ञता च, अष्टौ गुणाः=अनुपदमेवोक्ता अष्टौ गुणाः, पुरुषं=नरं, दीपयन्ति=प्रकाशयन्ति ।

**भावार्थ—**प्रज्ञादयोऽष्टौ गुणाः पुरुषं लोके ख्यापयन्तीति तत्सङ्ग्रह आवश्यकः ॥

**भाषा—**बुद्धि, कुलीनता, इन्द्रियदमन, अध्ययन, शूरता, मितभाषण ( बहुत न बोलना ), शक्ति के अनुसार दान देना तथा उपकार को मानना, ये आठ गुण पुरुष को कान्तिमान् बनाते हैं ॥ १०४ ॥

**नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम्।**
**क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः॥ १०५॥**

**अन्वयः**—यः विद्वान् नवद्वारं त्रिस्थूणं पञ्चसाक्षिकं क्षेत्रज्ञाधिष्ठितम् इदं वेश्म वेद, स पर कविः।

**अर्थः**—ब्रह्मविदो लक्षणमाह—**नवद्वारमिति**। यः, विद्वान्=विपश्चित् 'विद्वान् विपश्चिद्दोषज्ञः' इत्यमरः, नवद्वारं नव=नवसङ्ख्याकानि द्वाराणि=श्रोत्रादिज्ञानेन्द्रियपञ्चकमनोबुद्ध्यहङ्कारस्थूलशरीररूपा विषयग्रहणमार्गाः यस्मिन् तथाभूतं, त्रिस्थूणं तिस्रः स्थूणाः=अविद्याकामकर्मरूपाः स्तम्भा इवाधारभूताः यस्मिंस्तादृशं, पञ्चसाक्षिकं पञ्च=शब्दादयः साक्षिणः=उदासीनरूपेण द्रष्टारः यस्मिन्नेवम्भूतं, क्षेत्रज्ञाधिष्ठितं क्षेत्रं=शरीरं जानातीति क्षेत्रज्ञः=ज्ञानाधिकरणम् आत्मा 'क्षेत्रज्ञ आत्मा पुरुषः' इत्यमरः, तेन अधिष्ठितं=कृताधिष्ठानम्, इदं=दृश्यमानं, वेश्म=शरीररूपं सद्म, वेद=जानाति, सः=विद्वान्, परः=श्रेष्ठः, कविः=क्रान्तदर्शी ब्रह्मविदित्यर्थः, अस्तीति शेषः।

**भावार्थः**—स्तम्भत्रयाधिकरणकं नैकसाक्षिकं नवसंख्याकद्वारयुतं स्वाम्यधिष्ठितं गृहमिव अविद्यामूलकं शब्दादिविषयवत् श्रोत्रादिनवच्छिद्रयुतं जीवाधिष्ठितं शरीरं यो जानीयात् स एव ब्रह्मविद् भवितुमर्हति। अनस्तज्ज्ञानं पुंसामत्यन्तमुचितमिति तदर्थं यत्नो विधेयः॥

**भाषा**—जो विद्वान् पुरुष नौ (कान, आंख आदि दरवाजेवाले, तीन (वात, पित्त तथा कफ) खम्भोंवाले, पांच (रूप, रस, गन्ध, स्पर्श तथा शब्द) साक्षीवाले, आत्मा के निवासस्थान इस शरीररूपी घर को जानता है, वह बहुत बड़ा कवि (बुद्धिमान्, ब्रह्मज्ञानी) है॥१०५॥

**दश धर्मं न जानन्ति धृतराष्ट्र! निबोध तान्।**
**मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः॥ १०६॥**
**त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश।**
**तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः॥ १०७॥**

**अन्वयः**—धृतराष्ट्र! दश धर्मं न जानन्ति, तान् निबोध—मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धः बुभुक्षितः त्वरमाणः लुब्धः भीतः कामी च ते दश (सन्ति)। तस्मात् पण्डितः एतेषु सर्वेषु न प्रसज्जेत्।

**अर्थः**—धर्माज्ञानिनो गणयन्नाह युग्मेन—**दशेति त्वरमाण इति च**।

हे धृतराष्ट्र!=राजन्!, दश=दशविधा मनुष्याः, धर्मं श्रुतिमूलकं सदाचारं, न जानन्ति=नाऽवगच्छन्ति, तान्, निबोध=विद्धि, मत्तः=मद्यादिना मदं प्राप्तः, प्रमत्तः=विषयासक्त्याऽनवहितः 'प्रमादोऽनवधानता' इत्यमरः, उन्मत्तः=धातुदोषादिना उन्मादसंज्ञकं रोगं प्राप्तः, श्रान्तः=भाराद्याहरणादिना श्रमं प्राप्तः, क्रुद्धः=कुपितः, बुभुक्षितः=क्षुधितः, त्वरमाणः=शीघ्रताकारी, लुब्धः=अभिलाषुकः, भीतः=भीतिमाप्तः, कामी=कामुकश्च; ते=धर्माज्ञानिनः, दश=परि·

गणिता अमी दश, सन्ति । तस्मात्=हेतोः, पण्डितः=प्राज्ञः, एतेषु=पूर्वोक्तेषु मत्तादिषु, सर्वेषु= समस्तेषु, न=नैव, प्रसज्जेत=प्रसक्तिं कुर्यात् , अत्रात्मनेपदमार्षम् ।

**भावार्थः—**मत्तादयो दश धर्मविदो नेति हेयत्वेनापि तेऽवश्यमभ्युपगन्तव्या इति ॥

**भाषा—**हे धृतराष्ट्र ! नशे में मस्त, लापरवाह, पागल, थका हुआ, क्रोधी, भूखा, जल्दबाज़, लोभी, डरा हुआ तथा कामी, ये दस धर्म को नहीं जानते, आप इन्हे जान लीजिए । इसलिए विद्वान् पुरुष को इन सबमे कभी आसक्ति ( स्नेह ) नहीं रखनी चाहिए ॥१०६–१०७॥

**अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।**
**पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ १०८ ॥**

**अन्वयः—**अत्र एव सुधन्वना असुरेन्द्रेण च पुत्रार्थम् एव गीतम् इमं पुरातनं इतिहासम् उदाहरन्ति ।

**अर्थः—अत्रैवेति ।** अत्र एव=अस्मिन् विषय एव, सुधन्वना = सुधन्वाख्येन, असुरेन्द्रेण= दैत्याधिपेन च, पुत्रार्थम् एव=पुत्रस्यैव कृते, गीतं=कथितम् , इमम्=एतं, पुरातनं=प्राचीनम् , इतिहासं = पुरावृत्तम् 'इतिहासः पुरावृत्तः' इत्यमरः, उदाहरन्ति=दृष्टान्तरूपेणोपस्थापयन्ति, नीतिविद इति शेषः ।

**भावार्थः—**धर्माज्ञानिनां विषये पुत्रार्थं सुधन्वादिप्रोक्त इतिहासोऽस्माभिः शरणीकरणीयः ॥

**भाषा—**इस विषय में ( नीतिज्ञ लोग ) इस पुराने इतिहास का उदाहरण देते हैं, जिसे सुधन्वा तथा असुरों के राजा ने अपने पुत्र से कहा था ॥ १०८ ॥

**यः काममन्यू प्रजहाति राजापात्रे प्रतिष्ठापयते धनं च ।**
**विशेषविच्छ्रुतवान् क्षिप्रकारी तं सर्वलोकः कुरुते प्रमाणम् ॥ १०९ ॥**

**अन्वयः—**यः राजा काममन्यू प्रजहाति, पात्रे धनं प्रतिष्ठापयते, विशेषवित् श्रुतवान् क्षिप्रकारी च भवति, सर्वलोकः तं प्रमाणं कुरुते ।

**अर्थः—य इति ।** यः, राजा=नृपः, काममन्यू कामः मदनविकारः मन्युः=क्रोधः च तौ, 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः, प्रजहाति=सर्वथा त्यजति, पात्रे=सत्पात्रे, धनं=द्रव्यं, प्रतिष्ठापयते=दानेन तदधीनीकरोति च, विशेषवित्=अधिकज्ञः, अथवा विशेषं=वस्तुसम्बन्धितरतमभावं जानातीति सः, श्रुतवान्=शास्त्रज्ञः, क्षिप्रकारी=आलस्यं विहाय शीघ्रं कार्यकर्ता च, भवति, सर्वलोकः सर्वश्चासौ लोकश्च सर्वलोकः=समस्तो जनः, तं=राजानं, प्रमाणं = मान्यस्थानीयं, कुरुते=करोति ।

**भावार्थः—**जितकामक्रोधः सत्पात्रदाता शास्त्रज्ञः कार्यकर्ता च राजा सर्वेषां प्रमाणं भवति॥

**भाषा—**जो राजा काम और क्रोध का त्याग करता है, सुपात्र को धन देता है, अधिक जानता है या वस्तुओं के तारतम्य ( समानता असमानता आदि ) को जानता है, शास्त्रों का अध्ययन करता है तथा कर्तव्य को शीघ्र कर डालता है, उसे सब लोग प्रमाण ( आदर्श ) मानते हैं ॥ १०९ ॥

**जानाति विश्वासयितुं मनुष्यान् विज्ञातदोषेषु दधाति दण्डम् ।**
**जानाति मात्रां च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ॥ ११० ॥**

**अन्वयः**—(यः) मनुष्यान् विश्वासयितुं जानाति, विज्ञातदोषेषु दण्डं दधाति, मात्रां जानाति, तथा क्षमां च जानाति समग्रा श्रीः तादृशं तं जुषते।

**अर्थः—जानातीति**। यः, मनुष्यान्=जनान् , विश्वासयितुं=विश्वासं जनयितुं, जानाति=वेत्ति, विज्ञातदोषेषु विज्ञाताः=बुद्धाश्च ते दोषाः=अवगुणाः तेषु दोषेषु विज्ञातेषु सत्स्वित्यर्थः, दण्डं=शारीरमार्थं वा, दधाति=धारयति पातयतीत्यर्थः, मात्राम्=अपराधानुसारेण दण्डप्रमाणं, जानाति=वेत्ति, तथा, क्षमां=तितिक्षां च जानाति, समग्रा=सम्पूर्णा, श्रीः=राज्यलक्ष्मीः, तादृशं= पूर्वोक्तगुणविशिष्टं, तं=भूपं, जुषते=सेवते।

**भावार्थः**—मनुष्येषु विश्वासमुत्पाद्य तेषां दोषानवगत्य तदनुसारेण दण्डपातादिव्यवस्थां क्षमाप्रदानं च कुर्वन् भूपः समग्राया राज्यलक्ष्म्याः पात्रं भवतीति।

**भाषा**—जो ( राजा ) मनुष्यों को ( अपने में ) विश्वास कराने का ढङ्ग जानता है, ज्ञात अपराधियो को दण्ड देता है, दण्ड की न्यूनाधिक मात्रा ( परिमाण ) को तथा क्षमा करने के ढंग तथा अवसर को जानता है, उसके पास सारी सम्पत्ति चली आती है ॥ ११० ॥

**सुदुर्बलं नाऽवजानाति कञ्चिद्युक्तो रिपूं सेवते बुद्धिपूर्वम् ।**
**न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ॥ १११ ॥**

**अन्वयः**—यः कञ्चित् सुदुर्बलं न अवजानाति, युक्तः ( सन् ) रिपुं बुद्धिपूर्वं सेवते, बलस्थैः विग्रहं न रोचयते, काले विक्रमते च, सः धीरः।

**अर्थः—सुदुर्बलमिति**। यः=नृपः, कञ्चित्=कमपि, सुदुर्बलं सुतराम्=अत्यन्तं दुर्बलम्= अशक्तं नरं, न अवजानाति=न अवमानयति न तिरस्कुरुत इति यावत् , युक्तः सन्=सहितः सन् शक्त्या सैन्येन चेति शेषः, रिपुं=शत्रुं बुद्धिपूर्वं=बुद्धिपुरःसरं यथा स्यात्तथा ज्ञात्वैवेत्यर्थः, सेवते= भजते, बलस्थैः=सेनामध्यस्थितैः शत्रुभिः सह, विग्रहं=युद्धम् 'अस्त्रियां समराऽनीकरणाः कलह- विग्रहौ' इत्यमरः, न रोचयते=न कामयते, काले=समुचिते समय आगते सति, विक्रमते=पराक्रमते च स्वसामर्थ्यं दर्शयतीत्यर्थः, सः, धीरः,=गम्भीरः धैर्यशाली विचारवांश्चेत्यर्थः, अस्तीति, कथ्यते इति वा शेषः।

**भावार्थः**—यः किलः नरपतिर्न दुर्बलस्यापमानं कुरुते, बलसम्पन्नोऽपि किञ्चिदुद्दिश्य शत्रु- मेव भजते, न सदा युद्धमभिलषति, सम्प्राप्ते च युद्धे स्वपराक्रमं दर्शयति, स धीरो ज्ञेयः ॥

**भाषा**—जो राजा किसी अत्यन्त बलहीन पुरुष का अपमान नहीं करता, शक्ति या सेना से सम्पन्न होते हुए भी शत्रु के साथ बुद्धिपूर्वक व्यवहार करता है, बलवानों के साथ युद्ध नहीं पसन्द करता, तथा उचित समय पर पराक्रम दिखलाता है, वही धीर (बुद्धिमान् तथा धैर्यवान्) है १११

**प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाऽप्रमत्तः ।**
**दुःखं च काले सहते महात्मा धुरन्धरस्तस्य जिताः सपत्नाः ॥ ११२ ॥**

**अन्वयः—**धुरन्धरः महात्मा ( यः ) आपदं प्राप्य कदाचित् न व्यथते, अप्रमत्तः उद्योगम् अन्विच्छति, काले दुःखं च सहते, तस्य सपत्नाः जिताः ।

**अर्थः—प्राप्येति ।** दुरन्धरः धुरं=राज्यभारं धरति=विभर्तीति धुरन्धरः, महात्मा महान् आत्मा यस्यासौ महात्मा=उन्नतः, यः=भूपः, आपदं=विपदं, प्राप्य=अवाप्य, कदाचित्=जातु, न व्यथते=न पीडां प्राप्नोति, अप्रमत्तः=अवहितः 'प्रमादोऽनवधानता' इत्यमरः, उद्योगं=प्रयत्नम् , अन्विच्छति=अन्विष्यति, काले=समये समये, दुःखं=व्यथां च 'पीडा बाधा व्यथा दुःखम्' इत्यमरः, सहते=मर्षयति, तस्य=भूपालस्य, सपत्नाः=रिपवः 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदाः' इत्यमरः, जिताः=स्वयमेव विजिताः ।

**भावार्थः—**यो विपद्यपि न कदापि दुःखमाप्नोति, सावधानश्च प्रयत्नपरायणो भवति, समये च दुःखमपि सहने, तस्य शत्रवस्तु स्वयमेव जिताः । तदर्थं जनेन तथा भवितुं प्रयतितव्यमिति ॥

**भाषा—**जो अग्रगण्य महापुरुष आपत्ति पड़ने पर कभी दुःखी नहीं होता प्रत्युत सावधानी के साथ उद्योग का आश्रय लेता है, तथा ( उचित ) समय पर दुःख सहता है, उसके शत्रु स्वयं ही विजित हो जाते हैं ॥ ११२ ॥

**अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्शम् ।**
**दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव ॥११३॥**

**अन्वयः—**यः च गृहेभ्यः अनर्थकं विप्रवासं, पापैः अनर्थकं सन्धिम् , अनर्थकं परदाराभिमर्शम् , अनर्थकं दम्भम् , अनर्थकं स्तैन्यम् , अनर्थकं पैशुनम् , अनर्थकं मद्यपानं च न सेवते, (सः) सदा एव सुखी ( भवति ) ।

**अर्थः—अनर्थकमिति ।** अनर्थकमिति प्रतिद्वितीयान्तपदमन्वेति, यश्च=भूपः जनः वा गृहेभ्यः=आलयात्, अत्र गृहशब्दः पुंलिङ्गो न तु नपुंसकः, अत एव बहुवचनत्वमपि तस्य तत्स्वाभाव्यात्, तथाचाऽमरः—'गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः' इति, अनर्थकम्=अप्रयोजनं, विप्रवासं=देशान्तरगमनं पापैः=दुष्टैः सह, अनर्थकम्=अनर्थकारिणं, सन्धिं=षड्गुणान्यतमं परस्परं सम्मेलनं, सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड् गुणाः' इत्यमरः, अनर्थकं, परदाराभिमर्शं परस्य=अन्यस्य, दाराः=कुटुम्बिनी 'अथपुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः, तेषाम् अभिमर्शः=धर्षणं तम् , अनर्थकं दम्भं=वृथाडम्बरम्, अनर्थकं, स्तैन्यं=चौर्यम् , अनर्थकं, पैशुनं=खलतां 'पिशुनो दुर्जनः खलः' इत्यमरः, तथैव अनर्थकं, मद्यपानं मद्यस्य=मदिरायाः पानं च, न सेवते=न भजति, सः, सदैव सर्वदैव, सुखी=सुखपूर्णः, भवति ।

**भावार्थः—**योऽनर्थकराणां प्रवासपापिसन्धिपरस्त्रीसङ्गमदम्भचौर्यदुष्टतामद्यपानानां सेविता न भवेत् , स एव सदा सुखं लभेत ॥

**भाषा—**जो ( राजा या पुरुष ) व्यर्थ घर से दूर निवास, पापियों से मेल, परस्त्रीगमन, पाखण्ड, चोरी, चुगलखोरी तथा मदिरापान नहीं करता, वह सदा सुखी रहता है ॥ ११३ ॥

**न संरम्भेणाऽऽरभते त्रिवर्गमाकारितः शंसति तत्त्वमेव ।**
**न मित्रार्थे रोचयते विवादं नाऽपूजिता कुप्यति चाप्यमूढः ॥ ११४ ॥**
**न योऽभ्यसूयत्यनुकम्पते च न दुर्बलः प्रातिभाव्यं करोति ।**
**नाऽत्याह किञ्चित् क्षमते विवादं सर्वत्र तादृग् लभते प्रशंसाम् ॥११५॥**

**अन्वयः**—यः संरम्भेण त्रिवर्गं न आरभते, आकारितः तत्त्वम् एव शंसति, मित्रार्थे विवादं न रोचयते, अपूजितः न कुप्यति, अमूढः अपि च, न अभ्यसूयति, च अनुकम्पते, दुर्बलः ( सन् ) प्रातिभाव्यं न करोति, किञ्चित् न अत्याह, विवाद क्षमते, तादृक् सर्वत्र प्रशंसां लभते ।

**अर्थः—नेति, न य इति च ।** यः=पुरुषः राजा वा, संरम्भेण=क्रोधेन, त्रिवर्गं=धर्मकामार्थान् 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः, न आरभते=नोपक्रमते, आकारितः=आहूतः पृष्टः सन्नित्यर्थः, 'हूतिराकारणाह्वानम्' इत्यमरः, तत्त्वम् एव=सारमेव, शंसति=कथयति, मित्रार्थे=सुहृन्निमित्तं, विवादं=वाक्कलहं, न रोचयते=न कामयते, अपूजितः=असंमानितोऽपि न=नैव, कुप्यति च=क्रुध्यति च, अमूढः न मूढः=मूर्खः अमूढः=विद्वान् अपि च, न अभ्यसूयति=व्यर्थं दोषाविष्करणं न करोति, च=किन्तु, अनुकम्पते=दयते, दुर्बलः=निर्बलः सन्, प्रातिभाव्यं प्रतिभूरत्र प्रतिपक्षः शत्रुः, न मध्यस्थः तस्य भावः, तत् प्रातिभाव्यं=विरोधं, न करोति=न विदधाति, किञ्चित्=किमपि, न अत्याह=न अतिक्रम्य ब्रवीति, विवादं=परस्परकलहं क्षमते=सहते, तादृक्=तथाविधः पुरुषः क्षितिपो वा, सर्वत्र=सर्वस्मिन् काले स्थले च, प्रशंसां=स्तुतिं, लभते=प्राप्नोति ।

**भावार्थः**—सक्रोधं त्रिवर्गानारम्भकः, प्रश्नतत्त्वाख्याता, सुहृदर्थे विवादाऽनभिलाषी, संमानाभावेऽपि शान्तो, दोषाऽनाविष्कर्ता, दयालुर्विरोधी, परिमितभाषी, विवादक्षमी च पुरुषः सर्वत्र प्रशंसां लभते, तस्मात्तथा भवितव्यमिति ॥

**भाषा**—जो क्रोध ( उतावलेपन ) के साथ धर्म, अर्थ तथा काम को आरम्भ नहीं करता, पूछने पर असली बात ही बतलाता है, मित्र के कारण झगड़ा नहीं पसन्द करता, आदर न पाने पर क्रुद्ध नहीं होता, मोह को नहीं प्राप्त होता, ईर्ष्यावश लोगों मे दोष नहीं ढूंढ़ता प्रत्युत उनपर दया करता है, दुर्बल होने पर ( बलवान् का ) विरोध नहीं करता, जरा भी बढ़कर नहीं बोलता, तथा झगड़े को शान्त कर देता है ऐसा ( राजा अथवा पुरुष ) सब जगह प्रशंसा पाता है ॥ ११४–११५ ॥

**यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् ।**
**न मूर्छितः कटुकान्याह किञ्चित् प्रियं सदा तं कुरुते जनो हि ॥११६॥**

**अन्वयः**—यः जातु उद्धतं वेषं न कुरुते, पौरुषेण अपि अन्यान् न विकत्थते, मूर्च्छितः किञ्चित् कटुकानि न आह, जनः सदा तं प्रियं कुरुते हि ।

**अर्थः—य इति ।** यः, जातु=कदाचित्, उद्धतम्=असौम्यं, वेषं=नेपथ्यम् 'आकल्पवेषौ नेपथ्यम्' इत्यमरः, न कुरुते=न दधाति, पौरुषेण=पुरुषार्थेनापि शक्त्यापीत्यर्थः अन्यान्=इतरान्

न विकत्थते=आत्मश्लाघां न करोति, पौरुषे वर्तमानेऽपि नान्येषां पुरस्तादात्मप्रशंसां करोतीत्यर्थः, मूर्छितः मूर्च्छा अस्यास्तीति मूर्च्छितः 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच् प्रत्ययः, मूर्च्छासदृशीं कष्टप्रदां दशामाप्तोऽपि, किञ्चित्=अल्पमपि यथा स्यात्तथा, कटुकानि=कटुवचनानि, न आह=न ब्रवीति जनः=लोकः लोकस्तु भुवने जने' इत्यमरः; सदा=सर्वदा, तं=नरं, प्रियं=प्रीतिपात्रं कुरुते=विधत्ते हीति निश्चयेन ।

**भावार्थः—**अनुद्धतवेषः पौरुषवानप्यनात्मश्लाघी परैरुद्वेजितोऽपि न कटुवक्ता पुमान् सदा सर्वप्रियो भवति ॥

**भाषा—**जो कभी उद्दण्डतासूचक वेष नहीं धारण करता, पौरुष ( सामर्थ्य ) होने पर भी दूसरों से डींग नहीं हाँकता, व्याकुल होने पर भी कभी कटुवचन नहीं कहता, उस मनुष्य को सदा लोग अपना प्यारा बना लेते हैं ॥ ११६ ॥

**नवैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नाऽस्तमेति ।**
**न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ॥ ११७ ॥**

**अन्वयः—**( यः ) प्रशान्तं वैरं न उद्दीपयति, दर्पं न आरोहति, अस्तं न एति, दुर्गतः अस्मि इति अकार्यं न करोति, आर्याः तं परम् आर्यशीलम् आहुः ।

**अर्थः—**आर्यान् लक्षयन्नाह—**न वैरमिति** । यः, प्रशान्तं=शान्ति, गतं, वैरं=विद्वेषं 'वैरं विरोधो विद्वेषः' इत्यमरः, न उद्दीपयति=न उद्भासयति, दर्पम्=अवलेपं 'दर्पोऽवलेपः' इति कोशः, न आरोहति=नाधिरोहति, अस्तं=नाशं हीनतामिति यावत् , न एति=न प्राप्नोति, दुर्गतः=दरिद्रः 'दरिद्रो दुर्गतोऽप्यसौ' इत्यमरः, अस्मीति, अकार्यं=दुष्कार्यं, न करोति=न कुरुते, आर्याः=मान्याः, तं=नरं, परं=श्रेष्ठम्, आर्यशीलम् आर्यं=पूज्यं शीलं=स्वभावः यस्य अथवा आर्याणां=मान्यानां शीलमिव शीलं=सद्वृत्तं यस्य तादृशम् , 'शीलं स्वभावे सद्वृत्ते' इत्यमरः, आहुः=कथयन्ति ।

**भावार्थः—**प्रशान्तवैरानुद्दीपकोऽनभिमानवानहीनश्च दुर्गतत्वेऽपि यो नाऽकार्यकर्ता स सच्चरित इत्युच्यते बुधैरिति ।

**भाषा—**जो ( पुरुष ) शान्त हो गये हुए वैर को फिर प्रज्वलित नहीं करता, गर्व नहीं करता, हीनता को नहीं प्राप्त होता तथा 'मैं विपत्ति में हूँ'—ऐसा सोचकर अनुचित काम नहीं करता, उसे श्रेष्ठ लोग सबसे बढ़कर श्रेष्ठ आचरणवाला कहते हैं ॥ ११७ ॥

**न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः ।**
**दत्त्वा च पश्चात् कुरुते न तापं स कथ्यते सत्पुरुषाऽऽर्यशीलः ॥ ११८ ॥**

**अन्वयः—**यः स्वे सुखे प्रहर्षं न कुरुते, 'वै' इति पादपूरणे, अन्यस्य दुःखे प्रहृष्टः न भवति, दत्त्वा च पश्चात् तापं न कुरुते, हे सत्पुरुष ! स आर्यशीलः कथ्यते ।

**अर्थः—नेति** । यः=पुरुषः, स्वे=स्वकीये, सुखे=शर्मणि 'शर्मशातसुखानि च' इत्यमरः, प्रहर्षं=प्रमोदं, न कुरुते=न करोति न दर्शयतीत्यर्थः, अन्यस्य=इतरस्य, दुःखे=कष्टे, प्रहृष्टः=स-

न्तुष्टः, न भवति, दत्त्वा च=दानं कृत्वा च, पश्चात्=अनन्तरं, तापं=सन्तापं, न कुरुते, हे सत्पुरुष !=सज्जन !, सः=नरः आर्यशीलः=सच्चरितः, अथवा 'सत्पुरुषार्यशीलः' इत्येकं पदं स्वीकृत्य सत्पुरुषेषु=सज्जनेषु आर्यशीलः=सदाचारशालीति तदर्थः कार्यः, कथ्यते=उच्यते ।

**भावार्थः**—स्वसुखे परदुःखे च यो न हृष्यति, दानोत्तरं च न पश्चात्तापं करोति, स सच्चरित इति ॥

**भाषा**—जो पुरुष अपने सुख तथा दूसरे के दुःख के समय विशेष प्रसन्न नहीं होता तथा दान देकर बाद में पछताता नहीं, हे सज्जन ! वह उत्तम आचारवाला अथवा सज्जनों में सदाचारी कहलाता है ॥ ११८ ॥

**देशाचारान् समयाञ्जातिधर्मान् बुभूषते यः स परावरज्ञः ।**
**स यत्र तत्राऽभिगतः सदैव महाजनस्याऽऽधिपत्यं करोति ॥ ११९ ॥**

**अन्वयः**— यः देशाचारान् समयान् जातिधर्मान् बुभूषते, सः परावरज्ञः ( अस्ति ) । सः यत्र अभिगतः, तत्र सदा एव महाजनस्य आधिपत्यं करोति ।

**अर्थः—देशाचारानिति ।** यः=नरः, देशाचारान् देशानां=भिन्नभिन्नानां जनपदानाम् आचारान्=स्मृत्युक्तान् सदाचारान् , समयान्=आचारान् भाषादिभेदानिति यावत् , 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः, जातिधर्मान् जातिः=ब्राह्मणत्वादिः तस्याः धर्माः=अध्ययनाध्यापनदुर्बलरक्षणकृषिसेवाप्रभृतयः तान् , बुभूषते भवितुमिच्छतीति बुभूषते=भुत्सति, आत्मनेपदमार्षम् , सः=नरः, परावरज्ञः परं च अवरं च परावरे=उत्तमाधमे जानाति=वेत्तीति परावरज्ञः=उत्तमाधमविवेकशाली, अस्ति । सः=तथाविधो नरः, यत्र=यस्मिन् देशे, अभिगतः=व्याप्तः, गत्वा तिष्ठतीत्यर्थः, तत्र=तस्मिन् देशे, सदैव=सर्वदैव, महाजनस्य=सतांसमूहस्य, आधिपत्यं=प्रभुत्वं, करोति=विधत्ते ।

**भावार्थः**—देशाचारादिव्यवहारविद् विवेकी यत्रैव गच्छति तत्रैव मान्यो भवतीति ।

**भाषा**—जो मनुष्य देश के व्यवहार, भाषाभेद तथा जातियों के धर्मों ( कर्तव्यों ) को जानने की इच्छा करता है वह उत्तम अधम का विवेक करने वाला होता है । वह जहाँ पहुँचता है वहीं बहुत से लोगों पर अपनी प्रभुता स्थापित करता है ॥ ११९ ॥

**दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पशुनं पूगवैरम् ।**
**मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान् वर्जयेत् स प्रधानः ॥ १२० ॥**

**अन्वयः**—यः दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरं मत्तोन्मत्तैः दुर्जनैः च वादम् अपि वर्जयेत , स प्रधानः प्रज्ञावान् ।

**अर्थः—दम्भमिति ।** यः=पुमान् भूपः वा, दम्भम्=आडम्बरं, मोहं=चित्तविभ्रमं, मत्सरम्=अन्यशुभद्वेषं 'मत्सरोऽन्यशुभद्वेषः' इत्यमरः, पापकृत्यं=दुष्कर्माचरणं, राजद्विष्टं राज्ञो=भूपस्य, द्विष्टं=द्वेषं, पैशुनं=दुर्जनत्वं, पूगवैरं पूगेन=वृन्देन समूहेनेति यावत् , 'पूगः क्रमुकवृन्दयोः' इत्यमरः, वैरं=विरोधं, मत्तोन्मत्तैः मत्ताः=मदिराशौण्डाः उन्मत्ताः=ग्रहाद्यावेशवन्तश्च

तैः, दुर्जनैः च=दुष्टैरपि, सहेति शेषः, वादं=विवादमपि, वर्जयेत्=परिहरेत्, सः, प्रधानः=मुख्यः, प्रज्ञावान्=बुद्धिमान्, अस्तीत्यध्याहार्यम्।

**भावार्थः**—दम्भमोहमत्सरदुराचरणराजद्वेषखलनामङ्कविरोधमत्तोन्मत्तदुर्जनविवादपरित्यागेन यः कोऽपि विद्वत्सु प्राथम्यं लभत इति ॥

**भाषा**—जो बुद्धिमान् पुरुष पाखण्ड, अज्ञान, दूसरो की भलाई से द्वेष, पापयुक्त कर्म, राजा से वैर, चुगलखोरी, संघ से वैर, और मतवाले, पागल तथा दुष्ट आदमियों के साथ विवाद नहीं करता वह श्रेष्ठ है ॥ १२० ॥

**दानं मोहं दैवतं मङ्गलानि प्रायश्चित्तान् विविधाँल्लोकवादान्।**
**एतानि यः कुरुते नैत्यकानि तस्योत्थानं देवता राधयन्ति ॥ १२१ ॥**

**अन्वयः**—यः दानं मोहं दैवतं मङ्गलानि विविधान् प्रायश्चित्तान् लोकवादान् नैत्यकानि एतानि कुरुते, देवताः तस्य उत्थानं राधयन्ति।

**अर्थः—दानमिति**। यः, दानं=सत्पात्रे प्रतिपादनं, मोहं=प्रेम, दैवतं=वृन्दारकं, मङ्गलानि=शुभकर्माणि 'कल्याणं मङ्गलं शुभम्' इत्यमरः, विविधान्=अनेकप्रकारान्, प्रायश्चित्तान्=श्रुतिस्मृतिप्रोक्तानि पापापनोदीनि कर्माणि, लोकवादान्=लोकोक्तीः, नैत्यकानि=नित्यं कर्तव्यानि, एतानि=पूर्वोक्तानि कर्माणि, कुरुते=आचरति, देवताः=देवाः 'वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्' इत्यमरः, तस्य=पुंसः, उत्थानम्=उन्नतिं, राधयन्ति=साधयन्ति।

**भावार्थः**—दानप्रेमदेवतासम्बन्धिकर्ममङ्गलविविधप्रायश्चित्तलोकवादानां नित्याऽनुष्ठातुरुन्नतये देवताः सदा प्रयतन्त इति ॥

**भाषा**—जो पुरुष दान, प्रीति, देवपूजन, माङ्गलिक कृत्य, पाप का निवारण करनेवाले कर्म तथा अनेक प्रकार के लोकाचार, इन नित्य किये जानेवाले कर्मों को करता है उसकी उन्नति देवता लोग चाहते हैं ॥ १२१ ॥

**समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथां च।**
**गुणैर्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाः सुनीताः॥१२२॥**

**अन्वयः**—(यः) समैः विवाहं कुरुते, हीनैः न, समैः सख्यं व्यवहारं कथां च कुरुते, गुणैः विशिष्टान् च पुरः दधाति, तस्य विपश्चितः नयाः सुनीताः (भवन्ति)।

**अर्थः—समैरिति**। यः, समैः=समानगुणशीलैः सह, विवाहं=पाणिपीडनं, कुरुते=विधत्ते, हीनैः=हीनगुणैः, न=न कुरुते, समैः=समगुणैः, सख्यं=मित्रतां, व्यवहारं=दानाऽदानादिकं, कथां=वार्तालापादिकं च, कुरुते=विदधाति, गुणैः=दयादिभिः, विशिष्टान् च=अधिकान् अधिकगुणविशिष्टान् पुरुषांस्तु, पुरः=अग्रे, दधाति=धारयति।सम्मानयतीत्यर्थः, तस्य, विपश्चितः=विदुषः, नयाः=नीतयः, सुनीताः=सम्यक् कृताः भवन्ति।

**भावार्थः**—यः किल समानगुणैरेव समं विवाहमित्रताव्यवहारकथाः करोति, न कदापि हीनैः समम्, अपि च गुणिनः सम्मानयति, स एव सम्यङ् नीत्युपयोगविद् विद्वान् ॥

**भाषा**—जो विद्वान् पुरुष बराबरीवालों के साथ ही विवाह, मित्रता, व्यवहार तथा

बातचीत करता है और ( दया, उदारता आदि ) गुणों से बड़े बड़े लोगों को अनुकूल बनाता है, उसी की नीति सफल है ॥ १२२ ॥

**मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा।**
**ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः ॥ १२३ ॥**

**अन्वयः**—( यः ) आश्रितेभ्यः संविभज्य मितं भुङ्क्ते, अमितं कर्म कृत्वा मितं स्वपिति याचितः सन् अमित्रेषु अपि ददाति, अनर्थाः आत्मवन्तं तं प्रजहति।

**अर्थः—मितमिति**। यः, आश्रितेभ्यः=प्राप्ताश्रयेभ्यः सेवकेभ्य शुभाभिलाषिभ्यश्चेत्यर्थः, संविभज्य=सम्यग् विभागं कृत्वा, मित=परिमित यथा स्यात्तथा, भुङ्क्ते=अश्नाति, अमितम्= अपरिमितम् अधिकमिति यावत्, कर्म=कार्यं, कृत्वा=विधाय, मित=परिमितं स्वल्पमेवेति यावत्, स्वपिति=निद्राति, शेते इत्यर्थः, याचितः सन्=प्रार्थितः सन्, अमित्रेषु अपि=रिपुषु च रिपुभ्यः इत्यर्थः, चतुर्थ्यर्थे सप्तम्यत्र, सम्प्रदाने चतुर्थीविभक्तेरेवाऽनुशासनात्, ददाति=वितरति, अनर्थाः=हानयः, आत्मवन्तं=मानिनं, तं=नरं, प्रजहति=त्यजन्ति।

**भावार्थः**—आश्रितदानपूर्वकं मितभोजी बहुकर्मकर्तापि मितशायी प्रार्थनया शत्रुसाहाय्यकारी पुरुषो न कदाप्यनर्थैः स्पृश्यत इति।

**भाषा**—जो अपने आश्रितों को बांटने के बाद थोड़ा ही ( यथोचित मात्रा के भीतर ही ) भोजन करता है, बहुत अधिक काम करके थोड़ा ही ( यथोचित समय तक ही ) सोता है तथा मांगने पर शत्रुओं को भी (धन आदि) दे देता है उस मनस्वी पुरुष से अनिष्ट दूर भाग जाते हैं॥१२३॥

**चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानन्ति किञ्चित्।**
**मन्त्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥१२४॥**

**अन्वयः**—अन्ये जनाः यस्य चिकीर्षितं विप्रकृतं च कर्म न किञ्चित् जानन्ति मन्त्रे गुप्ते सम्यक् अनुष्ठिते च अस्य अल्पः अपि कश्चित् अर्थः न च्यवते।

**अर्थः—चिकीर्षितमिति**। अन्ये=इतरे, जनाः=लोकाः, यस्य=पुरुषविशेषस्य, चिकीर्षितं=कर्तुमभिलषितं, विप्रकृतं=विकारमाप्तं, च, कर्म=कार्यं, न=नैव, किञ्चित्=किमपि, जानन्ति=विदन्ति, मन्त्रे=गुप्तभाषणे रहस्य इति यावत्, गुप्ते=रक्षिते सम्यक्=उत्तमं यथा स्यात्तथा, अनुष्ठिते=विहिते, च अस्य=पुरुषस्य, अल्पः अपि=स्वल्पोऽपि, कश्चित्=कोऽपि, अर्थः=वस्तु द्रव्यं वा 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः, न च्यवते=न नश्यति।

**भावार्थः**—यदीयं जायमानं विनश्यच्च कार्यं न कोऽपि ज्ञातुं प्रभवति, रक्षणपूर्वकमन्त्रानुष्ठातासौ न कामपि हानिमवाप्नोतीति।

**भाषा**—जिस पुरुष के चाहे हुए तथा बिगड़े हुए कार्य को दूसरे लोग जरा भी नहीं जानते उसका कोई काम, कार्य सम्पादन के विचार के गुप्त तथा भली भाँति प्रयुक्त होने के कारण, नहीं बिगड़ता ॥ १२४ ॥

**यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्मानकृच्छुद्धभावः।**
**अतीव स ज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्नः॥ १२५ ॥**

**अन्वयः**—सत्यः मृदुः मानकृत् शुद्धभावः यः सर्वभूतप्रशमे निविष्टः ( भवति ), सः ज्ञातिमध्ये जात्यः प्रसन्नः महामणिः इव अति इव ज्ञायते ।

**अर्थः—य इति** । सत्यः = सत्यवाक् , मृदुः=कोमलान्तःकरणः, मानकृत् = संमानकर्ता, शुद्धभावः = निष्कलङ्कः, यः = पुरुषः, सर्वभूतप्रशमे सर्वे = समग्राः ये भूताः = प्राणिनः तेषां प्रशमः = शान्तिः तस्मिन् प्राणिमात्रस्य शान्त्यर्थमिति भावः, निविष्टः = लग्नः, भवति, सः = पुरुषः, ज्ञातिमध्ये = बन्धुमध्ये, जात्यः = अभिजातः उत्तमादाकरादुत्पन्न इति यावत् , प्रसन्नः = निर्मलः, महामणिः इव=मरकतादिमहारत्नमिव, अतीव=विशेषरूपेण मान्य इव, ज्ञायते = बुध्यते, जनैरिति शेषः ।

**भावार्थः**—सत्यत्वादिगुणविशिष्टः सर्वहितकारी च बन्धुभिः सदाद्रियत एव ।

**भाषा**—जो मनुष्य सब जीवों की शान्ति (कल्याण) मे लगा रहता है तथा सच्चा, विनम्र, ( दूसरों का ) आदर करनेवाला और पवित्र विचारवाला होता है वह अच्छी खान से निकले हुए चमकने वाले श्रेष्ठ रत्न की भांति अपनी बिरादरी में बहुत माना जाता है ॥ १२५ ॥

**य आत्मनाऽपत्रपते भृशं नरः सः सर्वलोकस्य गुरुर्भवत्युत ।**
**अनन्ततेजाः सुमनाः समाहितः स तेजसा सूर्य इवावभासते ॥ १२ ॥**

**अन्वयः**—यः नरः आत्मना भृशम् अपत्रपते, सः सर्वलोकस्य गुरुः भवति, उत सुमनाः समाहितः अनन्ततेजाः सः तेजसा सूर्यः इव, अवभासते ।

**अर्थः—य आत्मनेति** । यः नरः = पुरुषः, आत्मना = परैरज्ञातेऽप्यात्मन्यलीके स्वयमेव, भृशम् = अत्यन्तम् , अपत्रपते = लज्जते, सः = नरः, सर्वलोकस्य = सर्वजनस्य, गुरुः = मार्गदर्शको माननीयश्च, भवति, उत = अथवा, सुमनाः शोभनं = सुन्दरं मनः = अन्तःकरणं यस्य सः, समाहितः = शान्तः, अनन्ततेजाः अनन्तम् = अपरमितं तेजः = ओजः प्रतापः यस्य एवम्भूतः, सः = नरः, तेजसा = प्रतापेन सूर्यः इव = सवितेव, अवभासते = प्रकाशते ।

**भावार्थः**—अन्याविज्ञातं स्वव्यलीकं विचार्य यः स्वयमेव लज्जानुभवं करोति, स सर्वलोकगुरुराहोस्वित् सूर्य इव सुतरां सर्गोत्कर्षेण प्रकाशमायाति ॥

**भाषा**—जो पुरुष अपने अन्तःकरण से ही शर्माता है वह सब लोगों का पूज्य होता है और अपरिमिततेजयुक्त, उदारचित्त तथा सतर्क ( होने के कारण ) वह कान्ति में सूर्य की भाँति शोभित होता है ॥ १२६ ॥

**वने जाताः शापदग्धस्य राज्ञः पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।**
**त्वयैव बाला वर्धिताः शिक्षिताश्च तवादेशं पालयन्त्याम्बिकेय ! ॥ १२७ ॥**

**अन्वयः**—हे आम्बिकेय ! शापदग्धस्य राज्ञः पाण्डोः वने जाताः पञ्चेन्द्रकल्पाः पञ्च पुत्राः बालाः त्वया एव वर्धिताः शिक्षिता च ( सन्तः ) तव आदेशं पालयन्ति ।

**अर्थः**—सामान्यतो नीत्युपदेशं विधाय पाण्डुपुत्रास्त्वया राज्यप्रदानेन प्रसाद्याः, तेन त्वं सुखमवाप्स्यसीति विवक्षुः पद्याभ्यामाह—**वन इति** । हे आम्बिकेय ! = अम्बिकासुत धृतराष्ट्र !

शापदग्धस्य शापेन = मुनिप्रदत्तेनानिष्टवचनेन दग्धः = तप्तः तस्य, राज्ञः = भूपस्य, पाण्डोः = तदाख्यस्य तव भ्रातुः, वने = अरण्ये 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः, जाताः = उत्पन्नाः, पञ्चेन्द्रकल्पाः पञ्च च ते इन्द्राश्च पञ्चेन्द्रा ईषन्न्यूनाः पञ्चेन्द्राः इति पञ्चेन्द्रकल्पाः = पञ्चपुरन्दरतुल्याः, पञ्च = पञ्चसङ्ख्याकाः, तुत्राः = सूनवः, बालाः = बालकाः युधिष्ठिरादयः, त्वया एव = भवतैव, वर्धिताः = लालनपालनादिना वृद्धिं नीताः, शिक्षिताः = प्राप्तशिक्षाश्च सन्तः, तव = ते, आदेशम् = आज्ञां, पालयन्ति = रक्षन्ति त्वदाज्ञयैव कार्यं सम्पादयन्तीति यावत्।

**भावार्थः**—तव भ्राता पाण्डुः कदाचन वने कस्माच्चिन्मुनेः शापमादस्तत्रैव न्यवसत्। युधिष्ठिरादयस्तस्य पुत्रा अपि तत्रैव जन्म लेभिरे। अनाथानां बालानां तेषां त्वयैव पालन, वर्धनं शिक्षणं च कृतम्। ते च त्वदाज्ञां पालयन्त्यपीति॥

**भाषा**—हे अम्बिका के पुत्र ( धृतराष्ट्र )! शाप से पीडित राजा पाण्डु के वन में पैदा हुए पाँच इन्द्र के समान पाँचो बेटो को आपही ने बचपन से पाला तथा शिक्षा दी है और वे भी आप के आज्ञा का पालन करते हैं॥ १२७॥

**प्रदायैषामुचितं तात ! राज्यं सुखी पुत्रैः सहितो मोदमानः।**
**न देवानां नापि च मानुषाणां भविष्यसि त्वं तर्कणीयो नरेन्द्र !॥१२८॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतौ प्रथमोऽध्यायः॥

**अन्वयः**—तात ! एषाम् उचितं राज्यं प्रदाय पुत्रैः सहितः मोदमानः सुखी ( भव )। नरेन्द्र ! तत् त्वं न देवानां न अपि मानुषाणां तर्कणीयः भविष्यसि।

**अर्थः**—उपसंहरन्नाह—**प्रदायेति**। तात ! = पूजनीय राजन् !, एषां = युधिष्ठिरादीनाम्, सम्बन्धसामान्यविवक्षायां षष्ठी, उचितं = न्यायप्राप्तं, राज्यं = राष्ट्रं तदंशं वा, प्रदाय = दत्त्वा, पुत्रैः = युधिष्ठिरादिभिर्दुर्योधनादिभिश्च, सहितः = युक्तः, मोदमानः = हृष्यन्, सुखी = लब्धसुखः भव। नरेन्द्र ! = राजन् !, तत् = तस्मात्कारणात्, त्वं = भवान्, न देवानां = न अमराणां, न अपि मानुषाणां = नापि मनुष्याणां, तर्कणीयः = शङ्कनीयः भविष्यसि।

**भावार्थः**—न्यायेन पाण्डवेभ्यो राज्यं दत्त्वा सर्वैः सह सुखमनुभवन् न देवैर्नापि मनुष्यैः शङ्कितः परमां शान्तिमवाप्स्यसीति तात्पर्यम्॥

इति तत्त्वार्थदर्शिनीत्याख्यायां विदुरनीतिव्याख्यायां प्रथमोऽध्यायः समाप्तः।

**भाषा**—हे तात ! इनको ( पाण्डवों को ) न्यायसम्मत राज्य दे देने पर पुत्रों के साथ सुख तथा आनन्द का अनुभव करते हुए आप देवताओं तथा मनुष्यो मे से किन्ही के भी टीका टिप्पणी के विषय नहीं रह जायँगे॥ १२८॥

इति सरलार्थ–बोधिनी नामक विदुरनीति की हिन्दी भाषा टीका का प्रथम अध्याय समाप्त।

# अथ द्वितीयोऽध्यायः ।

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=स्वप्रश्नोत्तरं विदुरोक्तं श्रुतवान् राजा, उवाच=विदुरं प्रति अवोचत ।

**जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।**
**तद् ब्रूहि त्वं हि नस्तात ! धर्मार्थकुशलो ह्यसि ॥ १ ॥**

**अन्वयः**—हे तात ! जाग्रतः दह्यमानस्य (मे) यत् कार्यम् अनुपश्यसि, त्वं तत् नः ब्रूहि ! हि त्वं धर्मार्थकुशलः असि ।

**अर्थः**—पुनरपि धृतराष्ट्रस्तथैव चिन्तामग्नो विदुरं प्रष्टुकामः सन् वाक्प्रपञ्चं दर्शयति—**जाग्रत इति** । प्रथमाध्याये व्याख्यातोऽप्ययं श्लोकः पुनरपि प्रसङ्गादागतो व्याख्यायते—हे तात ! अनुकम्पनीय विदुर ! जाग्रतः=जागरणं कुर्वतः, दह्यमानस्य=चिन्तासन्तप्तस्य, मे, यत्, श्रेयः=कल्याणम्, अनुपश्यसि=विचारयसि, त्वं=भवान्, तत्=कल्याणकरं वचः, ब्रूहि=कथय । हि=यतः कारणात्, त्वं, धर्मार्थकुशलः=धर्मार्थविषयकगूढज्ञानवान्, असि=वर्तसे ।

**भावार्थः**—युधिष्ठिराभिप्रायमजानतो जाग्रतः सन्तप्तस्य च मे त्वन्मतेन श्रेयस्करं यद्भवेत्तन्मह्यं बोधयेति विदुरं प्रति धृतराष्ट्रकथनम् ॥

**भाषा**—धृतराष्ट्र बोले—हे भाई ? इस भाँति नींद न आने के कारण व्याकुल ( मनुष्य ) को जो कुछ कहना चाहिए वह मुझे बताओ । क्योंकि तुम धर्म और अर्थ (के ज्ञान) में निपुण हो ॥ १ ॥

**त्वं मां यथावद्विदुर ! प्रशाधि प्रज्ञापूर्वं सर्वमजातशत्रोः ।**
**यन्मन्यसे पथ्यमदीनसत्त्व ! श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥२॥**

**अन्वयः**—हे विदुर ! त्वम् अजातशत्रोः प्रज्ञापूर्वं सर्वं मां यथावत् प्रशाधि । हे अदीनसत्त्व ! त्वं यत् पथ्यं मन्यसे, कुरूणां श्रेयस्करं तत् ब्रूहि ।

**अर्थः**—**त्वं मामिति** । हे विदुर ! त्वं=भवान्, अजातशत्रोः=युधिष्ठिरस्य, प्रज्ञापूर्वं=बुद्धिपूर्वं, विचारपूर्वकमिति यावत्, सर्वं=सकलमभीष्टं, मां=मा, यथावत्=पूर्वरूपेण, प्रशाधि=उपदिश । हे अदीनसत्त्व ! न दीनं सत्त्वं यस्य तत्सम्बुद्धौ=पराक्रमशालिन्, त्वं=भवान्, यत्, पथ्यत्=उचितं कर्म, मन्यसे=बुध्यसे, कुरूणां=कुरुकुलोत्पन्नानां सर्वेषां, श्रेयस्करं=कल्याणकरं, तत्-कर्म, ब्रूहि=कथय ।

**भावार्थः**—युधिष्ठिराभिलषितं सर्वं सम्यगवबुध्य तादृशमुपदिश, येन कुरुकुलस्य श्रेयो भवेदिति विदुरं प्रति धृतराष्ट्रकथनाशयः ॥

**भाषा**—हे समर्थ विदुर ! जो बात तुम युधिष्ठिर तथा कौरव ( दोनों ) के हित की समझते हो उसे सोच कर मुझे ठीक ठीक बताओ ॥ २ ॥

**पापाशङ्की पापमेवानुपश्यन् पृच्छामि त्वां व्याकुलेनात्मनाऽहम् ।**
**कवे ! तन्मे ब्रूहि सर्वं यथावन्मनीषितं सर्वमजातशत्रोः ॥ ३ ॥**

**अन्वयः**—हे कवे ! पापाशङ्कीपापम् एव अनुपश्यन् अहं व्याकुलेन आत्मना त्वां पृच्छामि, अजातशत्रोः ( यत् ) सर्वं मनीषितं तत् सर्वं मे यथावत् ब्रूहि ।

**अर्थः**—**पापाशङ्कीति** । हे कवे=हे पण्डित ! व्यवहारकुशलेति यावत् , 'संख्यावान् पण्डितः कविः' इत्यमरः, पापाशङ्की पापम्=अनिष्टम् आशङ्कते=शङ्कां करोतीति तथा, पापम् एव=अनिष्टमेव, सर्वत्रेति शेषः, अनुपश्यन्=विचारयन् अहं व्याकुलेन=उद्विग्नेन आत्मना=अन्तःकरणेन त्वां=त्वा, पृच्छामि=प्रश्नं करोमि, अजातशत्रोः=युधिष्ठिरस्य यत् , सर्वं=सकलं, मनीषितं=काङ्क्षितम् , अस्तीति शेषः, तत्सर्वम्=अभिलषितमात्रं, मे=मह्यं, यथावत्=उचितं यथा स्यात्तथा, ब्रूहि=कथय ।

**भावार्थः**—पापात्मा पापशङ्की चाहं व्याकुलः सन् युधिष्ठिराभिलाषं यथावत् त्वत्तो ज्ञातुमिच्छामिति नृपवचनाभिप्रायः ॥

**भाषा**—अनिष्ट की आशङ्का करनेवाला मैं अनिष्ट ही देख रहा हूं, इसलिए व्याकुलचित्त होकर मैं तुमसे पूछ रहा हूं । हे व्यवहारकुशल ( विदुर ) ! युधिष्ठिर के सम्पूर्ण अभीष्ट को मुझे ठीक ठीक बताओ ॥ ३ ॥

**विदुर उवाच**—विदुरः=राज्ञा प्रार्थितो नीतिविद्विदुरः, उवाच=उत्तरयामास ।

**शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।**
**अपृष्टस्तस्य तद् ब्रूयाद्यस्य नेच्छेत् पराभवम् ॥ ४ ॥**

**अन्वयः**—( नरः ) अपृष्टः ( सन्नपि ) यस्य पराभवं न इच्छेत् , तस्य शुभं पापं वा यदि द्वेष्यं प्रियं वा यदि तत् ब्रूयात् ।

**अर्थः**—धृतराष्ट्रोक्तं वचः श्रुत्वा समुत्तरणे कृतमतेर्विदुरस्योत्तरं दर्शयति—**शुभमिति** । नरः, अपृष्टः=अकृतप्रश्नः सन्नपि, यस्य=पुंसः, पराभवं=पराजयं, न इच्छेत्=नाभिलषेत् , तस्य पुंसः, शुभं=मङ्गलं, पापम्=अशुभं वा यदि, द्वेष्यम्=अप्रियं, प्रियं=हितं वा यदि, तत्=वस्तुतत्त्वं, ब्रूयात्=कथयेत् ।

**भावार्थः**—कल्याणकाङ्क्षी पुरुषोऽपृष्टोऽपि शुभाशुभप्रियादिकं सर्वं निवेदयति ॥

**भाषा**—विदुर बोले—मनुष्य को उचित है कि जिस आदमी का नाश वह नहीं चाहता उसको बिना पूछे ही ( उसके विषय की ) कल्याण करनेवाली अथवा अहित करनेवाली, भली लगनेवाली, अथवा बुरी लगनेवाली जैसी भी बात हो उसे बता दे ॥ ४ ॥

**तस्माद्वक्ष्यामि ते राजन् ! हितं यत् स्यात् कुरून् प्रति ।**
**वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५ ॥**

**अन्वयः**—राजन् ! तस्मात् कुरून् प्रति यत् हितं स्यात् , ( तत् ) ते वक्ष्यामि । श्रेयस्करं धर्म्यं वचः ब्रुवतः मे तत् निबोध ।

**अर्थः—तस्मादिति** । राजन्=नृप ! तस्मात्=तत्कारणात् , कुरून् प्रति=कुरुवंशीयान् प्रति, यत्=वचः, हितं=पथ्यं, स्यात्=भवेत्, तत्, ते=तुभ्यं त्वामित्यर्थः, वक्ष्यामि=कथयिष्यामि । श्रेयस्करं=कल्याणकारि, धर्म्यं=धर्मयुक्तं, वचः=वाक्यं, ब्रुवतः=कथयतः, मे=मम मत्सकाशादित्यर्थः, तत्=वचः, निबोध=जानीहि ।

**भावार्थः**—कुरूणां पथ्यं श्रेयस्करं वचः श्रावयामि, अवहितः सन् शृणु तदिति ॥

**भाषा**—इसलिए हे राजन् ! मैं कौरवों के कल्याण की बात आप से कहूंगा । मैं जिस धर्मयुक्त तथा कल्याणकर वचन को कहता हूं उसे आप समझिए ॥ ५ ॥

**मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ! ।**
**अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ६ ॥**

**अन्वयः**—भारत ! मिथ्योपेतानि अनुपायप्रयुक्तानि च यानि कर्माणि सिध्येयुः, तेषु मनः मा स्म कृथाः ।

**अर्थः**—भारत !—भरतकुलोत्पन्न नरपते ! मिथ्योपेतानि मिथ्या=मृषा उपेतानि=युक्तानि मिथ्योपेतानि=द्यूतादीनि कपटपूर्णानीत्यर्थः, अनुपायप्रयुक्तानि न उपायः अनुपायः तेन प्रयुक्तानि अनुपायप्रयुक्तानि न=असन् यः उपायः=उद्योगः अनुपायः=असदुद्योगः तेन=प्रयुक्तानि=स्थापितानि असदुद्योगेन प्रवर्तितानीति यावत् , यानि, कर्माणि=कार्याणि, सिध्येयुः=सिद्धिं गच्छेयुः, तेषु=तथाविधेषु कर्मसु, मनः=स्वान्तं, 'स्वान्तं हृन्मानसं मनः' इत्यमरः, मा स्म कृथाः=न नियोजय, 'न माङ्योगे' इत्यडागमप्रतिषेधः ।

**भावार्थः**—कपटपूर्णेषु दुष्टोपायसाध्येषु च फलवत्स्वपि कार्येषु मनोनियोजनमनुचितम् ॥

**भाषा**—हे भरतवंशज ! बुरे उपायों ( जुआ आदि ) से जो कपट पूर्ण कार्य सिद्ध होते है उनमे चित्त न लगाइए ॥ ६ ॥

**तथैव योगविहितं यत्तु कर्म न सिध्यति ।**
**उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥**

**अन्वयः**—तथा एव योगविहितम् उपाययुक्तं च यत् कर्म तु न सिध्यति, मेधावी तत्र मनः न ग्लपयेत् ।

**अर्थः—तथैवेति** । तथैव=तेनैव प्रकारेण, योगविहितं योगेन=युक्त्या 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः, विहितं=कृतम् , उपाययुक्तं=सदुपायपूर्णं च, यत् , कर्म=कार्यं तु, न सिध्यति=सिद्धिं न गच्छति, मेधावी=बुद्धिमान् 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः, तत्र=तादृशे कर्मणि, मनः=चित्तं, न ग्लपयेत्=न खेदयेत् ।

**भावार्थः**—युक्तिपूर्णेषु सदुपायविहितेषु च कर्मसु निष्फलेषु जातेषु सत्सु मनोग्लानिर्नोचिता ॥

**भाषा**—और उसी भाँति अच्छे उपायों से यत्नपूर्वक किया गया कार्य यदि सफल न हो तो बुद्धिमान् को उसके लिए मन छोटा नहीं करना चाहिए ॥ ७ ॥

**अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।**
**सम्प्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ८ ॥**

**अन्वयः**—( नरः ) सानुबन्धेषु कर्मसु अनुबन्धान् अपेक्षेत, सम्प्रधार्य कुर्वीत च, वेगेन न समाचरेत् ।

**अर्थः—अनुबन्धानिति** । नरः, सानुबन्धेषु=सप्रयोजनेषु, कर्मसु=कार्येषु, अनुबन्धान्=उद्देशान्, अपेक्षेत=अपेक्षां कुर्यात् इच्छेत् प्रतीक्षेतेति यावत्, सम्प्रधार्य=प्रयोजनानि निश्चित्य, कुर्वीत=कुर्यात् च, वेगेन=जवेन, न समाचरेत्=न कुर्यात् ।

**भावार्थः**—प्रयोजनानि विचार्य निश्चित्य च कर्माण्यारभेत, सहसा न किञ्चित् कुर्यादिति ॥

**भाषा**—प्रयोजनीय कामों में ( पहले ) प्रयोजन को समझ लेना चाहिए। फिर निश्चय करके ( कार्य का आरम्भ ) करना चाहिए तथा कभी उतावलेपन से काम नहीं करना चाहिए।८॥

**अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम् ।**
**उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९ ॥**

**अन्वयः**—धीरः अनुबन्धं, कर्मणां विपाकम् एव, च आत्मनः उत्थानं च एव सम्प्रेक्ष्य ( कार्यं ) कुर्वीत, न वा ।

**अर्थः—अनुबन्धमिति** । धीरः=विवेकी नरः, अनुबन्धम्=उद्देशं प्रयोजनमिति यावत्, कर्मणा=कार्याणां, विपाकम् एव=परिणामं च, च=पुनः, आत्मनः=स्वस्य, उत्थानम्=उत्साहशक्तिहेतुमुद्यमं चैव, सम्प्रेक्ष्य=पर्यालोच्य कार्यं, कुर्वीत=कुर्यात्, न वा=अथवा न कुर्यात् ।

**भावार्थः**—कार्यप्रयोजनकार्यपरिणामस्योद्यमपर्यालोचनोत्तरं कार्यारम्भः कर्तव्यो न कर्तव्यो वेति ॥

**भाषा**—बुद्धिमान् मनुष्य कार्यों के प्रयोजन तथा परिणाम को और अपने उद्योग को भलीभाँति समझ कर कार्य करे अथवा न करे ॥ ९ ॥

**यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।**
**कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १० ॥**

**अन्वयः**—यः स्थाने वृद्धौ क्षये कोशे जनपदे तथा दण्डे प्रमाणं न जानाति, सः राज्ये न अवतिष्ठते ।

**अर्थः—यः प्रमाणमिति** । यः=भूपः, स्थाने=स्थलविषये, वृद्धौ=उन्नतिविषये आयादिविषये च, क्षये—नाशे व्ययविषये च, कोशे=अर्थौघविषये 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः, जनपदे=देशविषये, तथा, दण्डे=राजदण्डविषये, प्रमाणं=न्यूनाधिकरूपं मानं, न जानाति=न वेत्ति, सः=भूपः, राज्ये=राष्ट्रे, न अवतिष्ठते=न स्थिरां स्थिति लभते, च्युतो भवति राज्यादित्यर्थः, 'समवप्रविभ्यः स्थः' इति सूत्रेणात्मनेपदम् ।

**भावार्थः**—स्थानादिदण्डान्तानां मानानभिज्ञस्य नृपस्य राज्याच्च्युतिर्भवतीति ॥

**भाषा**—जो राजा स्थान, बढ़ती, घटती, खज़ाना, ( नगर के अतिरिक्त ) देश तथा दण्ड के

उचित विस्तार अथवा मात्रा को नहीं जानता, वह राज्यपद पर स्थिर नहीं रह सकता ॥ १० ॥

**यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।**
**युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११ ॥**

**अन्वयः—**यः तु यथा उक्तानि एतानि प्रमाणानि अनुपश्यति, धर्मार्थयोः ज्ञाने युक्तः सः राज्यम् अधिगच्छति।

**अर्थः—यस्त्विति ।** यः तु=यश्च, यथा=येन प्रकारेण, उक्तानि=शास्त्रेषु कथितानि, एतानि=स्थानादिसम्बन्धीनि, प्रमाणानि=मानानि, अनुपश्यति=विचारयति, धर्मार्थयोः=धर्मशास्त्रार्थशास्त्रयोः, ज्ञाने=बोधे, युक्तः=संलग्नः, सः, राज्यं=राष्ट्रम्, अधिगच्छति=प्राप्नोति ।

**भावार्थः—**शास्त्रोक्तदण्डादिमानविवेकी धर्मार्थयज्ञश्च पुरुषो राज्याधिकारीत्यर्थः ।

**भाषा—**जो पुरुष इन ( पूर्वोक्त बातों ) की मात्रा समझता है तथा धर्म और अर्थ के अनुभव में लगा रहता है वह राज्य प्राप्त करता है ॥ ११ ॥

**न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम् ।**
**श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२ ॥**

**अन्वयः—**राज्यं प्राप्तम् इति एव असाम्प्रतं न वर्तितव्यम्। हि जरा उत्तमं रूपम् इव, अविनयः श्रियं हन्ति ।

**अर्थः—न राज्यमीति ।** राज्यं=राष्ट्रम्, प्राप्तं=लब्धम्, इति एव=अस्मात्कारणादेव, असाम्प्रतम्=अयोग्यं, न वर्तितव्यं=नाचरणीयम्। हि=यस्माद्धेतोः, जराः=वार्धक्यम्, उत्तमं=सुन्दरं, रूपम् इव=आकारमिव, अविनय=अयोग्याचरणरूपौद्धत्यं, श्रियं=सम्पत्तिं, हन्ति=नाशयति ।

**भावार्थः—**राज्यलाभमात्रेण स्वेच्छाचारिता लक्ष्मीविनाशहेतुरिति तथाचरणमश्रेयसे भवतीति ॥

**भाषा—**यह समझ कर कि अब तो राज्य मिल गया ( अब क्या है ! ), अनुचित काम नहीं करना चाहिए, क्योंकि उद्दण्डता सम्पत्ति को उसी प्रकार नष्ट कर डालती है जैसे उत्तम आकार को बुढ़ापा ॥ १२ ॥

**भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।**
**लोभाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ १३ ॥**

**अन्वयः—**लोभाभिपाती मत्स्यः भक्ष्योत्तमप्रतिच्छन्नम् आयसं बडिशं ग्रसते, अनुबन्धं न अवेक्षते।

**अर्थः—**अनुबन्धानवेक्षणे दोषं मत्स्योदाहरणेनाह—**भक्ष्योत्तमप्रतिच्छन्निति ।** लोभाभिपाती लोभेन लिप्सया अभिपतितुं=समन्ततस्तत्रोपगन्तुं शीलं यस्यैवम्भूतः, मत्स्यः=मीनः 'मत्स्यो मीनो वैसारिणोऽण्डजः' इत्यमरः, भक्ष्योत्तमप्रतिच्छन्नं भक्ष्योत्तमेन=उत्तमभक्ष्येण प्रतिच्छन्नं=व्याप्तम्, आयसम्=अयोविकारात्मकं लोहमयमित्यर्थः, बडिशं=मत्स्यवेधनं, ग्रसते=गृह्णाति, अनुबन्धं=प्रयोजनं, न अवेक्षते=न पश्यति ।

**भावार्थः**—लोभाविष्टो मीनः प्रयोजनमनवेक्ष्यैव भक्ष्याच्छन्ने वडिशे समापतन् विध्यते॥

**भाषा**—मछली बढ़ियां चारे से ढकी हुई कटिया को लोभ में आकर निगल जाती है और उससे होनेवाली हानि का विचार नहीं करती॥ १३॥

**यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।**
**हितं च परिणामे यत्तदाद्यं भूतिमिच्छता॥ १४॥**

**अन्वयः**—भूतिम् इच्छता ( नरेण ) यत् ग्रसितुं शक्यं, यच्च ग्रस्तं परिणमेत्, परिणामे च यत् हितं ( भवेत् ), तत् ग्रस्यम् आद्यम्।

**अर्थः—यच्छक्यमिति।** भूतिम् = ऐश्वर्यम्, इच्छता = वाञ्छता, नरेण, यत्, ग्रसितुं =भक्षयितु, शक्यं =योग्यं, यच्च, ग्रस्तं=भक्षितं, परिणमेत् = लाभकरं भवेत्, तत्=तादृक्, ग्रस्यं = भक्ष्यं खाद्यमित्यर्थः, आद्यम् = भक्षणीयम्, आङ्पूर्वकोऽद्धातुः।

**भावार्थः**—ग्रहणार्हं, ग्रस्तं च परिणतं, परिणतं च सुखदायि, खाद्यं स्वहितेच्छुरश्नीयात्॥

**भाषा**--ऐश्वर्य चाहनेवाले प्राणी को वही वस्तु ग्रहण करनी चाहिए जो ग्रहण की जा सके और ग्रहण करने पर पच जावे ( अच्छा फल लावे ) तथा पच जाने पर (फलित हो जाने पर) लाभप्रद होवे॥ १४॥

**वनस्पतेरपक्वानि फलानि प्रचिनोति यः।**
**स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति॥ १५॥**

**अन्वयः**—यः वनस्पतेः अपक्वानि फलानि प्रचिनोति, स तेभ्यः रसं न आप्नोति। अस्य बीजं च विनश्यति।

**अर्थः—वनस्पतेरिति।** यः=पुरुषः, वनस्पतेः=वृक्षस्य, अपक्वानि=परिपाकमनवाप्तानि, फलानि, प्रचिनोति=सङ्गृह्णाति वृक्षादाच्छिद्याऽऽदत्त इत्यर्थः, सः = पुरुषः, तेभ्यः=फलेभ्यः, रसं=सारभूतं तरलं वस्तु न आप्नोति=न लभते। अस्य = वृक्षस्य, बीजं च, विनश्यति= व्यर्थं भवति।

**भावार्थः**—वृक्षस्याऽपरिपक्वफलग्रहणेन न रसावाप्तिः, प्रत्युत बीजनाशोऽपि। तथा विना विचारं कार्यकर्ता न किञ्चिदासादयतीत्येव न, किन्तु किञ्चित् समीपस्थमपि नाशयतीति॥

**भाषा**—जो पुरुष पेड़ से कच्चे फलों को तोड़ता है वह उन ( फलों ) से रस नहीं पाता बल्कि बीज से भी वञ्चित रहता है॥ १५॥

**यस्तु पक्वमुपादत्ते काले परिणतं फलम्।**
**फलाद्रसं स लभते बीजाच्चैव फलं पुनः॥ १६॥**

**अन्वयः**—यः तु काले परिणतं पक्वं फलम् उपादत्ते, सः फलात् रसं लभते, बीजात् पुनः एव फलं च लभते।

**अर्थः—य इति।** यः तु=यः पुरुषस्तु, काले=योग्यसमये, परिणतं=परिणामं गतम्, अत एव, पक्वं, फलम्, उपादत्ते=गृह्णाति, सः=नरः, फलात्, रसं=परिणामं, लभते,=प्राप्नोति,

बीजात्, पुनः एव=भूयोऽपि, फलं च, लभते ।

**भावार्थः—**सरसकालपक्वफलादानेन फलाद्रसाप्तिस्ततो भूयोऽपि बीजात् फलप्राप्तिर्भवतीति

**भाषा—**( परन्तु ) जो मनुष्य समय पर पके हुए फल को तोड़ता है वह फल से रस पाता है और बीज से फिर फल पाता है ॥ १६ ॥

**यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।**
**तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७ ॥**

**अन्वयः—**यथा षट्पदः पुष्पाणि रक्षन् मधु समादत्ते, तद्वत् ( नृपः ) अविहिंसया मनुष्येभ्यः अर्थान् आदद्यात् ।

**अर्थः—यथेति ।** यथा=येन प्रकारेण, षट्पदः=भ्रमरः 'षट्पदभ्रमरालयः' इत्यमरः, पुष्पाणि=कुसुमानि 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमरः, रक्षन्=अविनाशयन्, मधु=पुष्परसं 'मधु मद्ये पुष्परसे' इत्यमरः, समादत्ते=गृह्णाति, तद्वत्=तथा, नृपः, अविहिंसया=जीवहिंसाऽभावेन, मनुष्येभ्यः=मानवेभ्यः, अर्थान्=द्रव्याणि, आदद्यात्=गृह्णीयात् ।

**भावार्थः—**पुष्पाण्यविनाशयतो भ्रमरस्य मधुग्रहणमिव विना जीवहिंसां प्रजाभ्यो धनमाददीत राजेति ॥

**भाषा—**जैसे भौंरा फूल को बिना क्षति पहुँचाये मधु लेता है उसी प्रकार ( राजा को भी) विना पीडा पहुंचाये मनुष्यों से धन लेना चाहिए ॥ १७ ॥

**पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।**
**मालाकार इवारामे न यथाङ्गारकारकः ॥ १८ ॥**

**अन्वयः—**आरामे मालाकारः इव पुष्पं पुष्पं विचिन्वीत, अङ्गारकारकः यथा मूलच्छेदं न कारयेत् ।

**अर्थः—पुष्पमिति ।** आरामे=उपवने 'आरामः स्यादुपवनम्' इत्यमरः, मालाकारः इव=मालीव, पुष्पं पुष्पं=प्रत्येकं पुष्पं, विचिन्वीत=आदद्यात्, अङ्गारकारकः यथा=अलातकर्ता निर्धूमाग्निपिण्डकारक इव मूलच्छेदं=मूलोन्मूलनं, न कारयेत्=न कुर्यात्, स्वार्थे णिच ।

**भावार्थः—**माली प्रतिपुष्पमिव एकैकस्मादाददद्यात्, अङ्गारकारक इव न सर्वान् समूलमुन्मूलयेदिति ॥

**भाषा—**माली जिस तरह बाग़ ( के वृक्षों ) से केवल फूलों को लेता है उसी तरह राजा को भी राज्य के लोगों से केवल कर ले लेना चाहिए न कि उस भाँति राज्य के लोगों को एकदम नष्ट करना चाहिए जिस भाँति कोयला बनानेवाला बाग़ के वृक्षों की जड़ काट डालता है१८

**किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।**
**इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो न वा ॥ १९ ॥**

**अन्वयः—**इदं कृत्वा मे किन्नु स्यात्? अकुर्वत मे किन्नु स्यात्? इति पुरुषः कर्माणि सञ्चिन्त्य कुर्यात्, न वा ।

**अर्थः—किमिति।** इदम्=एतत्, कृत्वा=विधाय, मे=मम, किन्नु=किमु, स्यात्=भवेत्, अकुर्वतः=असम्पादयतः मे=मम, किन्तु स्यात्=किमु वा भवेत्, इति=इत्थं, पुरुषः=नरः, कर्माणि=कार्याणि, सञ्चिन्त्य=सम्यग् विचार्य, कुर्यात्=आरभेत, न वा=अथवा नारभेत।

**भावार्थः—**कार्यस्य करणेऽकरणे वा हानिर्लाभो वेति विचार्य कार्यमारभेत॥

**भाषा—**इसको करने पर मुझे क्या लाभ होगा और इसको न करने पर मुझे क्या हानि होगी? इस प्रकार सोच कर पुरुष कामों को करे अथवा छोड़ दे॥ १९॥

**अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः।**
**कृतः पुरुषकारो हि भवेद्येषु निरर्थकः॥ २०॥**

**अन्वयः—**नित्यं तथा अगताः केचित् अर्थाः अनारभ्याः भवन्ति, हि येषु कृतः पुरुषकारः निरर्थकः भवेत्।

**अर्थः—अनारभ्या इति।** नित्यं=निरन्तरं, तथा=तेन प्रकारेण, अगताः=कचिदप्यप्राप्याः, केचित्=केचन, अर्थाः=बलवद्भिः सह वैरादयः, अनारभ्याः=आरब्धुमशक्याः, भवन्ति, हि=यतः, येषु=अर्थेषु, कृतः विहितः, पुरुषकारः=प्रयत्नः निरर्थकः=व्यर्थः भवेत्।

**भावार्थः—**बलिभिः सह वैराद्यनुष्ठानमनुचितम्, यदस्तदर्थं कृतो यत्नो निष्फल एव स्यादिति॥

**भाषा—**कुछ ऐसे काम नित्य अप्राप्त होने के कारण करने योग्य नहीं होते जिनके लिए किया गया उद्यम।भी व्यर्थ हो जाता है॥ २०॥

**प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः।**
**न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः॥ २१॥**

**अन्वयः—**यस्य प्रसादः निष्फलः, क्रोधः च अपि निरर्थकः, स्त्रियः षण्ढं पतिम् इव, (प्रजाः) तं भर्तारं न इच्छन्ति।

**अर्थः—प्रसाद इति।** यस्य=भूपस्य, प्रसादः=प्रसन्नता अनुग्रहो वा, निष्फलः=निरर्थक, अस्ति, क्रोधः च अपि=कोपोऽपि च, निरर्थकः=निष्फलः अस्ति, स्त्रियः=नार्यः, षण्ढं=नपुंसकं 'षण्ढः क्लीबः पण्डो नपुंसके' इत्यमरः, पतिम् इव=धवमिव 'धवः प्रियः पतिर्भर्ता' इत्यमरः, प्रजाः तं=पूर्वोक्तं, भर्तारं=स्वामिनं, न इच्छन्ति=न कामयन्ते।

**भावार्थः—**प्रसादे कोपेऽप्यसमर्थं भूपं तरुण्यो नपुंसकं पतिमिव प्रजा नेच्छन्ते॥

**भाषा—**जिसकी प्रसन्नता निष्फल (अर्थात् कुछ भी लाभ न पहुँचनेवाली) होती है और क्रोध भी व्यर्थ होता है, ऐसे स्वामी (राजा) को लोग उसी तरह नहीं चाहते जिस तरह कि स्त्रियां नपुंसक पति को नहीं चाहती॥ २१॥

**कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान् महाफलान्।**
**क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान्॥ २२॥**

**अन्वयः**—प्राज्ञः नरः लघुमूलान्, महाफलान् कांश्चित् अर्थान् क्षिप्रं कर्तुम् आरभते, तादृशान् न विघ्नयति ।

**अर्थः—कांश्चिदिति** । प्राज्ञः = बुद्धिमान्, नरः=पुरुषः लघुमूलान् लघु = अल्पं मूलम्= बुध्नः प्रारम्भः वा येषा तान्, 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः, महाफलान् महत्=पृथु फल येषां तान्, कांश्चित् = कांश्चन, अर्थान्=कार्याणि, क्षिप्र=शीघ्रं, कर्तु=विधातुम्, आरभते=प्रारभते, तादृशान्=लघुमूलमहाफलार्थान्, न विघ्नयति=न विघ्नमाचरति न विलम्बयतीत्यर्थः ।

**भावार्थः**—प्राज्ञो लघुमूलान् महाफलानर्थान् सत्वरमारभते, न तत्रान्तरायमाचरतीति ।

**भाषा**—कुछ छोटी जड़ ( आरम्भ ) वाले तथा बड़े फल ( परिणाम ) वाले कामों को बुद्धिमान् मनुष्य शीघ्र शुरू कर देता है, ऐसे कामो में वह देर नहीं करता ॥ २२ ॥

**ऋजु पश्यति यः सर्वं चक्षुषाऽनुपिबन्निव ।**
**आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २३ ॥**

**अन्वयः**—यः चक्षुषा अनुपिबन् इव सर्वम् ऋजु पश्यति, प्रजाः तूष्णीकम् आसीनम् अपि तम् अनुरज्यन्ति ।

**अर्थः—ऋज्विति** । यः = नृपः, चक्षुषा=दृष्ट्या, अनुपिबन् इव=स्नेहं दर्शयन्निव, सर्वं= सकलं प्रजावर्गम्, ऋजु=सरलं यथा स्यात्तथा, पश्यति=अवलोकयति, प्रजाः=जनाः 'प्रजा स्यात् सन्ततौ जने' इत्यमरः, तूष्णीकं=तूष्णीं यथा स्यात्तथा, आसीनम् अपि=स्थितमपि, तं= राजानम्, अनुरज्यन्ति=प्रसीदन्ति च, तस्मिन्ननुरक्ता भवन्तीत्यर्थः ।

**भावार्थः**—स्नेहमय्या दृशा सर्वान् समं पश्यन् किञ्चिदकुर्वाणोऽपि राजा प्रजानामनुरागपात्रं जायत इति ॥

**भाषा**—जो राजा सब ( प्रजा ) को अतिस्निग्ध दृष्टि से सरलता के साथ देखता है वह चुपचाप बैठा भी रहे तब भी प्रजा उससे स्नेह करती है ॥ २३ ॥

**सुपुष्पितः स्यादफलः फलितः स्याद् दुरारुहः ।**
**अपक्वः पक्वसङ्काशो न तु शीर्येत कर्हिचित् ॥ २४ ॥**

**अन्वयः**—सुपुष्पित अफलः स्यात्, फलितः दुरारुहः स्यात्, अपक्वः पक्वसङ्काशः स्यात्, कर्हिचित् तु न शीर्येत ।

**अर्थः—सुपुष्पित इति** । राजा वृक्ष इवेत्यध्याहारः, सुपुष्पितः=अतिप्रसन्नः सत्पुष्पयुक्तश्च सन्, सफलः=धनधान्यादिदानरहितः फलहीनश्च, स्यात्=भवेत्, फलितः=दानशीलः फलपूर्णश्च सन्, दुरारुहः दुःखेन आरुह्यत इति दुरारुहः गुणाभावोऽत्रार्षः, न वशं गतः आरोहणानर्हश्च, स्यात्, अपक्वः=बलादिहीनः अदृढश्च सन्नपि, पक्वसङ्काशः पक्वेन सङ्काशः=नीकाशः तुल्य इत्यर्थः, 'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः, पक्वशङ्काशः=बलवत्सदृशः दृढश्च, स्यात्, कर्हिचित् = कदाचिदपि तु, न शीर्येत=न नश्येत् ।

**भावार्थः**—वृक्षश्च यदा पुष्पितो भवति तदा फलितो न भवति, यदा च फलितो भवति

तदादुरारोहश्चेद्भरम्, अपक्वदशामापन्नोऽपि पक्ववद्भासेत यदि तर्हि न नाशमुपेयात्। एवमेव राजा प्रसन्नश्चेदविचारपूर्वं धनधान्याद्यतिदानपरायणो न युक्तः, दानपरायण एव भवेद्यद्या तदा भृत्यादीना वशं गतो न स्यात्, बलहीनोऽपि बलवन्तमिव सदात्मानं दर्शयेत्, तेन नासो नाशं गच्छति ॥

**भाषा**—राजा अच्छी तरह फूलने पर भी ( प्रीति दिखाने पर भी ) फल रहित रहे ( अर्थात् धन भूमि आदि न देवे ), और फलने पर भी ( धन आदि के देने पर भी ) पहुँच के बाहर रहे तथा कच्चा ( कमशक्तिवाला ) होने पर भी पके ( शक्तियुक्त ) की भाँति रहे। ऐसा करने से वह कभी भी नष्ट नही हो सकता ॥ २४ ॥

**चक्षुपा मनसा वाचा कर्मणा च चतुर्विधम् ।**
**प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ २५ ॥**

**अन्वयः**—यः लोकं चक्षुषा मनसा वाचा कर्मणा च ( इति ) चतुर्विधं प्रसादयति, लोकः तम् अनुप्रसीदति ।

**अर्थः—चक्षुषेति** । यः=नरः, लोकं=जनं 'लोकस्तु भुवने जने' इत्यमरः, चक्षुषा=नेत्रेण, मनसा=चेतसा, वाचा=वाण्या च 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी, चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः, गीर्वाग्वाणी सरस्वती' इत्यमराः, कर्मणा=कार्येण च, इति=एवं, चतुर्विधं चतस्रः विधाः=प्रकारा यस्मिन् कर्मणि यथा स्यात्तथा, प्रसादयति=प्रसन्नं करोति, लोकः=जनः, तं=तादृशं राजानम्, अनुप्रसीदति=तुष्यति ।

**भावार्थः**—चक्षुर्मनोवाक्कायैः प्रजाः प्रसादयन् राजा तासां प्रसादपात्रं जायत इति ॥

**भाषा**—जो राजा चार प्रकार से–आँख, मन, वचन, और कर्म से–प्रजा को प्रसन्न करता है उसीसे प्रजा प्रसन्न रहती है ॥ २५ ॥

**यस्मात् त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।**
**सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २६ ॥**

**अन्वयः**—भूतानि मृगाः मृगव्याधात् इव यस्मात् त्रस्यन्ति, सः सागरान्तां महीं लब्ध्वा अपि परिहीयते ।

**अर्थः—यस्मादिति** । भूतानि=प्राणिनः, मृगाः=हरिणाः पशव इति यावत्, मृगव्याधात्=मृगवधाजीवात् लुब्धकादित्यर्थः, मृगव्याधादित्यत्र मृगशब्दो निरर्थकः 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः, इव=यथा 'ववा यथा तथैवैवम्' इत्यमरः, यस्मात्=राज्ञः, त्रस्यन्ति=उद्विजन्ते, सः=राजा, सागरान्तां सागरः=समुद्रः अन्ते=समाप्तौ यस्याः तां समुद्रपर्यन्तं वर्तमानां सकलां, महीं=मेदिनीं 'क्ष्मावनिर्मेदिनी मही' इत्यमरः, लब्ध्वा अपि=प्राप्यापि, परिहीयते=त्यज्यते, प्रजावर्गेणेति शेषः ।

**भावार्थः**—आसमुद्रं क्षितीशोऽपि लोकोद्वेगकरः प्रजया त्यज्यत एवेति ॥

**भाषा**—जिस ( राजा ) से सब प्राणी इस तरह डरते हैं जैसे बहेलिए से हिरन, वह समुद्र पर्यन्त पृथ्वी को पाकर भी प्रजावर्ग से त्याज्य हो जाता है ॥ २६ ॥

**पितृपैतामहं राज्यं प्राप्तवान् स्वेन कर्मणा ।**
**वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २७ ॥**

**अन्वयः**—(यः) पितृपैतामहं राज्यं प्राप्तवान्, अनये स्थितः (सः) आसाद्य (अपि) स्वेन कर्मणा (तत्) वायुः अभ्रम् इव भ्रंशयति ।

**अर्थः—पितृपैतामहमिति** । यः = पुरुषः, पितृपैतामहं=पितृपितामहसम्बन्धि, राज्यं= मण्डलाधिपत्यं, प्राप्तवान्=लब्धवान्, अनये=अनीतौ अन्याय्ये पथीति यावत्, स्थितः=वर्त-मानः, सः, आसाद्य अपि = लब्ध्वापि तत्, स्वेन=निजेन, कर्मणा=व्यापारेण, तत् = राज्यं, वायुः=पवनः, अभ्रम् इव = मेघमिव 'अभ्रं मेघो वारिवाहः' इत्यमरः, भ्रंशयति=नाशयति ।

**भावार्थः**—नीतिशून्यो नृपः पितृपैतामहं समासादितं राज्यमपि स्वाचारेण विनाशयतीति ॥

**भाषा**—अनीति का आचरण करनेवाला राजा अपने बाप दादा से मिले हुए राज्य को अपने ही कर्मों से इस तरह छिन्न भिन्न कर डालता है जैसे पवन बादल को ॥ २७ ॥

**धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।**
**वसुधा वसुसम्पूर्णा वर्धते भूतिवर्धिनी ॥ २८ ।**

**अन्वयः**—सद्भिः चरितं धर्मम् आदितः आचरतः राज्ञः भूतिवर्धिनी वसु-सम्पूर्णा वसुधा वर्धते ।

**अर्थः धर्ममिति** । सद्भिः=सज्जनैः चरितम्=आचरितं, धर्मं=सदाचरणम्, आदितः= प्रारम्भादेव, आचरतः=कुर्वतः, राज्ञः = भूपस्य, भूतिवर्धिनी=ऐश्वर्योन्नतिकारिणी, वसुसम्पूर्णा वसुना = धनेन सम्पूर्णा = पूर्णा 'रिक्थमृक्थं धनं वसु' इत्यमरः, वसुधा=वसुन्धरा 'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा' इत्यमरः, वर्धते = एधते ।

**भावार्थः**—सततं सज्जनानुमतं पन्थानमाश्रयतो भूपस्य वसुधा समृद्धिमती सती वर्धत एव॥

**भाषा**—जो राजा परम्परा से सज्जनों द्वारा किये गये धर्म का आचरण करता है उसके राज्य की पृथ्वी धनधान्य से पूर्ण होकर उन्नति को प्राप्त होती है और उसके ऐश्वर्य को बढ़ाती है ॥ २८ ॥

**अथ सन्त्यजतो धर्ममधर्मं चानुतिष्ठः ।**
**प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ २९ ॥**

**अन्वयः**—अथ धर्मं सन्त्यजतः अधर्मम् अनुतिष्ठतः च (राज्ञः) भूमिः अग्नौ आहितं चर्म यथा प्रतिसंवेष्टते ।

**अर्थः—अथेति** । अथ = अनन्तरं, धर्मं = सुकृतं, सन्त्यजतः = मुञ्चतः, अधर्मं=दुष्कृतम्, अनुतिष्ठतः=कुर्वतः च, राज्ञः, भूमिः=भूः 'भूर्भूमिरचलानन्ता' इत्यमरः, अग्नौ = वह्नौ 'अग्निः वैश्वानरो वह्निः' इत्यमरः, आहितं = दत्तं हुतमिति यावत्, चर्म यथा = अजिनम् इव 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः, प्रतिसंवेष्टते = सङ्कुचति, बहु फलं न प्रयच्छतीति ।

**भावार्थः**—धर्मत्यागिनोऽधर्मकर्तुश्च राज्ञः पृथ्वी क्रमेण क्षीयत एवेति ॥

**भाषा**—और जो राजा धर्म छोड़ कर अधर्म का सेवन करता है उसके राज्य की भूमि आग में डाले गये चमड़े की भाँति सिकुड जाती है अर्थात् अधिक फल नहीं देती ॥ २९ ॥

**य एव यत्नः क्रियते परराष्ट्रविमर्दने ।**
**स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ ३० ॥**

**अन्वयः**—परराष्ट्रविमर्दने यः एव यत्नः क्रियते, स्वराष्ट्रपरिपालने सः एव यत्नः कर्तव्यः।

**अर्थः—य एवेति** । परराष्ट्रविमर्दने परस्य = शत्रोः राष्ट्रं = राज्यं तस्य विमर्दनं = सर्वतोऽधःपातनं तस्मिन्, यः एव = यादृगेव, यत्नः = प्रयत्नः परिश्रम इति यावत्, क्रियते = विधीयते स्वराष्ट्रपरिपालने स्वस्य = आत्मनः राष्ट्रं = राज्यं तस्य परिपालनं = सर्वतोभावेन रक्षणं तस्मिन् सः एव = तादृगेव, यत्नः = उद्योगः, कर्तव्यः = अनुष्ठातव्यः ।

**भावार्थः**—शत्रुराज्यमर्दनसमय इव स्वराज्यरक्षणकालेऽपि महान् परिश्रमो राज्ञा कार्यः ॥

**भाषा**—जिस प्रकार का प्रयत्न ( उद्योग ) दूसरे के राज्य का नाश करने मे किया जाता है उसी प्रकार का यत्न अपने राज्य की रक्षा करने में करना चाहिए ॥ ३० ॥

**धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।**
**धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३१ ॥**

**अन्वयः**—( नृपः ) राज्यं धर्मेण विन्देत, धर्मेण परिपालयेत्, ( यतः ) धर्ममूलां श्रियं प्राप्य न जहाति, न हीयते ।

**अर्थः—धर्मेणेति** । नृपः, राज्यं = राष्ट्रं, धर्मेण = सदाचारेण नीत्येति यावत्, विन्देत = प्राप्नुयात्, धर्मेण, परिपालयेत् = संरक्षेत्, यतः, धर्ममूलां = धर्मप्रधानां, श्रियं = राज्यलक्ष्मीं, प्राप्य = आसाद्य, न जहाति = न त्यजति, न हीयते = न च त्यज्यते तया श्रियेति यावत् ।

**भावार्थः**—नीत्या राज्यस्य लाभं संरक्षणं च कुर्वाणो नृपो न त्यजति तां श्रियम्, नापि सा तम् ॥

**भाषा**—राजा को धर्म के साथ ही राज्य प्राप्त करना चाहिए और धर्म के साथ ही उसका पालन करना चाहिए, क्योंकि धर्मयुक्त राज्यलक्ष्मी को पाकर राजा इसे नहीं छोड़ता और वह ( लक्ष्मी ) भी राजा को नहीं छोड़ती ॥ ३१ ॥

**अप्युन्मत्तात् प्रलपतो बालाच्च परिजल्पतः ।**
**सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३२ ॥**

**अन्वयः**—प्रलपतः उन्मत्तात् अपि परिजल्पतः बालात् च अश्मभ्यः काञ्चनम् इव सर्वतः सारम् आदद्यात् ।

**अर्थः—अप्युन्मत्तादिति** । प्रलपतः = अनर्थकं वचः प्रयोक्तुः 'प्रलापोऽनर्थकं वचः' इत्यमरः, उन्मत्तात् = उन्मादरोगिणोऽपि, परिजल्पतः = स्पष्टं वक्तुः, बालात् च = शिशोरपि, अश्मभ्यः = पाषाणेभ्यः 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः, काञ्चनम् इव = सुवर्णमिव, सर्वतः = सर्वस्मादपि जनात्, सारं = तत्त्वम्, आदद्यात् = गृह्णीयात् ।

**भावार्थः**—उन्मत्तवालादिभ्यः सर्वेभ्योऽपि सुभाषितसारं मनसा स्वीकुर्यादिति ॥

**भाषा**—पागल, बकवादी, असम्बद्ध बोलनेवाले तथा बच्चे से भी तत्त्व की बात इस प्रकार ले लेना चाहिए जैसे पत्थर में से सोना ले लिया जाता है ॥ ३२ ॥

**सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः ।**
**सञ्चिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥ ३३ ॥**

**अन्वयः**—धीरः शिलाहारी शिलं यथा ततस्ततः सुव्याहृतानि सूक्तानि सुकृतानि ( च ) सञ्चिन्वन् आसीत ।

**अर्थः—सुव्याहृतानीति ।** धीरः=शान्तस्वभावः पुरुषः, शिलाहारी=अर्जितकणिशादि-भक्षणशीलो मुनिः, शिलं यथा=कणिशार्जनमिव 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति कोशः, ततस्ततः=सर्वतः, सुव्याहृतानि=सुभाषितानि, सूक्तानि=पाण्डित्यपूर्णानि मधुरवचनानि, सुकृतानि च=सत्कर्माणि च, सञ्चिन्वन्=सङ्ग्रहं कुर्वन्, आसीत=तिष्ठेत् ।

**भावार्थः**—सुभाषितानां सूक्ताना सत्कर्मणा च सर्वतः सङ्ग्रहः समुचित इति ॥

**भाषा**—जिस प्रकार उञ्छवृत्ति ( दाना बीन कर निर्वाह करनेवाला ) पुरुष दाना चुनता रहता है उसी प्रकार धीर ( गम्भीर तथा बुद्धिमान् ) पुरुष को अच्छी तरह कही गई सूक्तियों और उनसे प्राप्त होनेवाले उपदेशों को एक एक करके इकट्ठा करते रहना चाहिए ॥ ३३ ॥

**गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।**
**चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३४ ॥**

**अन्वयः**—गावः गन्धेन पश्यन्ति, ब्राह्मणाः वेदैः पश्यन्ति, राजानः चारैः पश्यन्ति, इतरे जनाः चक्षुर्भ्यां पश्यन्ति ।

**अर्थः—गन्धेनेति ।** गावः=धेनवः, गन्धेन=घ्राणेन्द्रियविषयेण, पश्यन्ति=परिचिन्वन्ति, ब्राह्मणाः=विप्राः, वेदैः=श्रुतिभिः 'श्रुतिः स्त्री वेद आम्नायस्त्रयी' इत्यमरः, पश्यन्ति=साक्षात्कुर्वन्ति, राजानः—नृपाः, चारैः=गूढपुरुषैः 'चारश्च गूढपुरुषः' इत्यमरः, पश्यन्ति सर्वं जानन्ति, इतरे=अन्ये साधारणास्तु, जनाः=लोकाः, चक्षुर्भ्यां=नेत्राभ्यां, पश्यन्ति=अवलोकयन्ति ।

**भवार्थः**—गन्धप्रमाणका गावा वेदप्रमाणका ब्राह्मणाश्चारचक्षुषो राजानश्चक्षुर्विषयाश्चान्ये-इति राजभिश्चारचक्षुर्भिर्भवितव्यमिति ॥

**भाषा**—गाय महक से, ब्राह्मण वेद से, राजा दूतों से तथा और लोग आखों से देखते हैं॥३४॥

**भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।**
**अथ या सुदुहा रजन्नैव तां वितुदन्त्यपि ॥ ३५ ॥**

**अन्वयः**—या गौः दुर्दुहा भवति, ( सा ) भूयांसं क्लेशं लभते । अथ या सुदुहा (अस्ति), राजन् ! ( जनाः ) तां न एव वितुदन्ति अपि ।

**अर्थः—भूयांसमिति ।** या गौः=धेनुः, दुर्दुहा दुःखेन दुह्यतेऽसौ दुर्दुहा=कष्टेन दोह-

नसाध्या, भवति, सा, भूयांसं=बहुलं, क्लेशं = दुःखं, लभते = प्राप्नोति । अथ, या = गौः, सुदुहा = सुखेन दोहनमाप्ता, अस्ति, राजन् ! = भूप !, जनाः, तां = गावं, न एव = नैव, वितुदन्ति अपि = नैव च व्यथयन्ति ।

**भावार्थः**—दुर्दुहा गौः क्लेशमनुभवति, न तु सुदुहेति क्लेशकरः क्लेशभाग् भवतीति रहस्यम् ॥

**भाषा**—हे राजन् ! जो गाय कठिनाई से दुही जाती है उसे बहुत कष्ट मिलता है और जो आसानी से दूध देती है उसे लोग कष्ट नहीं देते ॥ ३५ ॥

**यदतप्तं प्रणमति न तत्सन्तापयन्त्यपि ।**
**यच्च स्वयं नतं दारु न तत्सन्नमयन्त्यपि ॥ ३६ ॥**

**अन्वयः**—यत् अतप्तं प्रणमति, ( जनाः ) तत् न सन्तापयन्ति अपि । यत् च स्वयं नतं ( भवति, जनाः ) तत् दारु न सन्नमयन्ति अपि ।

**अर्थः**—**यदतप्तमिति** । यत् अतप्तं=तापं न नीतं सदपि, प्रणमति = नतं भवति, जनाः, तत्=लौहादि, न सन्तापयन्ति अपि = नैव सन्तापयन्ति । यत् च, स्वयम् = आत्मनैव, नतं भुग्नं, भवति, जनाः, तत् , दारु = काष्ठं 'काष्ठं दारु' इत्यमरः, न सन्नमयन्ति अपि = नैव नतं कुर्वन्ति ।

**भावार्थः**—विना तापं यन्नमति, नामनाय न तत्तापयन्ति लोकाः, यच्च स्वयं नमति, न तस्य नामनायापि प्रयतन्ते जना इत्युदाहरणेन सर्वैरेव नतैर्भाव्यमित्युपदेशगर्भ आशयः ॥

**भाषा**—जो ( धातु आदि ) विना गरम किये ही मुड़ जाता है उसे लोग गरम नहीं करते तथा जो काठ स्वयं झुक जाता है उसे लोग नहीं झुकाते ॥ ३६ ॥

**एतयोपमया धीरः सन्नमेत बलीयसे ।**
**इन्द्राय स प्रणमते नमते यो बलीय से ॥ ३७ ॥**

**अन्वयः**—धीरः एतया उपमया बलीयसे सन्नमेत । यः बलीयसे नमते, सः इन्द्राय प्रणमते ।

**अर्थः**—**एतयेति** । धीरः=स्थिरप्रकृतिर्नरः, एतया=पूर्वपद्यप्रतिपादितया, उपमया=उदाहरणेन, बलीयसे=बलवते बलिनः पुरस्तादित्यर्थः, सन्नमेत=नताननः स्यात् । यः, बलीयसे= बलयुक्ताय, नमते, सः इन्द्राय=मरुत्वते 'इन्द्रो मरुत्वान् मघवा' इत्यमरः, प्रणमते=प्रणमति । अत्र पद्ये सर्वत्र नम्धातोरात्मनेपदप्रयोग आर्षः ।

**भावार्थः**—बलीयसः पुरस्तात् सर्वथा नम्रतोचिता ॥

**भाषा**—ऐसा समझ कर बुद्धिमान् आदमी को अधिकबलवाले के सामने झुक जाना चाहिए । जो पुरुष अधिक बलवाले के सामने झुकता है वह ( वास्तव मे बल के देवता ) इन्द्र को प्रणाम करता है ॥ ३७ ॥

**पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।**
**पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥ ३८ ॥**

अन्वयः—पशवः पर्जन्यनाथाः, पतयः स्त्रीणां बान्धवाः, ब्राह्मणाः वेदबान्धवाः, राजानः मन्त्रिबान्धवाः ( भवन्ति )।

अर्थः—पर्जन्यनाथा इति। पशवः=गोप्रभृतयः, पर्जन्यनाथाः=मेघस्वामिकाः, मेघादि-द्वारा तद्भोज्यतृणादीनां सम्भवात्, पतयः=भर्तारः 'धवः प्रियः पतिर्भर्ता' इत्यमरः, स्त्रीणां=योषितां 'स्त्री योषिदबला योषा' इत्यमरः, बान्धवाः=सहायकाः, पतिद्वारैव तत्सौभाग्योपचयात्, ब्राह्मणाः=विप्राः, वेदबान्धवाः=वेदप्रमाणकाः, वेदोदितकर्मानुष्ठानपरत्वात्, राजानः=नृपाः, मन्त्रिबान्धवाः मन्त्रिण एव=अमात्या एव 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः, बान्धवाः=बन्धवः, अभीष्टकार्यकर्तृत्वात्, येषां तादृशाः भवन्ति।

भावार्थः—पश्वादयो हि पर्जन्यादिभिर्यथा साहाय्यमासादयन्ति, तथैव राजानो मन्त्रिभ्य इति॥

भाषा—पशुओं के बादल, राजाओं के मन्त्री, स्त्रियों के पति तथा ब्राह्मणों के वेद सहायक होते हैं॥ ३८॥

**सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।**
**मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते॥ ३९॥**

अन्वयः—धर्मः सत्येन रक्ष्यते, विद्या योगेन रक्ष्यते, रूपं मृजया रक्ष्यते, कुलं वृत्तेन रक्ष्यते।

अर्थः—सत्येनेति। धर्मः=वेदविधिः 'धर्मस्तु तद्विधिः' इत्यमरः, सत्येन=सत्यव्यवहारेण, रक्ष्यते=पाल्यते, विद्या=अधीतं शास्त्रादि, योगेन=ध्यानेन अभ्यासेनेति यावत्, रक्ष्यते, रूपं=स्वरूपं सौन्दर्यादि, मृजया=मार्जनेन उद्वर्तनेनेति तात्पर्यम्, 'मार्जनं मृजा' इत्यमरः, रक्ष्यते, एवमेवेति शेषः, कुलं=वंशः, वृत्तेन=चरित्रेण सद्वर्तनेनेत्यर्थः, 'वृत्तं पद्ये चरित्रे च' इत्यमरः, रक्ष्यते।

भावार्थः—धर्मविद्यारूपकुलानि सत्ययोगमृजावृत्तैः सदा रक्षिता भवन्तीति कुलरक्षायै वृत्त-पालनं सुतरामुचितमिति॥

भाषा—सत्य से धर्म की रक्षा होती है, अभ्यास से विद्या की रक्षा होती है, सफ़ाई से सौन्दर्य की रक्षा होती है तथा सदाचार से खानदान की रक्षा होती है॥ ३९॥

**मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः।**
**अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचैलतः॥ ४०॥**

अन्वयः—धान्यं मानेन रक्ष्यते, अनुक्रमः अश्वान् रक्षति, अभीक्ष्णदर्शनं गाः रक्षति, च स्त्रियः कुचैलतः रक्ष्याः ( भवन्ति )।

अर्थः—मानेनेति। धान्यं=गोधूमयवाद्यन्नसमूहः, मानेन=परिमाणेन, रक्ष्यते=पाल्यते, अनुक्रमः=व्यायामशिक्षणादि अङ्गपरिवर्तनादि वा, अश्वान्=तुरङ्गान् 'तुरङ्गाश्वतुरङ्गमाः' इत्य-मरः, रक्षति=पालयन्ति, अभीक्ष्णदर्शनम् अभीक्ष्णं=निरन्तरं वारंवारमित्यर्थः, दर्शनं=वीक्षणं,

गाः = धेनूः, रक्षति, च = अपि च स्त्रियः = नार्यः, कुचैलतः=कुत्सितादर्थान्मलिनात् वस्त्रात् 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्' इत्यमरः, रक्ष्याः=संरक्षणीयाः, भवन्ति।

**भावार्थः**—मानानुक्रमाभीक्ष्णदर्शनसुन्दरवस्त्रादिभिर्धान्याश्वगोस्त्रियः पालनीया इति॥

**भाषा**—तौलाने से अनाज की रक्षा होती है, फेरने फारने से घोड़े की रक्षा होती है, बार-बार निगरानी करने से गायों की रक्षा होती है तथा मैले कपड़े से स्त्रियों की रक्षा होती है॥४०॥

**न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः।**
**अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते॥ ४१॥**

**अन्वयः**—वृत्तहीनस्य कुलं न प्रमाणम् इति मे मतिः। हि अन्त्येषु जातानाम् अपि वृत्तम् एव विशिष्यते।

**अर्थः**—**न कुलमिति**। वृत्तहीनस्य वृत्तेन=चारित्र्येण हीनः=रहितः तादृशस्य पुरुषस्य, कृते इति शेषः, कुलं=गोत्रं 'सन्ततिर्गोत्रजननकुलानी'त्यमरः, न=नैव, प्रमाणं=प्रमाणभूतं मान्यमिति यावत्, इति=एवं, मे=मम विदुरस्येति तात्पर्यम्, मतिः=बुद्धिः मतमित्यर्थः, अस्तीति शेषः। हि=तथाहि, अन्त्येषु=क्षुद्रेषु, जातानाम्=उत्पन्नानामपि, वृत्तं=चरित्रमेव, विशिष्यते=अतिरिच्यते।

**भावार्थः**—चरित्रहीनः कुलमपि कलङ्कयतीति न तत्र विश्वासः सतामवशिष्यते, तस्माद् वृत्तमेव ज्यायः, अन्त्येष्वपि वृत्तस्यैव प्राधान्योपलम्भात्।

**भाषा**—मेरी समझ मे सदाचार से रहित पुरुष के लिये उसका खानदान प्रमाण (आदर्श) नहीं हो सकता। क्षुद्र कुल मे भी पैदा होनेवाले पुरुषो का सदाचार ही श्रेष्ठता का कारण होता है॥ ४१॥

**य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये।**
**सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः॥ ४२॥**

**अन्वयः**—यः परवित्तेषु रूपे वीर्ये कुलान्वये सुखसौभाग्यसत्कारे ईर्षुः (भवति), तस्य व्याधिः अनन्तकः।

**अर्थः**—**य ईर्षुरिति**। यः, परवित्तेषु=परद्रव्येषु, रूपे=स्वरूपे, वीर्ये=शौर्ये, कुलान्वये=वंशसम्बन्धे, सुखसौभाग्यसत्कारे सुखं=शर्म सौभाग्यं=सुभगत्वं सत्कारः=आदरश्चेति तेषां समाहारस्तस्मिन्, ईर्षुः=ईर्ष्यावान् भवति, तस्य=पुंसः, व्याधिः=विशिष्टा मानसी व्यथा, पुंस्याधिर्मानसी व्यथा' इत्यमरः, अनन्तकः=अन्तरहितः, स्वार्थे कः, जायते।

**भावार्थः**—परद्रव्यादिष्वीर्ष्यावतो नरस्य मानसी व्यथाऽपरिमिता भवतीति॥

**भाषा**—जो मनुष्य दूसरे के धन, सौन्दर्य, बल, ऊंचे खानदान, सुख, सौभाग्य तथा आदर को देख कर डाह करता है, उसका (यह) रोग असाध्य है॥ ४२॥

**अकार्यकरणाद्भीतः कार्याणां च विवर्जनात्।**
**अकाले मन्त्रभेदाच्च येन माद्येन्न तत् पिबेत्॥ ४३॥**

**अन्वयः—**अकार्यकरणात् कार्याणां विवर्जनात् अकाले मन्त्रभेदात् च भीतः ( नृपः ) येन माद्येत् तत् न पिबेत्।

**अर्थः—अकार्यकरणादिति।** अकार्यकरणात् अकार्यस्य=चौर्यादेः करणात्=अनुष्ठानात्, कार्याणां=कर्तव्यानामीश्वरोपासनादीनां विवर्जनात्=त्यागात्, अकाले=असमय एव अभीष्टसिद्धेः पूर्वमेव, मन्त्रभेदात्=रहस्योद्घाटनात् च, भीतः=भयं प्राप्तः, नृपः, येन, माद्येत्=मत्त इव स्यात्, तत्=लोभादिकं, न पिबेत्=नाश्रयेदित्यर्थः।

**भावार्थः—**अकार्यकरणकार्याकरणमन्त्रभेदेषु सावधानो नर उन्मादादिजनकं लोभादिकं कदाचिदपि नाश्रयेदिति॥

**भाषा—**न करने योग्य काम को करने से, करने योग्य काम को न करने से तथा अनवसर मन्त्र ( गुप्त विचार ) के प्रकट हो जाने से डरना चाहिए और ऐसा पेय नहीं पीना चाहिए जिससे नशा चढ़ जाय॥ ४३॥

> **विद्यामदो धनमदस्तृतीयोऽभिजनो मदः।**
> **मदा एतेऽवलिप्तानामेत एव सतां दमाः॥ ४४॥**

**अन्वयः—**अवलिप्तानां विद्यामदः धनमदः तृतीयः अभिजनः मदः एते एव मदाः (सन्ति), एते एव सतां दमाः।

**अर्थ—विद्यामद इति।** अवलिप्तानां=गर्वितानां, विद्यामदः विद्याया=धनस्य मदः=गर्वः, धनमदः=द्रव्यमदः, तृतीयः, अभिजनः=देशः तज्जन्य इत्यर्थः, मदः-एते=अमी पूर्वोक्ताः, मदाः, सन्ति, एते एव=एतावन्त एव त्रय एवेति तात्पर्यम्, सतां=सत्पुरुषाणां, दमाः=दमनकर्तारः मदशमयितार इति यावत्, सन्ति। अत्र मदशब्द एव वैपरीत्ये दमशब्दो भवतीति।

**भावार्थः—**असतां मदकारका विद्यादय एव सतां दमहेतवो भवन्तीति॥

**भाषा—**विद्या, धन और खानदान, ये घमंडियों के लिये घमण्ड के तथा सज्जनों के लिए नम्रता का कारण होते हैं॥ ४४॥

> **असन्तोऽभ्यर्थिताः सद्भिः क्वचित् कार्ये कदाचन।**
> **मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम्॥ ४५॥**

**अन्वयः—**सद्भिः कदाचन क्वचित् कार्ये अभ्यर्थिताः असन्तः विश्रुतम् असन्तम् अपि आत्मानं सन्तं मन्यन्ते।

**अर्थः—असन्त इति।** सद्भिः=सज्जनैः, कदाचन=कदाचित्, क्वचित्=कस्मिंश्चित्, कार्ये=कर्मणि, अभ्यर्थिताः=प्रार्थिताः, असन्तः=दुर्जनाः, विश्रुतं=प्रसिद्धम्, असन्तं=दुष्टमपि, आत्मानं=स्वं, सन्तं=सज्जनं, मन्यन्ते=विदन्ति।

**भावार्थः—**कदाचित् सद्भिराहूता असन्त आत्मानं तत्कालात् सन्तमेव जानन्तीति॥

**भाषा—**कभी किसी कार्यवश सज्जनों द्वारा प्रार्थित होने पर दुर्जन लोग नामी दुष्ट होते हुए भी अपने को सज्जन समझने लगते हैं॥ ४५॥

**गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।**
**असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ॥ ४६ ॥**

**अन्वयः**—सन्तः आत्मवतां गतिः, सन्तः एव सतां गतिः, सन्तः असतां च गतिः, तु असन्तः सतां गतिः न ।

**अर्थः—गतिरिति** । सन्तः=सत्पुरुषाः, आत्मवतां=महामहिम्नां, गतिः=शरणम्, सन्तः एव=सज्जना एव, सतां, गतिः, सन्तः=साधवः, असतां=दुर्जनानां च, गतिः, तु=किन्तु, असन्तः=दुष्टाः, सतां=पुण्यवतां, गतिः न=शरणं न सन्तीति ।

**भावार्थः**—आत्ममानिनां सतामसतां च सन्त एव रक्षकाः, नाऽसन्त इति ॥

**भाषा**—बुद्धिमानों के लिए सज्जन शरण है, सज्जनों के लिए सज्जन ही शरण हैं तथा असज्जनों ( दुष्टों ) के।लिए भी सज्जन ही शरण है किन्तु असज्जन सज्जनों के लिए शरण नही है ॥ ४६ ॥

**जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।**
**अध्वा जिता यानवता सर्वं शीलवता जितम् ॥ ४७ ॥**

**अन्वयः**—वस्त्रवता सभा जिता, गोमता मिष्टाशा जिता, यानवता अध्वा जितः, शीलवता ( च ) सर्वं जितम् ।

**अर्थः—जितेति** । वस्त्रवता=उत्तमवस्त्रधारिणा पुरुषेण, सभा=समितिः, जिता=पराजिता, गोमता=धेनुतमा पुंसा, मिष्टाशा=मिष्टपदार्थभक्षणेच्छा, जिता=स्वायत्तीकृता, यानवता=रथिना, अध्वा=मार्गः, 'अयनं वर्त्ममार्गाध्वपन्थान' इत्यमरः, जितः=अतिक्रान्तः, शीलवता =सद्वृत्तवता नरेण, सर्वं=सभादिकमखिलं, जितं=विजितम् ।

**भावार्थः**—सभादिकं तत्तद्गुणवान् जयति, शीलवांस्तु सर्वमेव जयतीति शीलं रक्षणीयम्॥

**भाषा**—अच्छे कपड़ेवाला सभा को वश मे कर लेता है, गायवाला मीठे स्वाद की इच्छा को वश में कर लेता है, सवारीवाला रास्ते को।वश मे कर लेता है पर शीलवान् ( सदाचारी ) पुरुष सबको वश मे कर लेता है ॥ ४७ ॥

**शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।**
**न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ ४८ ॥**

**अन्वयः**—पुरुषे शीलं।प्रधानम्, इह यस्य तत् प्रणश्यति, तस्य जीवितेन अर्थः न, धनेन न, बन्धुभिः ( च ) न ।

**अर्थः—शीलमिति** । पुरुषे=पुंसि, शीलं=सद्वृत्तं, प्रधानं=श्रेष्ठमस्ति, इह=संसारे, यस्य=पुरुषस्य, तत्=शीलं, प्रणश्यति=विनश्यति, तस्य=पुरुषस्य, जीवितेन=जीवनेन, अर्थः= प्रयोजनं, न=नास्ति, धनेन न=द्रव्येण न, बन्धुभिः=बान्धवैश्च, न=प्रयोजनं नास्ति ।

**भावार्थः**—संसारे शीलस्य प्राधान्येन तद्विरहिणां बन्धुभिर्द्रव्येण जीवनेनापि न किञ्चित् प्रयोजनम् । शीलहीनास्तु व्यर्थमेव जीवन्तीति ॥

भाषा—पुरुष में शील ( सदाचार ) मुख्य गुण है । वह ( शील ) जिसका नष्ट हो जाता है उसका संसार में जीवन, धन तथा कुटुम्बी किसी से कुछ प्रयोजन नहीं ॥ ४८ ॥

**आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।**
**तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ! ॥ ४९ ॥**

**अन्वयः**—भरतर्षभ ! आढ्यानां मांसपरमं मध्यानां गोरसोत्तरं दरिद्राणां तैलोत्तरं भोजनम् ( दृश्यते ) ।

**अर्थः**—भरतर्षभ !=राजन् ! आढ्यानां=धनिनाम् 'इभ्य आढ्यो धनी' इत्यमरः, मांसपरमं मांसप्रधानं, मध्यानां=धनिदरिद्रयोरन्तराले स्थितानां, गोरसोत्तरं=दुग्धादिप्रधानं, दरिद्राणां=दीनाना, तैलोत्तरं=तैलप्रधानं, भोजनं=भोज्यं खाद्यम् , दृश्यते जगति ।

**भावार्थः**—योग्यतानुसारेण भोजने तरतमभावो लोकानां जगति दृश्यत इति ।

**भाषा**—हे भरतकुलश्रेष्ठ ! धनियो का मांसप्रधान, मध्यश्रेणी के लोगों का गोरसप्रधान ( जिस मे दूध दही आदि अधिक रहता है ) तथा गरीबों का तैलप्रधान भोजन होता है ॥४९॥

**सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।**
**क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५० ॥**

**अन्वयः**—दरिद्राः सदा सम्पन्नतरम् एव अन्नं भुञ्जते, स्वादुतां, क्षुत् जनयति, सा च आढ्येषु सुदुर्लभा ।

**अर्थः—सम्पन्नतरमिति** । दरिद्राः=निर्धनाः, सदा=सर्वदा, सम्पन्नतरम् अतिशयेन=विशेषरूपेण सम्पन्नं=सम्यङ्निष्पन्नमिति सम्पन्नतरं=सुस्वादु एव, अन्नं=भोजनं, भुञ्जते=अदन्ति, क्षुत्=क्षुधा बुभुक्षा, स्वादुतां=रुचिं, जनयति=उत्पादयति, सा च=क्षुत , आढ्येषु=धनिषु, सुदुर्लभा=अत्यन्तदुःखलभ्या अस्तीति शेषः ।

**भावार्थः**—निर्धनाः क्षुधोदयात् स्वाद्वन्नं भुञ्जते, तदभावाच्च धनिनां नास्ति तादृशी स्थितिरिति ॥

**भाषा**—दरिद्र सदा ( धनियों से ) अधिक स्वादिष्ट भोजन करते हैं, क्योंकि भूख ही स्वाद उत्पन्न करती है और वह धनियों के लिए दुर्लभ है ॥ ५० ॥

**प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।**
**जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ! ॥ ५१ ॥**

**अन्वयः**—महीपते ! लोके प्रायेण श्रीमतां भोक्तुं शक्तिः न दृश्यते, दरिद्राणां काष्ठानि अपि जीर्यन्ति ।

**अर्थः—प्रायेणेति** । महीपते=राजन् ! लोके=भुवने 'लोकस्तु भुवने जने' इत्यमरः, प्रायेण=प्रायशः, श्रीमतां=लक्ष्मीवतां, भोक्तुं=भोजनं कर्तुं, शक्तिः=सामर्थ्यं, न विद्यते=नास्ति, दरिद्राणां=निर्धनानां, काष्ठानि=भुक्तानि दारूण्यपि, जीर्यन्ति=जीर्णानि भवन्ति ।

**भावार्थः**—धनवन्तो हि भोक्तुं न पारयन्ति, दरिद्रास्तु यत्किमपि भुञ्जते तज्जीर्णतां नयन्ति॥

**भाषा—**राजन्! संसार में प्रायः धनियों को खाने (भोजन करने) की शक्ति नहीं होती और गरीबों को लकड़ी (उसके समान कड़ी वस्तु) भी पच जाती है॥ ५१॥

**अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम्।**
**उत्तमानां तु मर्त्यानामवमानात् परं भयम्॥ ५२॥**

**अन्वयः—**अन्त्यानां मर्त्यानाम् अवृत्तिः भयम्, मध्यानां मरणात् भयम्, उत्तमानां तु अवमानात् परं भयम् (अस्ति)।

**अर्थः—अप्रवृत्तिरिति।** अन्त्यानाम्=अधमानां, मर्त्यानां=मनुष्याणां 'मनुष्या मानुषा मर्त्या' इत्यमरः, अवृत्तिः न वृत्तिः=जीवनं जीविकेत्यर्थः, अवृत्तिः जीविकाया अभावः, पञ्चम्यर्थे प्रथमान्तः प्रयोगः आर्षः 'भीत्रार्थानां भयहेतु'रिति शासनात् पञ्चमीविभक्तेरेवौचित्यात्, भयं=भीतिः, मध्यानां=मध्यमानां, मरणात्=मृत्योः, भयं=भीः, उत्तमानां=श्रेष्ठानां तु, अवमानात् परम्=अपमानादेव, भयम् अस्ति।

**भावार्थः—**जीविकाराहित्यमन्त्यान् मृत्युर्मध्यान् अपमानश्चोत्तमान् व्यथयतीति॥

**भाषा—**अधमों को जीविका के न होने से, मध्यमस्थितिवालों को मौत (मृत्यु) से भय रहता है। उत्तम मनुष्यों को तो अपमान (अनादर) से ही भय लगता है॥ ५२॥

**ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः।**
**ऐश्वर्यमदमत्तो हि नाऽपतित्वा विबुध्यते॥ ५३॥**

**अन्वयः—**पानमदादयः मदाः ऐश्वर्यमदपापिष्ठाः (सन्ति)। हि ऐश्वर्यमदमत्तः (पुमान्) अपतित्वा न विबुध्यते।

**अर्थः—ऐश्वर्यमदपापिष्ठा इति।** पानमादादयः पानमदः=सुरादिपानजन्यो मदः आदिः=मुख्यः येषामेवम्भूताः, मदाः=गर्वाः, ऐश्वर्यमदपापिष्ठाः ऐश्वर्यमदः=सम्पन्मदः पापिष्ठः=निन्दिततमः येषां ते तथाभूताः सन्ति। हि=यतः, ऐश्वर्यमदेन=राज्यमदेन मत्तः=क्षीबः 'मत्ते शौण्डोत्कटक्षीबा' इत्यमरः, पुमान्, अपतित्वा=न भ्रंशित्वा सम्पत्तेरिति शेषः, न विबुध्यते=न जागर्ति, भ्रंशात् पूर्वमन्ध एव तिष्ठतीत्यर्थः।

**भावार्थः—**ऐश्वर्यमदो न चिराय तिष्ठतः पानमदादीनतिशेते, नापि सर्वनाशं करोति। अयं तु सर्वथा विनाशयत्येवेति॥

**भाषा—**पीने (शराब पीने) का नशा आदि अनेक नशों में ऐश्वर्य (प्रभुता) की नशा बहुत ही बुरा है, क्योंकि प्रभुता के मद से मतवाला विना (सम्पत्ति) भ्रष्ट हुए नहीं होश में आता॥ ५३॥

**इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः।**
**तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव॥ ५४॥**

**अन्वयः—**इन्द्रियार्थेषु वर्तमानैः अनिग्रहैः तैः इन्द्रियैः ग्रहैः नक्षत्राणि इव अयं लोकः ताप्यते।

**अर्थः—इन्द्रियैरिति** । इन्द्रियार्थेषु=विषयेषु, वर्तमानैः=विद्यमानैः, अनिग्रहैः नास्ति निग्रहः=बन्धनं येषां तानि तैः अवशैरित्यर्थः, तैः=श्रोत्रादिभिः, इन्द्रियैः=करणैः, ग्रहैः=आदित्यादिभिः, नक्षत्राणि इव=तारा इव 'नक्षत्रमृक्षं भं तारा' इत्यमरः अयम्=एषः, लोकः=मनुष्यलोकः, ताप्यते=सन्ताप्यते आक्रम्यत इति यावत् ।

**भावार्थः—**विषयलोलुपैरत एवाऽवशैरिन्द्रियैर्मानवसमाजः परिक्लिश्यते, तस्मादिन्द्रियजय आवश्यकः ॥

**भाषा—**सांसारिक पदार्थों मे लीन अत एव वश मे न रहने वाली इन्द्रियां इस संसार को ग्रहों ( सूर्य चन्द्र आदि ) द्वारा ताराओ की भाँति आक्रमण करती है ॥ ५४ ॥

**यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।**
**आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५५ ॥**

**अन्वयः—**यः आत्मकर्षिणा सहजेन पञ्चवर्गेण जितः, तस्य आपदः शुक्लपक्षे उडुराट् इव वर्धन्ते ।

**अर्थः—यो जित इति** । यः=पुरुषः, आत्मकर्षिणा आत्मानं कर्षतीति तेन=चित्ताकर्षकेण, सहजेन=सहोत्पन्नेन स्वाभाविकेन, पञ्चवर्गेण पञ्चानां=श्रोत्रादिपञ्चेन्द्रियाणां वर्गः=समूहः तेन, जितः=विजितः, तस्य=पुरुषस्य, आपदः=आपत्तयः, शुक्लपक्षे=सितपक्षे, उडुराट् इव=नक्षत्रनाथः चन्द्रमा इव, वर्धन्ते=एधन्ते ।

**भावार्थः—**कर्मेन्द्रियवशीकृतः पुरुषो वर्धमानामेवापत्तिमनुभवतीति ॥

**भाषा—**जो चित्त को आकर्षण करनेवाली साथ में उत्पन्न ( कान, नाक आदि ) पाँच इन्द्रियों से जीता गया, शुक्ल पक्ष ( सुदी पाख ) में चन्द्रमा की तरह उसकी आपत्तियाँ बढ़ती हैं ॥ ५५ ॥

**अविजित्य यथात्मानममात्यान् विजिगीषते ।**
**मित्रान् वाऽजितामात्यः सोऽवशः परिहीयते ॥ ५६ ॥**

**अन्वयः—**(यः) यथा आत्मानम् अविजित्य अमात्यान् विजिगीषते ( तथा ) अजितामात्यः अमित्रान् वा विजिगीषते, अवशः सः परिहीयते ।

**अर्थः—अविजित्येति** । यः, यथा=यद्वत्, आत्मानं=स्वम्, अविजित्य=विजयमकृत्वा, अमात्यान्=मन्त्रिणः, विजिगीषते=विजेतुमिच्छति, तथा=तद्वत्, अजितामात्यः अजिताः=अविजिताः अमात्याः=सचिवा येन स तथाभूतः, अमित्रान्=द्विषो वा 'द्विड्विपक्षाहितामित्रे'त्यमरः, विजिगीषते, अवशः=अजितात्मा, सः, परिहीयते=त्यज्यते, जनैरिति शेषः ।

**भावार्थः—**अजितात्मनो मन्त्रिजिगीषेवाजितामात्यस्य शत्रुजिगीषा हानिकरीति ॥

**भाषा—**जो आत्मा को बिना जीते ( वश में किये ) मन्त्रियों को जीतने की इच्छा करता है या बिना मन्त्रियों को वश में किये शत्रुओं को जीतने की इच्छा करता है उस अजितेन्द्रिय को ( लोग ) छोड़ देते हैं ॥ ५६ ॥

**आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत्।**
**ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५७ ॥**

**अन्वयः**—प्रथमम् आत्मानम् एव द्वेष्यरूपेण योजयेत्, ततः अमात्यान्, अमित्रान् च, (सः) मोघं न विजिगीषते।

**अर्थः—आत्मानमिति।** यः, प्रथमं=पूर्वम्, आत्मानम् एव=मन एव, द्वेष्यरूपेण=शत्रुरूपेण, योजयेत्=संयोजयेत्, ततः=अनन्तरम्, अमात्यान्=मन्त्रिणः, अमित्रान्=शत्रूंश्च, योजयदित्यावर्तनीयम्, सः, मोघं न=निरर्थकं निष्फलं यथा स्यात्तथेति न सफलमेवेत्यर्थः, विजिगीषते=जेतुमिच्छति।

**भावार्थः**—मनोनिग्रहपूर्वकामात्यवशीकरणेन शत्रुजिगीषा सफलतामेतीति।

**भाषा**—पहले अपनी आत्मा को ही शत्रु समझे बाद मन्त्री और शत्रुओं को भी, इससे उसकी जीतने की चाह सफल होती है ॥ ५७ ॥

**वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु।**
**परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५८ ॥**

**अन्वयः**—श्रीः वश्येन्द्रियं जितात्मानं विकारिषु धृतदण्डं परीक्ष्यकारिणं धीरम् अत्यन्तं निषेवते॥

**अर्थः—वश्येन्द्रियमिति।** श्रीः=लक्ष्मीः, वश्येन्द्रियं वश्यानि=अधीनानि इन्द्रियाणि=करणानि यस्य तं, जितात्मानं=जितान्तःकरणं, विकारिषु=अपराधिषु, धृतदण्डं धृतः=गृहीतः दण्डः=राजदण्डो येन तादृशं, परीक्ष्यकारिणं=विचार्य कार्यं कुर्वाणं, धीरं=विद्वांसम्, अत्यन्तं=बहुलं यथा स्यात्तथा, निषेवते=सेवते भजतीत्यर्थः।

**भावार्थः**—वशी न्यायी विवेकी च पुमान् श्रियमवश्यं लभते॥

**भाषा**—श्री (लक्ष्मी) इन्द्रियों को तथा मन को जीतनेवाले, अपराधियों को दण्ड देनेवाले और सोच विचार कर काम करनेवाले विद्वान् की अत्यन्त सेवा करती है ॥ ५८ ॥

**रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः।**
**तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ ५९ ॥**

**अन्वयः**—हे राजन्! पुरुषस्य शरीरं रथः, आत्मा नियन्ता, इन्द्रियाणि च अश्वाः। तैः अप्रमत्तः कुशली धीरः दान्तैः सदश्वैः रथी इव सुखं याति।

**अर्थः—रथ इति।** हे राजन्! पुरुषस्य=पुंसः, शरीरं=विग्रहः देह इत्यर्थः, 'शरीरं वर्ष्म विग्रहः' इत्यमरः, रथः=स्यन्दनः 'शताङ्गः स्यन्दनो रथः' इत्यमरः, आत्मा=अन्तरात्मा, नियन्ता=नियामकः सारथिः, इन्द्रियाणि=श्रोत्रादीनि च, अश्वाः=वाजिनः वर्तन्ते। तैः, अप्रमत्तः=सावधानः, कुशली=निपुणः, धीरः=विद्वान्, दान्तैः=कृतदमनैरधीनैरिति यावत्, सदश्वैः=उत्तमवाजिभिः, रथी इव=रथारोहीव, सुखं=सुखपूर्वकं यथा स्यात्तथा, याति=गच्छति।

**भावार्थः**—यथा निपुणो रथारोही दान्तैरश्वैः सुखेन याति, तथा पुरुषः सावधानः सन् वशं नीतैरिन्द्रियैः सुखेनात्मप्रणोदितं शरीरं नयतीति।

**भाषा**—राजन्! मनुष्य का शरीर रथ है, आत्मा सारथि है और इन्द्रियाँ घोड़े है। इनसे सावधान ( होशियार ) रहनेवाला चतुर विद्वान् रथारोही की भांति दमन पाये हुए उन अच्छे ( इन्द्रियरूपी ) घोड़ों से सुख से रास्ता पार कर जाता है॥ ५९॥

**एतान्यनिगृहीतानि व्यापादयितुमप्यलम्।**
**अविधेया इवाऽदान्ता हयाः पथि कुसारथिम्॥ ६०॥**

**अन्वयः**—एतानि अनिगृहीतानि ( सन्ति ) अविधेयाः अदान्ताः हयाः पथि कुसारथिम् इव ( नरं ) व्यापादयितुम् अपि अलम्।

**अर्थः**—**एतानीति**। एतानि=इन्द्रियाणि, अनिगृहीतानि=अनिबद्धानि मुक्तानि सन्ति, अविधेयाः=अवचनग्राहिणः अशिक्षिता इति यावत्, अदान्ताः=अशान्ताः, हयाः=वाजिनः 'वाजिवाहावगन्धर्वहयसैन्धवसप्तयः' इत्यमरः, पथि=मार्गे, कुसारथिम् इव=दुष्टं यन्तारमिव, नरं, व्यापादयितुम् अपि=हन्तुमपि, अलं=समर्थानि सन्ति।

**भावार्थः**—अनिगृहीतानीन्द्रियाणि पुरुषं नाशयितुं शक्तानि, तस्मादिन्द्रियनिग्रहोऽवश्यं विधेय इति॥

**भाषा**—इशारे मे न रहनेवाले तथा दमन न पाये हुए, घोड़े जिसप्रकार मूर्ख सारथि को मार्ग में मार गिराते हैं, वैसे ही अधीन मे न रहनेवाली इन्द्रियां ( अपने सारथि आत्मा को ) मार डालने में भी समर्थ हैं॥ ६०॥

**अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः।**
**इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम्॥ ६१॥**

**अन्वयः**—बालः अजितैः इन्द्रियैः, अनर्थम् अर्थतः, अर्थं च अनर्थतः एव पश्यन् सुदुःखं सुखं मन्यते।

**अर्थः**—**अनर्थमिति**। बालः=अविवेकी पुरुषः, अजितैः=अवशीकृतैः, इन्द्रियैः=करणैः, अनर्थम्=अपायम्, अर्थतः=धनरूपेण, सार्वविभक्तिकस्तसिः, अर्थं च=वस्तुतत्त्वं च, अनर्थतः= अपदार्थतः एव, पश्यन्=अवलोकयन्, सुदुःखम्=अत्यन्तमपि दुःखं, सुखं=सुखकरं, मन्यते=जानाति।

**भावार्थः**—अविवेकिनो वस्तुन्यवस्तुत्वमवस्तुनि वस्तुत्वमिति धिया दुःखेऽपि सुखबुद्धिर्जायते॥

**भाषा**—बालक ( अज्ञानी ) इन्द्रियों के न जीतने से अर्थ को अनर्थ और अनर्थ को अर्थ समझ कर महादुःख को भी सुख ही मानता है॥ ६१॥

**धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशाऽनुगः।**
**श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते॥ ६२॥**

**अन्वयः**—यः धर्मार्थौ परित्यज्य इन्द्रियवशानुगः स्यात्, सः श्रीप्राणधनदारेभ्यः क्षिप्रं परिहीयते।

**अर्थः**—**धर्मार्थाविति**। यः=पुरुषः, धर्मार्थौ=पुरुषार्थचतुष्टयान्तर्गतौ पुरुषार्थौ, परित्यज्य=

विहाय, इन्द्रियवशानुगः इन्द्रियाणां=श्रोत्रादीनां वशम्=अधीनम् अनुगच्छति=अनुसरतीति तथाभूतः, स्यात्=भवेत्, सः=पुरुषः, श्रीप्राणधनदारेभ्यः श्रीः=लक्ष्मीः प्राणाः=असवः 'पुंसि भूम्न्यसवः प्राणा' इत्यमरः, धनं=द्रव्यं दाराश्च=स्त्री च 'पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः, तेभ्यः, क्षिप्रं=द्रुतं 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः परिहीयते=हीनो भवति।

**भावार्थः**—इन्द्रियजितः पुमान् धर्मार्थत्यागेन स्वयं श्रीप्रभृतिभिस्त्यज्यत इति॥

**भाषा**—जो धर्म तथा अर्थ का त्याग कर इन्द्रियों के वश में होकर चलता है, उसको श्री (सम्पत्ति), प्राण, धन तथा स्त्री ये सब शीघ्र ही छोड़ देते हैं॥ ६२॥

**अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः।**
**इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः॥ ६३॥**

**अन्वयः**—यः अर्थानाम् ईश्वरः, (सः) इन्द्रियाणाम् अनीश्वरः स्यात्। हि सः इन्द्रियाणाम् अनैश्वर्यात् ऐश्वर्यात् भ्रश्यते।

**अर्थः—अर्थानामिति**। यः, अर्थानां=द्रव्याणां वस्तूनां वा, ईश्वरः=प्रभुः, सः, इन्द्रियाणां=करणानाम्, अनीश्वरः=अप्रभुः, स्यात्=भवेत्। हि=यस्मात्कारणात्, सः=पुमान्, इन्द्रियाणाम्, अनैश्वर्यात्=अप्रभुत्वात् हेतोः, ऐश्वर्यात्=सम्पत्तेः, भ्रश्यते=भ्रश्यति अधः पतति, आत्मनेपदमार्षम्।

**भावार्थः**—अवशी धनी त्विन्द्रियाणां चाञ्चल्यात् सम्पत्तिहीनो भवतीति॥

**भाषा**—धन पर जिसकी प्रभुता है, वह इन्द्रियों का प्रभु नहीं हो सकता। इन्द्रियों पर प्रभुत्व न होने से उसकी सम्पत्ति नष्ट हो जाती है॥ ६३॥

**आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः।**
**आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ६४॥**

**अन्वयः**—(पुरुषः) यतैः मनोबुद्धीन्द्रियैः आत्मना आत्मानम् अन्विच्छेत्। हि आत्मा एव आत्मनः बन्धुः, आत्मा एव आत्मनः रिपुः (अस्ति)।

**अर्थः—आत्मनेति**। पुरुषः, यतैः=वशीकृतैः, मनोबुद्धीन्द्रियैः मनः=मानसं बुद्धिः=मतिः इन्द्रियाणि=कर्मेन्द्रियाणि च तैः, आत्मना=स्वेन बुद्धयेति यावत्, आत्मानं=ज्ञानाधिकरणम्, अन्विच्छेत्=ज्ञातुमिच्छेत्। हि=येन हेतुना, आत्मा एव=अन्तःकरणमेव, आत्मनः=चैतन्यरूपस्य, बन्धुः=बन्धुरिव सहायकः, आत्मा एव, आत्मनः, रिपुः=शत्रुः अस्ति।

**भावार्थः**—आत्मैव हि यत आत्मनो मित्रत्वशत्रुत्वयोः कारणं, तस्मादिन्द्रियजयोत्तरमात्मसाक्षात्कारः करणीयः॥

**भाषा**—मन, बुद्धि तथा इन्द्रियों को वश में कर अपने से अपनी आत्मा को पाने (वश में करने) की इच्छा करे। क्योंकि आत्मा ही अपना मित्र या शत्रु होती है॥ ६४॥

**बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः।**
**स एव नियतो बन्धुः स एव नियतो रिपुः॥ ६५॥**

**अन्वयः**—येन आत्मना आत्मा जितः, तस्य एव आत्मनः आत्मा बन्धुः। स एव नियतः बन्धुः, सः एव नियत रिपुः ( अस्ति )।

**अर्थः—बन्धुरिति।** येन=पुरुषेण, आत्मना=मनसा, आत्मा=ज्ञानाश्रयभूमिः, जितः, तस्य एव=तस्यैव, आत्मनः, आत्मा, बन्धुः=सहायः। सः एव=आत्मैव, नियतः=निश्चितः, बन्धुः, स एव=आत्मैव, नियतः-निश्चितः, रिपुः=शत्रुः अस्ति।

**भावार्थः**—जितात्मनो ह्यात्मा स्वात्मनो मित्रत्वं शत्रुत्वं चावहति॥

**भाषा**—जिसने स्वयं अपनी आत्मा को जीत लिया है उसीकी आत्मा उसका बन्धु है। वही सच्चा बन्धु और वही सच्चा शत्रु है॥ ६५॥

**क्षुद्राक्षेणेव जालेन झषावपिहितावुरू।**
**कामश्च राजन्! क्रोधश्च तौ प्रज्ञानं विलुम्पतः॥ ६६॥**

**अन्वयः**—राजन्! कामः क्रोधः च तौ क्षुद्राक्षेण जालेन अपिहितौ उरू झषौ इव प्रज्ञानं विलुम्पतः।

**अर्थः—क्षुद्राक्षेणेति।** राजन्=नृप!, कामः क्रोधः च=षडरिमध्यगतौ कामक्रोधनामकौ वाच्यौ पुरुषार्थौ, तौ=रिपू, क्षुद्राक्षेण क्षुद्रम्=अल्पं मन्दमित्यर्थः, अक्षि=नेत्रं विवरमिति यावत्, यस्मिंस्तत् तेन क्षुद्राक्षेण=सूक्ष्मच्छिद्रेण, जालेन=आनायेन 'आनायः पुंसि जालं स्यात्' इत्यमरः, अपिहितौ=आच्छादितौ 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः, उरू=महान्तौ, झषौ इव=मीनाविव, प्रज्ञानं=विशिष्टं ज्ञानं, विलुम्पतः=नाशयतः।

**भावार्थः**—कामक्रोधाभ्यां बुद्धिर्हीयतेऽतस्तौ त्याज्यौ॥

**भाषा**—राजन्! जिसप्रकार सूक्ष्म छेदवाले जाल में फँसी हुई मोटी मछलियां अपने ज्ञान को नष्ट कर देती है उसी प्रकार काम और क्रोध ये दोनों विशिष्ट ज्ञान को लुप्त कर देते हैं॥ ६६॥

**समवेक्ष्येह धर्मार्थौ सम्भारान् योऽधिगच्छति।**
**स वै सम्भृतसम्भारः सततं सुखमेधते॥ ६७॥**

**अन्वयः**—इह यः धर्मार्थौ समवेक्ष्य सम्भारान् अधिगच्छति, सम्भृतसम्भारः सः सततं सुखम् एधते।

**अर्थः—समवेक्ष्येति।** इह=संसारे, यः=नरः धर्मार्थौ=तदाख्यौ पुरुषार्थौ, समवेक्ष्य=पर्यालोच्य, सम्भारान्=साधनानि जयस्येति तात्पर्यम्, अधिगच्छति=प्राप्नोति, सम्भृतसम्भारः=सम्पादितजयसामग्रीकः, सः=नरः, सततं=सन्ततं 'सततेऽनारताश्रान्तसन्तताविरतानिशम्' इत्यमरः, सुखं=सुखेनेति यावत्, एधते=वर्धते।

**भावार्थः**—धर्मार्थपर्यालोचनया जयसामग्रीसम्पादकः सततं सुखं लभत इति॥

**भाषा**—जो इस संसार में धर्म तथा अर्थ को समझकर जयसामग्री ( उपाय ) पाता है, उस सामग्री से पूर्ण उस पुरुष की सदा अनायास ही उन्नति होती है॥ ६७॥

**यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान् ।**
**जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥ ६८ ॥**

**अन्वयः**—यः मनोमयान् आभ्यन्तरान् पञ्च शत्रून् अविजित्य अन्यान् रिपून् जिगीषति, रिपवः तम् अभिभवन्ति ।

**अर्थः—यः पञ्चेति** । यः=नरः, मनोमयान्=मनोविकारस्वरूपान्, आभ्यन्तरान्=शरीरस्थान्, पञ्च=पञ्चसंख्याकान्, शत्रून्=श्रोत्रादिरिपून्, अविजित्य=अवशीकृत्य, अन्यान्=इतरान् बाह्यानिति यावत्, रिपून्=शत्रून्, जिगीषति=जेतुमिच्छति, रिपवः=शत्रव, तं=नरम्, अभिभवन्ति=पराजयन्ते ।

**भावार्थः**—श्रोत्रादीन् शरीरस्थान् रिपून् जित्वैव तद्भिन्नान् जयेदिति ॥

**भाषा**—जो चित्त के विकारस्वरूप भीतरी पांच ( इन्द्रियरूपी शत्रुओं को न जीत कर दूसरे शत्रुओं को जीतना चाहता है, शत्रु उसपर आक्रमण करते हैं ॥ ६८ ॥

**दृश्यन्ते हि महात्मानो बध्यमानाः स्वकर्मभिः ।**
**इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ६९ ॥**

**अन्वयः**—महात्मानः स्वकर्मभिः राजानः इन्द्रियाणाम् अनीशत्वात् राज्यविभ्रमैः वध्यमानाः दृश्यन्ते ।

**अर्थः—दृश्यन्त इति** । महात्मानः=महामनसः, स्वकर्मभिः=स्वकार्यैः, राजानः=नरेन्द्राः, इन्द्रियाणाम्, अनीशत्वात्=अप्रभुत्वात्, राज्यविभ्रमैः=राज्यविलासैः 'विलासविब्बोकविभ्रमा ललितं तथा' इत्यमरः, बध्यमानाः=प्राप्तबन्धनाः, दृश्यन्ते=अवलोक्यन्ते ।

**भावार्थः**—राजानो राज्यविलासैर्महात्मानश्च स्वैः सत्कर्मभिर्बद्धा दृष्टिपथमायान्ति लोक इति ॥

**भाषा**—( इस संसार में ) महात्मा लोग अपने अपने कर्मों से बँधे दिखाई देते हैं और इन्द्रियों पर प्रभुता न होने के कारण राजा लोग राज्य के भोग-विलासों से बँधे रहते हैं॥६९॥

**असन्त्यागात् पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात् ।**
**शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात् पापैः सह सन्धिं न कुर्यात् ॥७०॥**

**अन्वयः**—दण्डः पापकृताम् असन्त्यागात् मिश्रभावात् अपापान् तुल्यः स्पृशते, तथा आर्द्रं ( दारु ) शुष्केण ( सह ) मिश्र भावात् दह्यते । तस्मात् पापैः सह सन्धिं न कुर्यात् ।

**अर्थः—असन्त्यागादिति** । दण्डः=राजदण्डः, पापकृतां=पापिनाम्, असन्त्यागात्=अपरिहारात्, मिश्रभावात्=पापिभिः सह सम्मिश्रणाद्धेतोः, अपापान्=पापरहितान् निर्दोषानिति यावत्, तुल्यः=सदृशः समानरूपेणेत्यर्थः, स्पृशते=स्पर्शं करोति, आत्मनेपदमार्षम्, यथा आर्द्रं=क्लिन्नं, दारु=काष्ठं, शुष्केण=अनार्द्रेण दारुणा सह, मिश्रभावात्=संयोजनात्, दह्यते=भस्मीभवति । तस्मात्=हेतोः, पापैः सह=पापिभिः सार्धं, सन्धिं=मैत्रीं, न कुर्यात्=नाचरेत् ।

**भावार्थः**—शुष्कदारुसंसर्गेण यथार्द्रमपि दारु भस्मीभवति तथा पापिसंसर्गेण पुण्यात्माऽपि

दण्डभाग् भवति, 'तत्संगीं च पञ्चम' इत्युक्तेः। तस्मात् परिहर पापसंसर्गमिति पद्याशयः॥

**भाषा—**दुष्टों को न छोड़ने तथा उनके साथ मिलने से सज्जन भी समान ही दण्ड पाते हैं, जैसे कि सूखी लकडी के साथ साथ मे होने के कारण ओदी लकड़ी भी जल जाती है। इस लिए दुर्जनो के साथ ( कदापि ) सन्धि ( मेल ) न करें॥ ७०॥

**निजानुत्पततः शत्रून् पञ्च पञ्चप्रयोजनान्।**
**यो मोहान्न निगृह्णाति तमापद् ग्रसते नरम्॥ ७१॥**

**अन्वयः—**यः उत्पततः पञ्चप्रयोजनान् निजान् पञ्च शत्रून् मोहात् न निगृह्णाति, आपत् तं नरं ग्रसते।.

**अर्थः—निजानिति।** यः=नरः, उत्पततः=उत्पतनशीलान् उद्भूतानिति यावत्, पञ्च-प्रयोजनान्। पञ्च=पञ्चसङ्ख्याकानि प्रयोजनानि=शब्दाद्या विषयाः येषां तान्, निजान्=स्वान्, पञ्च शत्रून्=श्रोत्रादीनि पञ्चेन्द्रियाणि, मोहात्=अज्ञानात्, न निगृह्णाति= न निग्रहं करोति, आपत्=आपत्तिः, तं, नरं=पुरुषं, ग्रसते=आक्रामति।

**भावार्थः—**आपत्तिरिन्द्रियवशंवदं नरमाक्रम्य तिष्ठतीत्यत इन्द्रियजयोऽवश्यं कर्तव्यः॥

**भाषा—**जो उछल कूद मचानेवाले, पांच ( रूप, रस, गन्ध, स्पर्श तथा शब्द ) विषयों के प्रेमी, अपने पांच ( नेत्र, जिह्वा, घ्राण, त्वचा तथा श्रोत्र ) इन्द्रियरूपी शत्रुओं को मोह ( प्रेम या अज्ञान ) से वस में नहीं करता, उस नर को विपद ग्रस लेती है॥ ७१॥

**अनसूयार्जवं शौचं सन्तोषः प्रियवादिता।**
**दमः सत्यमनायासो न भवन्ति दुरात्मनाम्॥ ७२॥**

**अन्वयः—**दुरात्मनाम् अनसूया आर्जवं शौचं सन्तोषः प्रियवादिता दमः सत्यम् अनायासः न भवन्ति।

**अर्थः—अनसूयेति।** दुरात्मनां=दुष्टानाम्, अनसूया न असूया=गुणेषु दोषाविष्करणम्, आर्जवम्=ऋजुता सरलता, शौचं=पावित्र्यं, सन्तोषः=तृप्तिः, प्रियवादिता=मिष्टभाषित्वं, दमः= इन्द्रियनिग्रहः, सत्यं=सत्यभाषित्वम्, अनायासः न आयास इति अनायासः=स्थैर्यम्—इति गुणाः, न भवन्ति।

**भावार्थः—**अनसूयादीनां गुणानां दुरात्मसु वासो न दृश्यते, प्रत्युत तेष्वसूयादीनामेव॥

**भाषा—**गुणों में दोष न देखना, सरलता, पवित्रता, सन्तोष, मधुरभाषण, शान्ति, सत्यता और स्थिरता ( आदि गुण ) दुर्जनों में नहीं होते॥ ७२॥

**आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता।**
**वाक् चैव गुप्ता दानं च नैतान्यन्त्येषु भारत!॥ ७३॥**

**अन्वयः—**भारत! अन्त्येषु आत्मज्ञानम् अनायासः तितिक्षा धर्मनित्यता गुप्ता वाक् दानं च एतानि न ( भवन्ति )।

**अर्थः—आत्मज्ञानमिति।** भारत ! भरतकुलोत्पन्न राजर्षे ! अन्त्येषु=अधमेषु, आत्मज्ञानम्=आत्मबोधः, अनायासः=स्थिरता, तितिक्षा=क्षान्तिः 'क्षान्तिस्तितिक्षा' इत्यमरः, धर्मनित्यता धर्मे=वेदोदितकर्मविधौ नित्यता=अवश्यकर्तव्यता, गुप्ता वाक्=रक्षिता वाणी मितभाषित्वमिति यावत्, दानं च-एतानि, न भवन्ति।

**भावार्थः—**आत्मबोधादयो हि न वसन्ति दुर्जनेष्विति॥

**भाषा—**हे भरतकुल के राजा ! आत्मा का ज्ञान, स्थिरता, सहनशक्ति, धर्म में परायणता, परिमित भाषण तथा दान ये (गुण) अधमपुरुषों में नहीं होते॥ ७३॥

**आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान्।**
**वक्ता पापमुपादत्ते क्षममाणो विमुच्यते॥ ७४॥**

**अन्वयः—**अबुधाः आक्रोशपरिवादाभ्यां बुधान् विहिंसन्ति, वक्ता पापम् उपादत्ते, क्षममाणः विमुच्यते।

**अर्थः—आक्रोशपरिवादाभ्यामिति।** अबुधाः=मूर्खाः, आक्रोशपरिवादाभ्याम् आक्रोशश्च=अनिष्टवचनं च परिवादश्च=अपवादश्च निन्देति यावत्, ताभ्यां, बुधान्=विदुषः, विहिंसन्ति=अत्यन्तं पीडयन्ति, वक्ता=कथयिता, पापम्=अधर्मम्, उपादत्ते=प्राप्नोति, क्षममाणः=सहमानः, विमुच्यते=पापान्मुक्तो भवति।

**भावार्थः—**दुष्टाः सज्जनान् निन्दादिभिर्दूषयन्ति, तत्र वक्ता दोषी भवति, श्रुत्वापि सहनशीलस्तु न पापैर्लिप्यत इति॥

**भाषा—**मूर्ख लोग विद्वानों को शाप तथा निन्दा से दूषित करते हैं, (किन्तु) वक्ता (आक्षेप देने तथा निन्दा करनेवाला) पाप का भागी होता है और सहन करनेवाला (पाप से) छुटकारा पा जाता है॥ ७४॥

**हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम्।**
**शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम्॥ ७५॥**

**अन्वयः—**असाधूनां बलं हिंसा, राज्ञां बलं दण्डविधिः, स्त्रीणां बलं शुश्रूषा, गुणवतां बलं तु क्षमा (भवति)।

**अर्थः—हिंसेति।** असाधूनां=दुर्जनानां, बलं शक्तिः, हिंसा=हिंसनं प्राणवियोजनव्यापारः, राज्ञां=नृपाणां, बलं=सामर्थ्यं, दण्डविधिः=दण्डप्रदानम्, स्त्रीणां=योषितां बलं, शुश्रूषा=सेवा, गुणवतां=गुणिनां, बलं तु, क्षमा=क्षान्तिः, भवति।

**भावार्थः—**दुर्जननृपस्त्रीगुणिनां हिंसादण्डसेवाक्षान्तयो बलानीति॥

**भाषा—**दुर्जनों का बल हिंसा करना, राजाओं का बल दण्ड देना, स्त्रियों का बल सेवा-शुश्रूषा और गुणियों का बल क्षमा है॥ ७५॥

**वाक्संयमो हि नृपते ! सुदुष्करतमो मतः।**
**अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम्॥ ७६॥**

**अन्वयः**—नृपते ! वाक्संयमः सुदुष्करतमः मतः, ( अतः ) अर्थवत् विचित्रं च बहु भाषितुं न शक्यम् ।

**अर्थः—वाक्संयम इति ।** नृपते ! = राजन् !, वाक्संयमः=वाचो नियमनं, सुदुष्करतमः = सुतराम् अतिशयेन च दुर्लभः, मतः=सम्मतः, अतः, अर्थवत्=सार्थकं, विचित्रम्=अद्भुतं, बहु=अधिकं, भाषितुं=वक्तुं, न शक्यम्=अशक्यम् ।

**भावार्थः**—वाङ्निरोधोऽनितरां दुष्करो भवतीत्यतः सार्थकं विचित्रं च बहु भाषणं कर्तुं शक्यमिति ।

**भाषा**—राजन् ! वाणी को रोकना अत्यन्त ही कठिन समझा जाता है, इसलिए अर्थपूर्ण तथा विचित्र बहुत नहीं कहा जा सकता ॥ ७६ ॥

**अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।**
**सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७७ ॥**

**अन्वयः**—राजन् ! वाक् सुभाषिता सती विविधं कल्याणम् अभ्यावहति । सा एव दुर्भाषिता सती अनर्थाय उपपद्यते ।

**अर्थः—अभ्यावहतीति ।** राजन् !, वाक्=वाणी, सुभाषिता= सुष्ठु कथिता सती, विविधं=नैकविधं, कल्याणं=शुभं 'कल्याणं मङ्गलं शुभम्' इत्यमरः, अभ्यावहति=उत्पादयति । सा एव=सैव वाक् ,दुर्भाषिता=दुरुक्ता सती, अनर्थाय=अश्रेयसे, उपपद्यते=कल्पते समर्था भवतीत्यर्थः ।

**भावार्थः**—एका वागेव सम्यगसम्यक् च समुच्चारिता कल्याणमनर्थं च सम्पादयति, ततः सद्भाषणमेव श्रेयस्करमाश्रयणीयम् ॥

**भाषा**—राजन् ! अच्छे ढंग से कही गई बात अनेक प्रकार का कल्याण करती है और वही बुरे ढंग से कही जानेपर अनर्थ करने मे समर्थ होती है ॥ ७७ ॥

**रोहते सायकैर्विद्धं वनं परशुना हतम् ।**
**वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७८ ॥**

**अन्वयः**—सायकैः विद्धं परशुना हतं ( वा ) वनं रोहते, वाचा दुरुक्तं बीभत्सं वाक्क्षतं न संरोहति ।

**अर्थः—रोहत इति ।** सायकैः=बाणैः, विद्धं=कृतवेधं, परशुना=परश्वधेन 'परशुश्च परश्वधः' इत्यमरः, हतं=भिन्नं वा, वनं=काननं 'गहनं काननं वनम्' इत्यमरः, रोहते=रोहति प्रादुर्भवति, रुहधातोः परस्मैपदित्वादत्रात्मनेपदमार्षं ज्ञेयम् , वाचा=वाण्या, दुरुक्तं=दुर्भाषितं, बीभत्सम्=अमङ्गलं निन्दितमित्यर्थः, वाक्क्षतं वाचः=गिरः क्षतम्=आघातः वाक्क्षतं=वाग्वज्रप्रहारः, न संरोहति=न पुनः प्ररोहति ।

**भावार्थः**—वनं तु परशुसायकभिन्नमपि प्ररोहति, वाचा समुत्पन्न आघातो न कदापि दूरं भवतीति दुर्वचः प्रयोगोऽनुचितः ॥

**भाषा**—बाणों से बेधे हुए तथा फरसे से खोदे हुए वन में उपज होती है अर्थात् वहां

फिर पैदाइश होती है, ( किन्तु ) अनुचित तथा निन्दित भाषण से होनेवाला व्रन ( घाव ) नहीं पूरा होता ॥ ७८ ॥

**कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः ।**
**वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ७९ ॥**

**अन्वयः—**( जनाः ) शरीरतः कर्णिनालीकनाराचान् निर्हरन्ति, वाक्शयः तु निर्हर्तुं ( केनापि ) न शक्यः, हि सः हृदिशयः ( भवति ) ।

**अर्थः—कर्णिनालीकनाराचानिति ।** जनाः, शरीरतः=देहात्, कर्णिनालीकनाराचान् कर्णी च=कर्णाकृतिफलकः, नालीकश्च=नलिकया प्रक्षेप्यः, नाराचः=लोहमयश्चेति तान् कर्णिनालीकनाराचान्=बाणविशेषान् , निर्हरन्ति=निष्कासयन्ति, वाक्शल्यः तु=दुर्वाक्प्रयोगरूपं कण्टकं तु निर्हर्तुं=निष्कासयितुं, केनापि, न शक्यः=न सम्भवनीयः । हि=यस्मात्कारणात् , सः=वाक्शल्यः, हृदिशयः हृदि=चित्ते शेते=अज्ञातरूपेण तिष्ठतीति हृदिशयः=हृदयस्थः 'शयवासवासिष्व-कालात्' इति सप्तम्या अलुक् , भवति ।

**भावार्थः—**शरीराद् बाणादीनां निष्कासनं सम्भवति न पुनर्वाक्शल्यस्येति दुरुक्तिकण्टकं न कदापि केषाञ्चिन्मनसि निखातव्यमिति ॥

**भाषा—**( लोग ) कर्णी, नालीक, नाराच नामक बाणों को शरीर से निकाल सकते हैं, परन्तु हृदय में घुसा ( चुभता ) हुआ दुर्वचन रूपी कांटा निकाला नहीं जा सकता ॥ ७९ ॥

**वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचयति रात्र्यहानि ।**
**परस्य नाऽमर्मसु ते पतन्ति तान् पण्डितो नवासृजेत् परेभ्यः ॥८०॥**

**अन्वयः—**वाक्सायका वदनात् निष्पतन्ति, यैः आहतः रात्र्यहानि शोचति, ते परस्य न अमर्मसु पतन्ति । पण्डितः तान् परेभ्यः न अवसृजेत् ।

**अर्थः—वाक्सायका इति ।** वाक्सायकाः=वाग्बाणाः, वदनात्=मुखात् 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः, निष्पतन्ति=निर्गच्छन्ति, यैः=वाग्बाणैः, आहतः=विद्धः पुरुषः, रात्र्यहानि=अहोरात्रम् , अत्यन्तसंयोगे द्वितीया, शोचति=शोकं करोति, ते=वाग्बाणाः, परस्य=अन्यस्य, न अमर्मसु=मर्मस्थलेष्वेव, पतन्ति=आघातं कुर्वन्ति, पण्डितः=बुद्धिमान् , तान्=वाक्सायकान् , परेभ्यः=अन्येभ्यः, न अवसृजेत्=न प्रयुञ्जीत ।

**भावार्थः—**वदनविनिर्गतमर्मनिपतितवाग्बाणविद्धः पुरुषो दिवानिशं शोकमग्नो भवत्यतो विद्वद्भिस्तत्प्रयोगोऽन्येषां कृते न करणीय इति ।

**भाषा—**वाग्बाण मुख से निकलते हैं और दूसरों के मर्मों ही पर जा लगते हैं, जिनसे पीड़ित ( मनुष्य ) रात–दिन शोक में डूबा रहता है इसलिए ( बुद्धिमान् ) दूसरों पर उनका प्रयोग न करे ॥ ८० ॥

**यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।**
**बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ ८१ ॥**

**अन्वयः**—देवाः यस्मै पुरुषाय पराभवं प्रयच्छन्ति, तस्य बुद्धिम् अपकर्षन्ति, सः अवाचीनानि पश्यति।

**अर्थः—यस्मै इति**। देवाः=सुराः, यस्मै पुरुषाय=यस्मै पुंसे, पराभवं=पराजयं, प्रयच्छन्ति=ददति, तस्य=पुंसः, बुद्धिं=मतिं 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः, अपकर्षन्ति=हरन्ति। सः=पुमान्, अवाचीनानि=नीचकर्माणि, पश्यति=ईक्षते भजतीत्यर्थः।

**भावार्थः**—पराभूयमानः प्रथमं बुद्धिभ्रष्टो नीचकर्मसेवी च भवतीति।

**भाषा**—देवता जिस मनुष्य को पराजय देते हैं, ( पहले ) उसकी बुद्धि हर लेते हैं जिससे वह नीच कर्मों ही को देखने लगता है॥ ८१॥

**बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते।**
**अनयो नयसङ्काशो हृदयान्नापसर्पति॥ ८२॥**

**अन्वयः**—नयसङ्काशः अनयः बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते हृदयात् न अपसर्पति।

**अर्थः—बुद्धाविति**। नयसङ्काशः=नयतुल्यः, अनयः=अनीतिः, बुद्धौ=मतौ, कलुषभूतायां=कलुषितायां सत्यां, विनाशे=नाशे, प्रत्युपस्थिते=समुपस्थिते, हृदयात्=मानसात्, न अपसर्पति=नापगच्छति बहिर्न भवतीत्यर्थः।

**भावार्थः**—नाशकालोपस्थितौ बुद्धेः कालुष्येण दुर्नयो न हृदयाद् बहिर्भवतीति।

**भाषा**—बुद्धि के कलुषित होने पर तथा नाश उपस्थित होने पर नीति के समान भासमान अनीति हृदय से नहीं हटती ( जाती )॥ ८२॥

**सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ!।**
**पाण्डवानां विरोधेन न चैनानवबुध्यसे॥ ८३॥**

**अन्वयः**—भरतर्षभ! सा इयं ते पुत्राणां बुद्धिः परीता ( अभवत् ), (त्वं) पाण्डवानां विरोधेन च एनान् न अवबुध्यसे।

**अर्थः**—साधारणतया नीतीरभिधाय विशेषेण राजानं प्रति वक्तुकामस्तथोपन्यस्यति—**सेयमिति**। भरतर्षभ!=कुरुश्रेष्ठ! सा इयं=सेयं, ते=तव, पुत्राणां=सुतानां, बुद्धिः=मतिः, परीता=व्याप्ता दुर्नयादिभिः अभवत्, विपरीता सम्प्रति जातेति तात्पर्यम्, अथवा प्रकरणानुरोधादत्र विपरीताशब्दस्य कृते प्रयुक्तः तरीताशब्दस्तमेवाऽर्थं प्रकटयति, त्वं, पाण्डवानां=पाण्डुपुत्राणां युधिष्ठिरादीनां, विरोधेन=विद्वेषेण च, एनान्=स्वपुत्रान्, न अवबुध्यसे=न प्रत्यभिजानासि।

**भावार्थः**—स्वपुत्राणां कलुषितां बुद्धिं पाण्डवविरोधेन ज्ञातुं न प्रभवसि॥

**भाषा**—हे भरतकुल में श्रेष्ठ राजा! आपके पुत्रों की बुद्धि विपरीत (अन्याय से पूर्ण) हो गई है। आप पाण्डवों के साथ वैर होने से इनको ( अपने पुत्रों को ) पहचान नहीं रहे हैं॥८३॥

**राजा लक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत्।**
**शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र! युधिष्ठिरः॥ ८४॥**

**अन्वयः**—धृतराष्ट्र ! लक्षणसम्पन्नः यः त्रैलोक्यस्य अपि राजा भवेत्, सः ते शिष्यः युधिष्ठिरः शासिता अस्तु ।

**अर्थः**—युधिष्ठिरस्य सर्वगुणसम्पन्नत्वं राज्याधिकारित्वं च दर्शयति—**राजेति** । धृतराष्ट्र !=कुरुराज !, लक्षणसम्पन्नः लक्षणैः=राज्ञः चिह्नैः सम्पन्नः=युक्तः 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः, यः, त्रैलोक्यस्य अपि=त्रिभुवनस्यापि, राजा=अधिपः, भवेत्=स्यात्, सः=पूर्वोक्तगुणः, ते=तव, शिष्यः=शासनं मन्यमानः, युधिष्ठिरः=पाण्डोः प्रथमः पुत्रः, शासिता=शासकः पृथिव्या इति शेषः, राजेत्यर्थः, अस्तु=भवतु ।

**भावार्थः**—राजलक्षणोपेतं सद्गुणं युधिष्ठिरं राजपदे स्थापयेति ॥

**भाषा**—धृतराष्ट्र ! जो राजा के लक्षणों से युक्त होने के कारण त्रिभुवन का भी राजा हो सकता है, वह आपका शिष्य युधिष्ठिर ( पृथ्वी का ) शासक ( राजा ) होवे ॥ ८४ ॥

**अतीत्य सर्वान् पुत्रांस्ते भागधेयपुरस्कृतः ।**
**तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८५ ॥**

**अन्वयः**—धर्मार्थतत्त्ववित् तेजसा प्रज्ञया च एव युक्तः युक्तः भागधेयपुरस्कृतः (सः) सर्वान् ते पुत्रान् अतीत्य ( तिष्ठति ) ।

**अर्थः**—दुर्योधनादिभ्योऽपि तस्मिन्नाधिक्यं दर्शयन्नाह—**अतीत्येति** । धर्मार्थतत्त्ववित् धर्मार्थयोः तत्त्वं=सारं वेत्तीति तथाविधः, तेजसा=प्रभावेण, प्रज्ञया=मनीषया चैव युक्तः=सहितः, भागधेयपुरस्कृतः भागधेयेन=भाग्येन 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः, पुरस्कृतः=अग्रेकृतः भागधेयपुरस्कृतः=सद्भाग्यशाली, सः=युधिष्ठिरः, सर्वान्=समस्तान्, ते=तव, पुत्रान्=तनयान् दुर्योधनादीन् 'आत्मजस्तनयः सूनुः सुतः पुत्र' इत्यमरः, अतीत्य=उल्लङ्घ्य, अतीवेति पाठान्तरं, तत्पक्षे अति इव=अतिक्रम्येवेत्यर्थः कार्यः, तिष्ठति ।

**भावार्थः**—धर्मार्थज्ञः प्रज्ञावांस्तेजस्वी भाग्यवांश्च युधिष्ठिरस्त्वत्पुत्रानतिशेते ॥

**भाषा**—धर्म तथा अर्थ के तात्पर्य को जाननेवाला, तेजस्वी, बुद्धिमान्, तथा पूर्ण भाग्यशाली ( युधिष्ठिर ) आपके सभी पुत्रों से बढ़ चढ़ कर है ॥ ८५ ॥

**अनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः ।**
**गौरवात्तव राजेन्द्र ! बहून् क्लेशांस्तितिक्षति ॥ ८६ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतौ द्वितीयोऽध्यायः ॥



**अन्वयः**—राजेन्द्र ! धर्मभृतां वरः यः असौ अनुक्रोशात् आनृशंस्यात् तव गौरवात् ( च ) बहून् क्लेशान् तितिक्षति ।

**अर्थः**—युधिष्ठिरः सम्प्रति तव कारणात् क्लेशान् सहत इत्याह—**अनुक्रोशादिति** । राजेन्द्र != धृतराष्ट्र ! धर्मभृतां=धर्मधारिणां, वरः=श्रेष्ठः योऽसौ=युधिष्ठिरः, अनुक्रोशात्=

दयायाः, आनृशंस्यात्=अक्रौर्यात्, तव=ते, गौरवात्=आदराच्च, बहून्=भूयसः, क्लेशान्=दुःखानि, तितिक्षति=क्षाम्यति सहत इति यावत्, तितिक्षतीति परस्मैपदमार्षम्।

**भावार्थः**—स च युधिष्ठिरो दयाऽक्रौर्यत्वद्गौरवादिहेतुभिर्दुःखानि सहमानस्तिष्ठतीति ॥

होशिङ्गान्वयविश्वनाथचरणश्रीलाऽन्नपूर्णाजनेः
श्रीमल्लक्ष्मणभालचन्द्रविबुधोत्तंसाप्तबोधश्रियः ।
काशीस्थस्य कृतौ नवा द्विजजगन्नाथस्य पूर्तिं गता
व्याख्या श्रीविदुरस्य नीतिविषये तत्त्वार्थदर्शिन्यसौ ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिकृतायां तत्त्वार्थदर्शिनीत्याख्यायां व्याख्यायां द्वितीयोऽध्यायः समाप्तः ।



**भाषा**—राजेन्द्र ! धर्मधारियों में श्रेष्ठ ( माना गया ) वह युधिष्ठिर दया शान्ति तथा आपके गौरव ( बड़प्पन या आदर ) के कारण अनेक कष्टों को सह रहा है ॥ ८६ ॥

श्री अनन्तराम शास्त्री वेताल कृत सरलार्थबोधिनी नामक विदुरनीति
की हिन्दी भाषा टीका का दूसरा अध्याय समाप्त.

**समाप्तश्चायं ग्रन्थः ।**



॥ श्रीः ॥

सटीका—

# विदुरनीतिः ।

## तृतीयोऽध्यायः ।

विबुधाग्रपूजनीयं ज्ञानघनं तं सरस्वतीपूज्यम् ।
गङ्गाधरात्मलाभं वन्देऽहं भालचन्द्रमिह सिद्ध्यै ॥ १ ॥
काशीस्थराजनिर्मितसंस्कृतविद्यासदःपरीक्षासु ।
व्याख्यामि मध्यमायां निर्दिष्टां विदुरनीतिमवशिष्टाम् ॥ २ ॥

परमकारुणिकेन भगवता कृष्णद्वैपायनेन समुपदिष्टं श्रीमहाभारतं नाम पञ्चमं वेदं को नाम सचेताः संस्कृतसाहित्याभिज्ञो न जानाति । तस्यैव किल विदुरनीतिरयमंश उद्योगपर्वान्तर्गतप्रजागरपर्वणि विद्यते । तत्र धृतराष्ट्रः कुरुराजो विदुरं प्रति वक्ष्यमाणयुधिष्ठिरवचोविषये संशयानश्चिन्तामग्नो जागरणेन सन्तप्तश्चेतःशान्त्यै किमपि विचार्य कथयितुं समाज्ञप्तवान् । नीतिज्ञो विदुरश्च सम्यगालोच्य तं धृतराष्ट्रं नीतितत्त्वं ग्राहयामास । तदेतत् प्रकरणं 'विदुरनीति'-नाम्ना समाम्नातपूर्वं पूर्वैः । तत्रैव प्रसङ्गे समुपनिबध्यमानो विषयः पुरस्तादुपवर्ण्यत इदानीम् ।

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=कौरवेश्वरो दुर्योधनादीनां पिता, उवाच=अकथयत् ।

**ब्रूहि भूयो महाबुद्धे ! धर्मार्थसहितं वचः ।**
**शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ १ ॥**

**अन्वयः**—हे महाबुद्धे ! भूयः धर्मार्थसहितं वचः ब्रूहि । शृण्वतः मे तृप्तिः न अस्ति, इह (त्वं) विचित्राणि भाषसे ।

**अर्थः**—धृतराष्ट्रकृतं प्रश्नं दर्शयति—**ब्रूहीति** । हे महाबुद्धे ! महती बुद्धिर्यस्य तत्सम्बुद्धौ महाबुद्धे=हे मतिमत्तम विदुर ! 'आन्महतः समानाधिकरणजातीययो'रित्यात्वम्, भूयः=पुनः, धर्मार्थसहितं धर्मश्च अर्थश्च धर्मार्थौ ताभ्यां सहितं धर्मयुक्तमर्थयुक्तं च, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यत' इति नियमेन सहितशब्दस्य धर्मशब्देनाऽर्थशब्देन च सम्बन्धः, वचः=वचनं, 'भाषितं वचनं वच' इत्यमरः, ब्रूहि=कथय । शृण्वतः=तादृशं वच आकर्णयतः, मे=मम, तृप्तिः=सन्तोषः, नास्ति=न वर्तते । इह=अस्मिन् विषये, त्वं, विचित्राणि=अद्भुतानि, वचांसीति शेषः, भाषसे=ब्रवीषि ।

**भावार्थः—**धर्म्यमर्थ्यं च विचित्रं वचः शृण्वतो नास्ति मे तृप्तिरिति भूयोभूयस्तत्कथयेति।

**भाषा—**धृतराष्ट्र बोले—हे महाबुद्धिवाले विदुर ! तुम फिर धर्म और अर्थ से युक्त वचन को कहो। ( इसे ) सुनते सुनते मुझे तृप्ति नहीं होती, क्योंकि तुम इस विषयमें विचित्र बातें कहते हो॥ १॥

**विदुर उवाच—**विदुरः=तन्नामा नीतिज्ञो विद्वान्, उवाच=अकथयत् उत्तरयामासेत्यर्थः।

**सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम्।**
**उभे त्वेते समे स्यातामार्जवं वा विशिष्यते॥ २॥**

**अन्वयः—**सर्वतीर्थेषु स्नानं, वा सर्वभूतेषु च आर्जवम्—एते उभे तु समे स्याताम्. आर्जवं वा विशिष्यते।

**अर्थः**—धर्मार्थसहितं धृतराष्ट्राभिलषितं विदुरस्य वचःप्रपञ्चं दर्शयति-**सर्वतीर्थेष्विति**। सर्वतीर्थेषु सर्वाणि=सम्पूर्णानि च तानि तीर्थानि=गङ्गादितीर्थानि तेषु, स्नानम्=अवगाहनम्, वा=अथवा, सर्वभूतेषु सर्वाणि=सकलानि यानि भूतानि=प्राणिनः तेषु च, आर्जवम् ऋजोर्भाव आर्जवं=सरलता, समानतेति यावत्, एते=पूर्वोक्ते, उभे तु=द्वे तु, समे=तुल्ये, स्याताम्=भवेताम्, आर्जवं वा=सरलता वा, विशिष्यते=द्वयोर्विशेषतां प्राप्नोति।

**भावार्थः—**सर्वतीर्थावगाहनेन समं सर्वभूतार्जवं ततोऽधिकं वा ज्ञेयम्॥

**भाषा—**विदुर बोले—सब तीर्थों मे स्नान करना तथा सब जीवो के प्रति सरलता ( समानता ) का भाव रखना, ये दोनों बराबर हो सकते हैं, अथवा सरलता का भाव तीर्थ स्नान से बढ़कर होता है॥ २॥

**आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो !।**
**इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि॥ ३॥**

**अन्वयः—**हे विभो ! पुत्रेषु सततम् आर्जवं प्रतिपद्यस्व, ( तेन ) इह परां कीर्तिं प्राप्य प्रेत्य स्वर्गम् अवाप्स्यसि।

**अर्थः—आर्जवमिति**। हे विभो !=हे प्रभो !, पुत्रेषु=सुतेषु, सततं=सर्वदा, आर्जवं=सरलतां साम्यमिति यावत्, प्रतिपद्यस्व=धारय, तेन, इह=भूलोके, परां=महतीं, कीर्तिं=यशः 'यशः कीर्तिः समज्ञा चे'त्यमरः, प्राप्य=आसाद्य, प्रेत्य=मृत्युमवाप्य, स्वर्गं=नाकम्, अवाप्स्यसि=प्राप्स्यसि।

**भावार्थः—**पुत्रेषु साम्यधारणेन भूलोके कीर्तिं तदुत्तरं स्वर्गं च लप्स्यस इति॥

**भाषा—**हे सामर्थ्यवाले ( राजन् ) ! आप पुत्रों ( पाण्डवों ) के प्रति सदा सरलता का भाव रखिए। ( ऐसा करने से ) इस संसार में परम यश के भागी होकर मरने पर स्वर्ग पाइयेगा॥ ३॥

**यावत्कीर्तिर्मनुष्यस्य पुण्या लोके प्रगीयते।**
**तावत्स पुरुषव्याघ्र ! स्वर्गलोके महीयते॥ ४॥**

**अन्वयः**—हे पुरुषव्याघ्र ! लोके मनुष्यस्य यावत् पुण्या कीर्तिः प्रगीयते, तावत् सः स्वर्गलोके महीयते ।

**अर्थः—यावदिति** । हे पुरुषव्याघ्र ! पुरुषेषु=नरेषु व्याघ्र इव=शार्दूल इव शूर इति 'पुरुषाः पूरुषा नरा' इत्यमरः, तत्सम्बुद्धौ 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः, पुरुषव्याघ्र=नरश्रेष्ठ ! राजन् ! 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः, लोके=भुवने मृत्युलोक इत्यर्थः, 'लोकस्तु भुवने जने' इत्यमरः, मनुष्यस्य=मानवस्य, यावत्=यावत्कालपर्यन्तं, पुण्या=निर्मला, कीर्तिः=यशः, प्रगीयते=जनैः सादरमुद्घोष्यते, तावत्=तावत्कालपर्यन्तं, सः=नरः, स्वर्गलोके=नाकलोके, महीयते=पूज्यते तिष्ठतीत्यर्थः ।

**भावार्थः**—संसारे यावत् पुरुषस्य यशो गायन्ति लोकास्तावत्तस्य स्वर्गे स्थितिर्भवति ॥

**भाषा**—हे पुरुषश्रेष्ठ ! मनुष्य का पवित्र यश जब तक संसार मे पाया जाता है, तब तक वह स्वर्गलोक मे पूजा जाता अर्थात् बड़ाई पाता है ॥ ४ ॥

**अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५ ॥**

**अन्वयः**—अत्र अपि केशिन्यर्थे सुधन्वना विरोचनस्य संवादम्—इमं पुरातनम् इतिहासं ( विद्वांसः ) उदाहरन्ति ।

**अर्थः**—पुत्रेषु साम्यप्रदर्शनेन कीर्तिः स्वर्गावाप्तिश्च भवतीतीतिहासोपन्यासं कुर्वन्नाह—**अत्रापीति** । अत्र अपि=अस्मिन् पूर्वोक्तार्थेऽपि, केशिन्यर्थे केशिन्याः=तदाख्यया प्रसिद्धायाः कुमार्याः अर्थः=प्रयोजनं तस्मिन् केशिनीप्राप्तीच्छयेत्यर्थः, सुधन्वना=अङ्गिरोमुनिपुत्रेण ब्राह्मणेन, सहेति शेषः, विरोचनस्य=प्रह्लादपुत्रस्य दैत्येन्द्रस्य, संवादं=विवादरूपतां गतं भाषणम्, इमम्=एतं, पुरातनं=प्राचीनम्, इतिहासं=पुरावृत्तम् 'इतिहासः पुरावृत्त' इत्यमरः, विद्वांस इति शेषः, उदाहरन्ति=उदाहरणरूपेण प्रदर्शयन्ति ।

**भावार्थः**—केशिनीप्राप्त्यर्थं विरोचनसुधन्वनोः सवादरूप इतिहास उदाहरणमुखेन विद्वद्भिः प्रदर्श्यत इति ॥

**भाषा**—इस प्रसङ्ग मे भी केशिनी के विषय में सुधन्वा तथा विरोचन के संवादस्वरूप इस पुराने इतिहास का विद्वान् लोग उदाहरण देते है ॥ ५ ॥

**स्वयंवरे स्थिता कन्या केशिनी नाम नामतः ।**
**रूपेणाप्रतिमा राजन् ! विशिष्टपतिकाम्यया ॥ ६ ॥**

**अन्वयः**—हे राजन् ! रूपेण अप्रतिमा नामतः केशिनी नाम कन्या विशिष्टपतिकाम्यया स्वयंवरे स्थिता ।

**अर्थः**—इतिहासप्रदर्शनमारभते—**स्वयंवर इति** । हे राजन् !=हे नरेन्द्र !, रूपेण=स्वरूपेण, अप्रतिमा=अनुपमा, नामतः=नाम्ना सार्वविभक्तिकस्तसिः, केशिनी नाम=केशिनीति

प्रसिद्धा, 'नामे'त्यव्ययं प्रसिद्धौ, कन्या=कुमारी 'कन्या कुमारी'त्यमरः, विशिष्टपतिकाम्यया विशिष्टः=श्रेष्ठश्चासौ पतिः=दयितश्च तस्य काम्या=अभिलाषा तया शौर्यौदार्यसौमनस्यादिगुणवत्पतिलाभाभिलाषेणेत्यर्थः, स्वयंवरे स्वयं=स्वेन आत्मनैवेति यावत्, व्रियते=अङ्गीक्रियते यः कोऽपि समुपस्थितेषु पतित्वेन स्वीक्रियते यस्मिन् कर्मणि तस्मिन्, स्वयंवरमण्डप इत्यर्थः, स्थिता=उद्यतासीत्।

**भावार्थः**—श्रेष्ठपतिलाभेच्छया सुन्दरी केशिनी स्वयंवरमरचयत्॥

**भाषा**—हे राजन्! (एक समय) अनुपम रूपवाली केशिनी नाम की कन्या श्रेष्ठ पति के पाने की इच्छा से स्वयंवर के लिए उद्यत हुई॥ ६॥

**विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह।**
**प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी॥ ७॥**

**अन्वयः**—अथ दैतेयः विरोचनः (तां) प्राप्तुम् इच्छन् तदा तत्र आजगाम। ततः तत्र केशिनी दैत्येन्द्रं प्राह।

**अर्थः**—स्वयंवरार्थं केशिन्यां समुपस्थितायां यदभूत्तद्दर्शयति—**विरोचन इति**। अथ=स्वयंवरश्रवणोत्तरं, दैतेयः=दैत्यः 'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा' इत्यमरः, विरोचनः=प्रह्लादपुत्रः, तां केशिनीं, प्राप्तुं=लब्धुम्, इच्छन्=अभिलषन्, तदा=तस्मिन् समये, तत्र=स्वयंवरस्थाने, आजगाम=आगच्छत्। ततः=तदनन्तरं, तत्र=स्वयंवरमन्दिरे, केशिनी=तदाख्या सुन्दरी कन्या, दैत्येन्द्रं=दैत्यश्रेष्ठं विरोचनं, प्राह=कथयति, हेति पादपूरणे।

**भावार्थः**—स्वयंवरे समागते दैत्येन्द्रे केशिनी तं पप्रच्छेति॥

**भाषा**—उस समय विरोचन नाम का दैत्य (उस केशिनी को) पाने की इच्छा से वहाँ आया। तब वहाँ केशिनी ने उस दैत्यराज से (इस प्रकार) कहा॥ ७॥

**केशिन्युवाच**—केशिनी=तन्नाम्नी सुन्दरी कन्या, उवाच=प्रश्नं कृतवती।

**किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन!।**
**अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति॥ ८॥**

**अन्वयः**—हे विरोचन! ब्राह्मणाः श्रेयांसः किंस्वित्? दितिजाः वा श्रेयांसः किंस्वित्? अथ सुधन्वा केन पर्यङ्कं न अधिरोहति स्म?।

**अर्थः**—केशिन्याः प्रश्नरीतिं दर्शयति—**किं ब्राह्मणा इति**। हे विरोचन=हे दैत्येन्द्र!, ब्राह्मणाः=विप्राः 'विप्रश्च ब्राह्मणोऽसौ षट्कर्मे'ति कोषः, श्रेयांसः=श्रेष्ठाः 'श्रेयान् श्रेष्ठ' इत्यमरः, किंस्वित्=किमु?, दितिजाः=दैत्या वा, श्रेयांसः=श्रेष्ठाः, किंस्वित्=किंवा?, अथ=अपि च, सुधन्वा=तन्नामा ब्राह्मणः, केन=केन कारणेन, पर्यङ्कं=मञ्चं 'शयनं मञ्चपर्यङ्कपल्यङ्काः' इत्यमरः, न अधिरोहति=नारोहति, 'स्मे'ति पादपूरणे, 'तु हि च स्म ह वै पादपूरणे' इत्यमरः।

**भावार्थः**—किं ब्राह्मणा आहोस्विद् दितिजा वा श्रेष्ठाः? सुधन्वा च किमर्थं पर्यङ्कं नारोहति?

**भाषा**—केशिनी बोली–हे विरोचन ! ब्राह्मणलोग श्रेष्ठ हैं अथवा दैत्यलोग ? और सुधन्वा किस कारण से सिंहासन पर नहीं बैठता ? ॥ ८ ॥

**विरोचन उवाच**—विरोचनः=प्रह्लादपुत्रो दैत्येन्द्रः, उवाच=उत्तरयामास ।

**प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि ! सत्तमाः ।**
**अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥ ९ ॥**

**अन्वयः**—हे केशिनि ! प्राजापत्याः तु वै श्रेष्ठाः, वयं सत्तमाः, इमे लोकाः अस्माकं खलु, देवाः के ? द्विजातयः (वा) के ?

**अर्थः**—विरोचनदत्तमुत्तरमाह—**प्राजापत्या इति** । हे केशिनि !=हे तन्नाम्नि सुन्दरि ! प्राजापत्याः प्रजापतेः=कश्यपस्य अपत्यानि पुमांसः प्राजापत्याः=दैत्यास्तु, वै=निश्चयेन, श्रेष्ठाः=वरिष्ठाः, वयं=दैत्येन्द्राः, सत्तमाः=अतिशोभनाः 'सत्तमश्चातिशोभन' इत्यमरः, स्म इति शेषः, इमे=एते, लोकाः=भुवनानि जना वा, अस्माकं=नः, खलु=निश्चयेन, देवाः=अमराः, के? न केऽपीत्यर्थः, द्विजातयः ब्राह्मणा वा के ? किंपदार्थाः? उभये देवमनुष्या अस्माकं पुरस्तुच्छा इत्यर्थः ।

**भावार्थः**—वयं ( कश्यपर्षिसन्तानस्वरूपाः ) दैत्या एव सर्वश्रेष्ठाः, स्मः । अस्माकमेवाधीनमखिलम् । ततः के देवाः, के च ब्राह्मणाः ? ॥

**भाषा**—विरोचन बोला—हे केशिनि ! प्रजापति की सन्तान दैत्य तो निःसन्देह श्रेष्ठ हैं, हम (दैत्येन्द्र) सर्वश्रेष्ठ हैं । ये सारे लोक हमारे ही हैं । देवता और ब्राह्मण कौन होते हैं ? ॥९॥

**केशिन्युवाच**—केशिनी=तन्नाम्नी सुन्दरी, उवाच=अकथयत् ।

**इहैवावां प्रतीक्षाव उपस्थाने विरोचन ! ।**
**सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ १० ॥**

**अन्वयः**—हे विरोचन ! आवाम् इह एव उपस्थाने प्रतीक्षावः, सुधन्वा प्रातः आगन्ता, समागतौ वां पश्येयम् ।

**अर्थः**—केशिन्युक्तिं प्रकाशयति—**इहैवेति** । हे विरोचन=हे दैत्येन्द्र ! ।आवाम्=त्वमहञ्च, इह एव=अत्रैव, उपस्थाने=क्वचित्समीपस्थे स्थाने, प्रतिक्षावः=प्रतीक्षावहे, प्रतीक्षां कुर्वः, ईक्षतेः परस्मैपदप्रयोग आर्षः, सुधन्वा=सुधन्वनामा विप्रः, प्रातः=प्रभाते, आगन्ता=आगमिष्यति, समागतौ=सममेव समुपस्थितौ, वां=युवां दैत्यब्राह्मणावित्यर्थः, पश्येयम्=अवलोकयेयम् , अहमिति शेषः ।

**भावार्थः**—सुधन्वन आगमनं प्रतीक्ष्य सह समागतौ वां द्रक्ष्यामि श्वः प्रभात इति केशिनीवचनाशयः ॥

**भाषा**—केशिनी बोली—हे विरोचन ! हम दोनों यहीं कहीं समीप के स्थान में सुधन्वा की प्रतीक्षा करें । सुधन्वा कल प्रातःकाल आनेवाला है । ( तभी ) मैं तुम दोनों को एक साथ उपस्थित देखना चाहती हूँ ॥ १० ॥

**विरोचन उवाच**—विरोचनः=दैत्येन्द्रः, उवाच=अब्रवीत् ।

**तथा भद्रे ! करिष्यामि यथा त्वं भीरु ! भाषसे ।**
**सुधन्वानं च मां चैव प्रातर्द्रष्टासि सङ्गतौ ॥ ११ ॥**

**अन्वयः**—हे भीरु ! यथा त्वं भाषसे, हे भद्रे ! तथा करिष्यामि । प्रातः सङ्गतौ सुधन्वानं मां च एव द्रष्टासि ।

**अर्थः**—विरोचनः प्रतिजानाति—**तथेति** । हे भीरु=हे भयशीले सुन्दरि ! यथा=यादृशं, त्वं=भवती, भाषसे=वदसि, हे भद्रे=हे कल्याणिनि ! तथा=तादृशं, करिष्यामि=विधास्यामि । त्वं प्रातः=उषसि, सङ्गतौ=मिलितौ सममेवोपस्थिताविति यावत्, सुधन्वानं=ब्राह्मणं, मां= दैत्येन्द्रं चैव, द्रष्टासि=द्रक्ष्यसि ।

**भावार्थः**—केशिन्युक्तिमङ्गीकृत्य प्रातः सुधन्वना सङ्गत्य तत्रोपस्थितिं स्वीचकार विरोचन इति ॥

**भाषा**—विरोचन बोला—हे भीरु ! जैसा तुम कहती हो, हे कल्याणि ! वैसा ही मैं करूँगा । तुम कल प्रातःकाल सुधन्वा को और मुझको ( दोनों को ) एक साथ देखोगी ॥११॥

**विदुर उवाच**—विदुरः=नीतिज्ञः, उवाच=कथयति स्म ।

**अतीतायां च शर्वर्यामुदिते सूर्यमण्डले ।**
**अथाजगाम तं देशं सुधन्वा राजसत्तम ! ।**
**विरोचनो यत्र विभो ! केशिन्या सहितः स्थितः ॥ १२ ॥**

**अन्वयः**—हे राजसत्तम ! अथ शर्वर्याम् अतीतायां सूर्यमण्डले उदिते च सुधन्वा तं देशम् आजगाम, हे विभो ! यत्र केशिन्या सहितः विरोचनः स्थितः ।

**अर्थः**—विरोचनकृतस्वागमनस्वीकारानन्तरं किमभूदिति कथासङ्गतिरिहोपदर्श्यते—**अतीतायामिति** । हे राजसत्तम=हे राजश्रेष्ठ ! अथ=केशिनीविरोचनयोर्भाषणोत्तरं, शर्वर्यां= रात्रौ 'अथ शर्वरी । निशा निशीथिनी रात्रि'रित्यमरः, अतीतायां=गतायां सत्यां, सूर्यमण्डले= आदित्यबिम्बे 'सूरसूर्यार्यमादित्ये'त्यमरः, उदिते=उदयं प्राप्ते च, सुधन्वा=विप्रः, तं=केशिन्या- ध्यधिष्ठितं, देशं=प्रदेशं स्थानमिति यावत्, आजगाम=प्राप, हे विभो ! यत्र=यस्मिन् प्रदेशे, केशिन्या सहितः=युक्तः, विरोचनः, स्थितः=वर्तमान आसीत् ।

**भावार्थः**—प्रभाते सुधन्वा तत्रोपस्थितोऽभूदिति ॥

**भाषा**—विदुर बोले—हे राजाओं में श्रेष्ठ ! रात के बीतने तथा सूर्य मण्डल के उदित होने पर सुधन्वा उस स्थान पर उपस्थित हुआ, जहां पर कि हे प्रभो ! विरोचन केशिनी के साथ ठहरा हुआ था ॥ १२ ॥

**सुधन्वा च समागच्छत्प्राह्लादिं केशिनीं तथा ।**
**समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ ! ।**
**प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ १३ ॥**

**अन्वयः**—सुधन्वा प्राह्लादिं तथा केशिनीं च समागच्छत् । हे भरतर्षभ ! केशिनी द्विजं समागतं दृष्ट्वा पुनः प्रत्युत्थाय तस्मै आसनं पाद्यम् अर्घ्यं ( च ) ददौ ।

**अर्थः**—सुधन्वनः समागतौ केशिनीकृतमाचारं प्रकटयति—**सुधन्वेति** । सुधन्वा=विप्रः, प्राह्लादिं=प्रह्लादपुत्रं विरोचनं, तथा, केशिनीं=तन्नाम्नीं कन्यां च समागच्छत्=प्राप तयोः समीपमाययाविति यावत्, हे भरतर्षभ=हे भरतकुलश्रेष्ठ ! केशिनी, द्विजं=ब्राह्मणं सुधन्वानं, समागतं=प्राप्तं, दृष्ट्वा = अवलोक्य, पुनः=भूयः, प्रत्युत्थाय=आदरेणोत्थाय, तस्मै=सुधन्वने, आसनं=पीठं, पाद्यं=पादहितं प्रक्षालनार्थं जलम्, अर्घ्यम् अर्घाय=पूजाविधये 'मूल्ये पूजा-विधावर्घ' इत्यमरः, हितम् = उपकारि तत्, उभयत्रापि 'पादार्घाभ्यां चे'ति यत्प्रत्ययः, ददौ= प्रायच्छत् ।

**भावार्थः**—समुपस्थिताय सुधन्वनेऽभ्युत्थानासनपाद्यार्घ्यप्रदानं विधाय केशिनी स्वागतो-पचाररीतिं प्रादर्शयत् ॥

**भाषा**—सुधन्वा प्रह्लाद के पुत्र विरोचन तथा केशिनी के पास आया और हे भरतकुल-श्रेष्ठ ! उस ब्राह्मण को आया हुआ देखकर उसकी अगवानी करके केशिनी ने उसे आसन, पाद्य ( पांव धोने का जल ) तथा अर्घ्य ( पूजा का जल ) दिया ॥ १३ ॥

**सुधन्वोवाच**—सुधन्वा = अङ्गिरसः पुत्रो ब्राह्मणः, उवाच = बभाषे ।

**अन्वालभे हिरण्मयं प्राह्लादे ! ते वरासनम् ।**
**एकत्वमुपसम्पन्नो न त्वासेऽहं त्वया सह ॥ १४ ॥**

**अन्वयः**—हे प्राह्लादे ! हिरण्मयं ते वरासनम् अन्वालभे । एकत्वम् उपसम्पन्नः अहं त्वया सह तु न आसे ।

**अर्थः**—सुधन्वोक्तिं प्रदर्शयति—**अन्वालभ** इति । हे प्राह्लादे ! प्रह्लादस्यापत्यं पुमान् प्राह्लादिः 'अत इनिठनौ' इतीनिप्रत्ययः, तत्सम्बुद्धौ = हे प्रह्लादपुत्र विरोचन ! हिरण्मयं हिरण्यस्य विकारः हिरण्मयं = सुवर्णनिर्मितं, ते = तव, वरासनं वरं च तत् आसनं च वरासनं =श्रेष्ठमासनम्, अन्वालभे = स्पृशामि । एकत्वम् = अभिन्नत्वं त्वया सह साम्यमिति यावत्, उपसम्पन्नः=प्राप्तः, अहं, त्वया=भवता, सह=साकं तु 'साकं सत्रा समं सहे'त्यमरः, न आसे= नोपविशामि नैकस्मिन्नासने त्वया सह ममोपवेशनं समुचितमित्यर्थः ।

**भावार्थः**—हे विरोचन ! स्पर्शमात्रं त्वदासनस्य कुर्वे, सङ्गत्य च त्वयैकस्मिन्नेवासने नोपवेष्टुमिच्छामीति ॥

**भाषा**—सुधन्वा बोला—हे प्रह्लाद के पुत्र ( विरोचन ) ! मैं तुम्हारे सोने के बने हुए उत्तम आसन को छू लेता हूं, किन्तु एकत्र मिल कर तुम्हारे साथ बैठ नहीं सकता ॥ १४ ॥

**विरोचन उवाच**—विरोचनः=दैत्येन्द्रः, उवाच=अकथयत् ।

**तवाऽर्हते तु फलकं कूर्चं वाप्यथवा बृसी ।**
**सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ १५ ॥**

**अन्वयः**—हे सुधन्वन्! तव तु फलकम् अपिवा कूर्चम् अथवा बृसी अर्हते। त्वं मया सह समासनं (कर्तुं) न अर्हः असि।

**अर्थः**—एकासनोपवेशे सुधन्वना निषिद्धे क्रोधपरीतो दैत्येन्द्रो वक्ति—**तवेति**। हे सुधन्वन्! तव तु=भवतस्तु, फलकं=काष्ठपीठम्, अपिवा=अथवा, कूर्चं=कुशासनम्, अथवा=किंवा, बृसी व्रुवन्तोऽस्यां सीदन्तीति सा=वर्तितदर्भमयं व्रतयुक्तानामासनं 'व्रतिनामासनं बृसी' इत्यमरः, अर्हते=अर्हति योग्यमस्ति, आत्मनेपदमार्षम्, त्वं=भवान्, मया, सह=समं, समासनं=सम्यगुपवेशनं कर्तुं, न अर्हः असि=न योग्योऽसि।

**भावार्थः**—फलककूर्चबृसीरूपसाधारणासनयोग्यस्य ते न मया सह विशिष्टासनोपवेशन-योग्यतास्ति ब्रह्मन्निति॥

**भाषा**—विरोचन बोला—हे सुधन्वा! तुम्हारे योग्य तो काठ का पटरा, कूर्च (कुशासन) अथवा बृसी (मुनियों का आसन) है। तुम मेरे साथ एक आसन पर बैठने के योग्य नहीं हो॥ १५॥

**सुधन्वोवाच**—सुधन्वा=ब्राह्मणः, उवाच=अकथयत्।

**पितापुत्रौ सहासीतां द्वौ विप्रौ क्षत्रियावपि।**
**वृद्धौ वैश्यौ च शूद्रौ च न त्वन्यावितरेतरम्॥ १६॥**

**अन्वयः**—पितापुत्रौ द्वौ विप्रौ क्षत्रियौ अपि वृद्धौ वैश्यौ शूद्रौ च सह आसीताम्। अन्यौ तु इतरेतरं न।

**अर्थः**—कयोः कयोः सहासनं भवतीति निरूपयति—**पितापुत्राविति**। पितापुत्रौ पिता च=जनकश्च 'तातस्तु जनकः पिते'त्यमरः, पुत्रश्च=सुतश्च 'आत्मजस्तनयः सूनु सुतः पुत्र' इत्यमरः, तौ 'आनङ् ऋतो द्वन्द्वे' इत्यानङ्, द्वौ=उभौ, विप्रौ=ब्राह्मणौ, क्षत्रियौ अपि=राजन्यावपि, वृद्धौ=स्थविरौ 'प्रवयाः स्थविरो वृद्ध' इत्यमरः, वैश्यौ=विशौ, 'वैश्या भूमिस्पृशो विश' इत्यमरः, शूद्रौ=वृषलौ 'शूद्राश्चावरवर्णाश्च वृषलाश्चे'त्यमरः, सह=सार्धम् एकासने सहैवेति यावत्, आसीताम्–आर्षोऽयं प्रयोगः, आसीयातामित्युचितम्=उपविशेतामित्यर्थः, अन्यौ=इतरौ तु कौचित्, इतरेतरं=परस्परं, न=न सहासीयाताम्।

**भावार्थः**—परस्परं सहासने समुपवेष्टुमधिकारिण एत एव नत्वन्ये, पितापुत्रौ द्वौ, ब्राह्मण-द्वयं, क्षत्रियद्वयं, वृद्धद्वयं, वैश्यद्वयं, शूद्रद्वयं चेति॥

**भाषा**—सुधन्वा बोला—पिता पुत्र, दो ब्राह्मण, दो क्षत्रिय, दो बूढ़े, दो वैश्य तथा दो शूद्र एक साथ बैठ सकते हैं और दूसरे लोग एक दूसरे के साथ नहीं बैठ सकते॥ १६॥

**पिता हि ते समासीनमुपासीतैव मामधः।**
**बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे॥ १७॥**

**अन्वयः**—हि ते पिता समासीनं माम् अधः उपासीत एव, गेहे सुखैधितः बालः त्वं किञ्चन न बुध्यसे।

**अर्थः**—कयोः सहासनं भवतीति निरूप्य विशेषं दर्शयति—**पितेति** । हि=निश्चयेन 'हि हेतावधारणे' इत्यमरः, ते=तव, पिता = जनकः प्रह्लादः, समासीनम्=आसने समुपविष्टं, मां=मा, अधः=नीचैः, स्थित्वेति शेषः, उपासीतैव=सेवेतैव, गेहे = गृहे 'गृहं गेहोदवसित'मित्यमरः, सुखैधिनः सुखेन=सुखपूर्वं यथा स्यात्तथा, एधितः=वर्धितः, बालः=अल्पज्ञानोचितवयाः, त्वं= भवान्, किञ्चन=किमपि, न बुध्यसे=न जानासि ।

**भावार्थः**—ज्ञाता ते पिता न मया सहैकत्र स्थाने समुपविशेत्, किन्तु नीचैः स्थित्वैव मां सेवेत । त्वं तु पुनः सुखेन गृहे वर्धितो बालत्वान्नेदं सर्वं जानासीति ॥

**भाषा**—तुम्हारे पिता मुझसे नीचे बैठ कर मेरी सेवा किया करते थे । तुम बच्चे ( मूर्ख ) घर में सुखपूर्वक पाले पोसे गये हो, ( इसलिए ) कुछ समझते नहीं हो ॥ १७ ॥

**विरोचन उवाच**—विरोचनः=प्राह्लादिः, उवाच = बभाषे ।

**हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।**
**सुधन्वन्! विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ १८ ॥**

**अन्वयः**—हे सुधन्वन्! असुरेषु नः यत् वित्तं हिरण्यं गवाश्वं च ( वर्तते ), तेन विपणे, प्रश्नं पृच्छाव, ये विदुः ।

**अर्थः**—सुधन्वोक्तेरुत्तरं प्रदर्शयति—**हिरण्यमिति** । हे सुधन्वन्! असुरेषु = दैत्येषु, नः=अस्माकं, यत् वित्तं=द्रव्यं, हिरण्यं = हेम, 'हिरण्यं हेम हाटक'मित्यमरः,गवाश्वं गावश्च = धेनवश्च अश्वाश्च = वाजिनश्च तेषां समाहारः 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना'मित्येकवद्भावः, तच्च, वर्तते, तेन=वित्तादिना, विपणे = विशेषेण पणं करोमि, पणश्च ग्लहः 'पणोऽक्षेषु ग्लह' इत्यमरः, प्रश्नं = पृच्छां, 'प्रश्नोऽनुयोगः पृच्छा चे'त्यमरः, पृच्छाव=करवाव, तान् प्रतीत्याक्षिप्तं कर्म, पृच्छतेर्द्विकर्मकत्वात्, ये = मान्या ये जनाः, विदुः=जानन्ति ।

**भावार्थः**—सर्वमहं स्वीयं धनं पणीकरोमि तदभिज्ञान् पुरुषानिदं पृच्छावेति ॥

**भाषा**—विरोचन बोला—हे सुधन्वा! सोना, गाय और घोड़ा जो कुछ भी धन हम असुरों के पास है, उससे मैं बाजी लगाता हूँ । चलो, हम दोनों (उन लोगों से इसके विषय में) प्रश्न करें जो ( इस विषय को) जानते हैं ॥ १८ ॥

**सुधन्वोवाच**—सुधन्वा=अङ्गिरःपुत्रः, उवाच=कथयति स्म ।

**हिरण्यं च गवाश्वं च तवैवास्तु विरोचन! ।**
**प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ १९ ॥**

**अन्वयः**—हे विरोचन! हिरण्यं गवाश्वं च तव एव अस्तु, ये विदुः ( तान्प्रति ) प्राणयोः पणं कृत्वा तु प्रश्नं पृच्छाव ।

**अर्थः**—सुधन्वा पणविषये स्वमतं विशदीकरोति—**हिरण्यं चेति** । हे विरोचन=हे दैत्येन्द्र! हिरण्यं=सुवर्णं द्रविणं वा 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्', 'हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपी'त्यमरौ, गवाश्वं च = धेनुतुरङ्गं च, तव एव=भवत एव, अस्तु=भवतु, ये=

मान्याः पुरुषाः, विदुः=जानन्ति, तान्प्रति, प्राणयोः=असवोः, यद्यपि प्राणशब्दस्य 'पुंसि भूम्न्यसवः प्राणा' इत्यमरप्रामाण्याद् बहुत्वमुचितं, तथापि द्वयोरेतयोः प्रत्येकाभिप्रायेण तथा-प्रयोगः, पणं=भाषाबन्धग्राह्यवस्तु, कृत्वा तु=विधाय तु, प्रश्नं=पृच्छां, पृच्छाव=करवाव।

**भावार्थः**—गवाश्वादिकं सर्वं त्वद्वस्तु त्वदधीनमेवास्तु। यद्यस्मिन् विषये पणं कृत्वा प्रष्टुकामोऽसि, तर्हि प्राणपणेनैव प्रश्नः समुचित इति॥

**भाषा**—सुधन्वा बोला—हे विरोचन! सोना, गाय तथा घोड़ा तुम्हारे पास रहें (इनकी कोई आवश्यकता नहीं)। हम दोनों अपने प्राणों की बाजी लगा कर (उन लोगों से) प्रश्न करें, जो इस विषय को जानते हैं॥ १९॥

**विरोचन उवाच**—विरोचनः=प्रह्लादसूनुः, उवाच=कथयामास।

**आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते।**
**न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित्॥ २०॥**

**अन्वयः**—आवां प्राणयोः विपणे कृते कुत्र गमिष्यावः? अहं तु कर्हिचित् न देवेषु स्थाता, न मनुष्येषु स्थाता।

**अर्थः**—विरोचनस्य सुधन्वानं प्रति परिप्रश्नः-**आवामिति**। आवां=त्वमहं च, प्राणयोः, विपणे=ग्लहे, कृते=विहिते सति, कुत्र=कस्मिन् स्थले कस्य समीपमिति यावत्, गमिष्यावः=यास्यावः, अहं तु, कर्हिचित्=कदाचिदपि, आर्षोऽयं प्रयोगः, न देवेषु=नामरेषु न देवानां मध्ये, स्थाता=स्थितो भविष्यामि, न=नव, मनुष्येषु=नृषु, स्थाता=स्थास्यामि।

**भावार्थः**—प्राणैः पणीकृत्य निर्णयार्थं क्वावाभ्यां गन्तव्यम्? यतो नाहं कदाचिदपि देवानां मनुष्याणां वा पुरस्तादुपस्थाय निर्णयार्थं कथयिष्य इति॥

**भाषा**—विरोचन बोला—प्राणों की बाजी लगाने पर हम दोनों कहां जायंगे? मैं देवताओं और मनुष्यों के बीच तो कभी खडा होऊंगा नहीं॥ २०॥

**सुधन्वोवाच**—सुधन्वा=ब्राह्मणः, उवाच=उक्तवान्।

**पितरं ते गमिष्यावः प्राणयोर्विपणे कृते।**
**पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत्॥ २१॥**

**अन्वयः**—प्राणयोः विपणे कृते (आवां) ते पितरं गमिष्यावः, हि सः प्रह्लादः पुत्रस्य हेतोः अपि अनृतं न वदेत्।

**अर्थः**—सुधन्वनो विरोचनं प्रत्युत्तरवाक्यम्—**पितरमिति**। प्राणयोः=असवोः, विपणे=विशिष्टे ग्लहे, कृते=विहिते सति, आवां, ते=तव, पितरं=जनकं, तस्य समीपमित्यर्थः, गमिष्यावः=उपस्थास्यावः, हि=यस्माद्धेतोः, सः=प्रसिद्धः, प्रह्लादः, पुत्रस्य=सूनोस्तव, हेतोरपि=कारणादपि 'हेतुर्ना कारणं बीज'मित्यमरः, अनृतम्=असत्यं, न वदेत्=न भाषेत।

**भावार्थः**—अस्मिन् प्राणपणे त्वत्पितुः समीपमेव गमनं वरं, यतो न पुत्रपक्षपातेनासत्यं स भाषेतेति॥

**भाषा**—सुधन्वा बोला—प्राणों की बाजी लगाने पर हम दोनों तुम्हारे पिता के पास चलेंगे, क्योंकि पुत्र के लिए वे प्रह्लाद झूठ नहीं बोल सकते ॥ २१ ॥

**विदुर उवाच**—विदुरः=नीतिज्ञः, उवाच=कथासङ्गतिं दर्शयन्नब्रवीत्।

**एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा।**
**विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ २२ ॥**

**अन्वयः**—तदा एवं कृतपणौ क्रुद्धौ विरोचनसुधन्वानौ तत्र अभिजग्मतुः, यत्र प्रह्लादः तिष्ठति।

**अर्थः**—पणे कृते तौ किमकुरुतामित्याह—**एवमिति**। तदा=तस्मिन् काले, एवं=पूर्वोक्तरीत्या, कृतपणौ कृतः=विहितः पणः=कलहः याभ्यां तौ, क्रुद्धौ=कुपितौ, विरोचनसुधन्वानौ=तदाख्यौ दैत्यब्राह्मणौ, तत्र=तस्मिन् प्रदेशे, अभिजग्मतुः=आययतुः, यत्र=यत्प्रदेशे, प्रह्लादः=विष्णुभक्तो दैत्येन्द्रः, तिष्ठति=निवसति स्म।

**भावार्थः**—पणोत्तरं तौ दैत्यब्राह्मणौ प्रह्लादमुपजग्मतुरिति ॥

**भाषा**—विदुर बोले—इस प्रकार क्रुद्ध होकर प्राणों की बाजी लगाए हुए वे दोनों विरोचन और सुधन्वा उस स्थान पर गये जहां प्रह्लाद रहते थे ॥ २२ ॥

**प्रह्लाद उवाच**—प्रह्लादः=कश्चिद् दैत्यः, उवाच=अकथयत्।

**इमौ तौ सम्प्रदृश्येते याभ्यां न चरितं सह।**
**आशीविषाविव क्रुद्धावेकमार्गाविहागतौ ॥ २३ ॥**

**अन्वयः**—आशीविषौ इव क्रुद्धौ एकमार्गौ इह आगतौ इमौ तौ सम्प्रदृश्येते, याभ्यां सह न चरितम्।

**अर्थः**—आगतौ तौ वीक्षमाणः प्रह्लादः स्वमनस्येवं चिन्तयति—**इमाविति**। आशीविषौ आशिषि=दंष्ट्रायां विषं=गरलं ययोः 'आशीरप्यहिदंष्ट्रिका, 'क्ष्वेडस्तु गरलं विषम्' इत्यमरौ, तौ आशीविषौ=व्यालौ सर्पावित्यर्थः, 'आशीविषो विषधरश्चक्री व्यालः सरीसृप' इत्यमरः, इव=यथा, क्रुद्धौ=कुपितौ, एकमार्गौ एकः=समानः मार्गः=पन्थाः 'अयनं वर्त्ममार्गाध्वपन्थान' इत्यमरः, ययोस्तौ, इह=अत्र प्रदेशे, आगतौ=प्राप्तौ, इमौ=एतौ, तौ=विरोचनसुधन्वानौ, सम्प्रदृश्येते=अवलोक्येते, याभ्याम्=उभाभ्यां, सह=सार्धं, न=नैव, चरितं=गमनं कृतम्।

**भावार्थः**—सर्वदाऽसहचारिणावेतौ कथं सहैवात्र समुपस्थिताविति ॥

**भाषा**—प्रह्लाद बोले—सर्प की भाँति क्रुद्ध, एक रास्ता पकड़े यहाँ आये हुए ये दो (विरोचन और सुधन्वा) दिखाई दे रहे हैं, जो कभी एक साथ नहीं चलते थे ॥ २३ ॥

**किं वै सहैवं चरथो न पुरा चरथः सह।**
**विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना ॥ २४ ॥**

**अन्वयः**—हे विरोचन! एतत् पृच्छामि—एवं सह किं चरथः? पुरा सह न चरथः। किं ते सुधन्वना सख्यम् (सञ्जातम्)?

**अर्थः**—प्रह्लादस्य पुत्रं प्रति प्रश्नवाक्यम्—**किं वै इति**। हे विरोचन!=पुत्र! एतत्=

इदं, पृच्छामि-एवम्=एनेन विधिना, सह=सार्धं, किं=कस्मात्कारणात् , चरथः=गच्छथः, पुरा=पूर्वस्मिन् काले, सह = समं, न चरथः=न गच्छथः। किं, ते=तव, सुधन्वना = तदाख्येनामुना विप्रेण, सहेति शेषः, सख्यं मैत्री, सञ्जातम् = अभूत्।

**भावार्थः**—कदापि सहगमनं पुरा नाद्यैव दृष्टं युवयोः, तर्हि किं ते तेन सख्यमभूदिति॥

**भाषा**—तुम दोनों पहले साथ साथ नहीं रहते थे, फिर ( इस समय ) इसप्रकार कैसे साथ हो रहे हो। हे विरोचन! मैं (तुमसे) यह पूछता हूँ कि क्या तुम्हारी सुधन्वा से मित्रता हो गई है॥ २४॥

**विरोचन उवाच**—विरोचनः=पूर्वोक्तो दैत्यराट्, उवाच=पितरमुत्तरयामास।

**न मे सुधन्वना सख्यं प्राणयोर्विपणावहे।**
**प्रह्लाद! तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः॥ २५॥**

**अन्वयः**—हे प्रह्लाद! सुधन्वना मे सख्यं न, प्राणयोः विपणावहे, तत्त्वं पृच्छामि, प्रश्नम् अनृतं मा वदेः।

**अर्थः**—उत्तरयति विरोचनः-**नेति**। हे प्रह्लाद=हे तात! सुधन्वना=अनेन विप्रेण सह, मे=मम, सख्यं=मैत्री, न=नास्ति, प्राणयोः=असवोः, विपणावहे=परस्परं ग्लहं कुर्वहे, आवामित्यध्याहारः, तत्त्वं=यथार्थं, त्वामित्याक्षेप्यम्, पृच्छामि=प्रश्नं करोमि, प्रश्नं=मद्विहितस्य प्रश्नस्योत्तरम्, अनृतम् = असत्यं, मा वदेः=न कथय।

**भावार्थः**—नावयोः परस्परं सख्यमपितु प्राणपणः, तद्विषये भवत्प्रकल्पितसत्योत्तरस्यावश्यकता॥

**भाषा**—विरोचन बोला—हे पिता ( प्रह्लाद )! सुधन्वा से मेरी मित्रता नहीं है। हम दोनों ने प्राणों की बाजी लगाई है। मैं आपसे तत्त्व की बात पूछता हूँ, मेरे प्रश्न का झूठा उत्तर न देना॥ २५॥

**प्रह्लाद उवाच**—प्रह्लादः=तत्पिता, उवाच = अब्रवीत्।

**उदकं मधुपर्कं वाप्यानयन्तु सुधन्वने।**
**ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता॥ २६॥**

**अन्वयः**—( सेवकाः ) सुधन्वने उदकं मधुपर्कं वापि आनयन्तु, ब्रह्मन्! अभ्यर्चनीयः असि, श्वेता गौः पीवरीकृता।

**अर्थः**—ततः प्रह्लादस्य चेष्टितं भाषितं च दर्शयति-**उदकमिति**। सेवका इत्यत्र कर्ताऽर्थादाक्षेप्यः, सुधन्वने = ब्राह्मणाय, उदकं=जलं, मधुपर्कं वापि=आगतायातिथये दीयमानं दधिमधुमयमुपहारं वापि, आनयन्तु=आहरन्तु, हे ब्रह्मन्=हे ब्राह्मण! अभ्यर्चनीयः असि = गार्हस्थ्यधर्मानुसारं पूजनीयोऽसि त्वम्, श्वेता=धवलवर्णा, गौः=धेनुः, पीवरीकृता=पोषिता मधुपर्कार्थमुपकल्पितास्तीति यावत्।

**भावार्थः**-सुधन्वनः कृते जलमधुपर्काद्यानयनं सेवकानादिश्य प्रह्लादो मधुपर्कनिमित्तं कृतपूर्वं श्वेतगोपुष्टीकरणं समसूचयत् ॥

**भाषा**—प्रह्लाद बोले—सुधन्वा के लिए सेवक लोग जल और मधुपर्क लावें। हे ब्राह्मण (सुधन्वा)! आप पूजनीय हैं। (आपके लिए) सफेद गाय मोटी की गई है। अर्थात् मधुपर्क के लिए उपस्थित है ॥ २६ ॥

**सुधन्वोवाच**—सुधन्वा=ब्राह्मणः, उवाच = अकथयत्।

> **उदकं मधुपर्कं च पथिष्वेवार्पितं मम।**
> **प्रह्लाद! त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः।**
> **किं ब्राह्मणाः स्विच्छ्रेयांस उताहो स्विद्विरोचनः ॥ २७ ॥**

**अन्वयः**—हे प्रह्लाद! पथिषु एव उदकं मधुपर्कं च मम अर्पितम्, त्वं तु पृच्छतः मे प्रश्नं तथ्यं प्रब्रूहि–ब्राह्मणाः श्रेयांसः किंस्वित्, उताहो विरोचनः स्वित्?

**अर्थः**—सुधन्वा प्रश्ननिर्देशपूर्वकं सत्योत्तरप्रदानाय प्रह्लादं प्रार्थयते—**उदकमिति**। हे प्रह्लाद=हे दैत्यराज! पथिषु एव=मार्गेष्वेव, उदकं=पाद्यार्थमाचमनार्थं वा पाथः 'कबन्धमुदकं पाथ' इत्यमरः, मधुपर्कं च, क्लीबत्वमार्षम्, मम=मह्यम्, अर्पितं=समर्पितम्, त्वं तु=भवांस्तु, पृच्छतः=अनुयुञ्जानस्य, मे=मम, प्रश्नम्=अनुयोगं, तथ्यं=सत्यं, प्रब्रूहि=स्पष्टं कथय,–ब्राह्मणाः=विप्राः, श्रेयांसः=श्रेष्ठाः, किंस्वित्=किमु? उताहो=अथवा, विरोचनः, स्वित्=किम्? 'स्वित्प्रश्ने च वितर्के चे'त्यमरः।

**भावार्थः**—'जलं मधुपर्कश्च मार्ग एव लब्धौ मये'ति न पुनस्तयोरत्रावश्यकता। हे प्रह्लाद! भवता तु 'ब्राह्मणाः श्रेष्ठा उतासौ विरोचनः श्रेष्ठ' इत्येष मत्प्रश्नो यथार्थमुत्तरणीय इदानीमिति ॥

**भाषा**—सुधन्वा बोला! हे प्रह्लाद! जल और मधुपर्क तो मुझे रास्ते में ही दिया गया है। मैं (आपसे) प्रश्न पूछ रहा हूँ, आप उसका यथार्थ उत्तर दीजिए। क्या ब्राह्मण श्रेष्ठ है अथवा (दैत्य) विरोचन?' ॥ २७ ॥

**प्रह्लाद उवाच**—प्रह्लादः=विरोचनपिता, उवाच=ऊचे।

> **पुत्र एको मम ब्रह्मंस्त्वं च साक्षादिहास्थितः।**
> **तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ २८ ॥**

**अन्वयः**—हे ब्रह्मन्! मम एकः पुत्रः, त्वं च साक्षात् इह आस्थितः, अस्मद्विधः विवदतोः तयोः प्रश्नं कथं वदेत्?।

**अर्थः**—उत्तरणे प्रातिकूल्यं दर्शयन्नाह प्रह्लादः—**पुत्र इति**। हे ब्रह्मन्!=हे सुधन्वन्! मम=मे, एकः=एककः, पुत्रः=सुतः, अस्तीति शेषः, त्वं च=भवांश्च, साक्षात्=प्रत्यक्षं 'साक्षात् प्रत्यक्षतुल्ययो'रित्यमरः, इह=मम गृहे, पुरो वा, आस्थितः=उपस्थितोऽसि, अस्मद्विधः=अस्मादृशः, विवदतोः=विवदमानयोः परस्परं वाक्कलहं कुर्वतोः, विवदतोरित्यत्र परस्मैपदमार्षम्,

तयोः = एकाकिपुत्रसाक्षादुपस्थितविप्रयोः, प्रश्नं = पृच्छां, कथं = केन प्रकारेण, वदेत् = कथयेत् उत्तरयेदित्यर्थः ।

**भावार्थः**—साक्षादुपस्थितयोर्युवयोः पुरस्तादेकपुत्रेण मयोत्तरं वक्तुमशक्यमिवेति ॥

**भाषा**—प्रह्लाद बोले—हे ब्राह्मण ! मेरे एक ही लड़का है और यहाँ साक्षात् (ब्राह्मण) आप उपस्थित हैं । ऐसे दो के विवाद करते समय मुझ जैसा मनुष्य किस प्रकार प्रश्न का उत्तर दे ? ॥ २८ ॥

**सुधन्वा उवाच**—सुधन्वा = ब्राह्मणः, उवाच=अभाषत ।

> **गां प्रदद्यास्त्वौरसाय यद्वान्यत्स्यात् प्रियं धनम् ।**
> **द्वयोर्विवदतोस्तथ्यं वाच्यं च मतिमंस्त्वया ॥ २९ ॥**

**अन्वयः**—( त्वम् ) औरसाय तु गां यद्वा अन्यत् प्रियं धनं स्यात् , ( तत् ) प्रदद्याः, हे मतिमन् ! त्वया विवदतोः द्वयोः तथ्यं च वाच्यम् ।

**अर्थः**—सत्योत्तरप्रदानाय सुधन्वाभ्यर्थयते—**गां प्रदद्या इति** । त्वम् , औरसाय=स्वपुत्राय तु, गां=पृथ्वीं, यद्वा, अन्यत्=इतरत् , प्रियम् = अभीष्टं, धनं=सम्पत्तिः, स्यात्=भवेत् , तत् सर्वमपि, प्रदद्याः = वितरेः, हे मतिमन् = हे बुद्धिमन् ! त्वया=भवता, विवदतोः = परस्परं कलहायमानयोः, परस्मैपदमार्षम् , द्वयोः=आवयोरुभयोः, तथ्यं च=सत्यमेव 'सत्यं तथ्यमृत'-मित्यमरः, वाच्यं=कथनीयम् ।

**भावार्थः**—विवदमानयोर्नौ प्रश्नस्य सत्यमुत्तरं मतिमता भवता प्रदेयमिति ॥

**भाषा**—सुधन्वा बोला—हे बुद्धिमान् ! आप अपने औरस पुत्रको पृथ्वी अथवा और कोई प्यारा धन दे दीजिए, किन्तु हम दोनों मे विवाद उपस्थित होने पर आपको असली बात कहनी चाहिए ॥ २९ ॥

**प्रह्लाद उवाच**—प्रह्लादः = दैत्यपतिः, उवाच=अब्रवीति स्म ।

> **अथ यो नैव प्रब्रूयात्सत्यं वा यदि वानृतम् ।**
> **एतत्सुधन्वन् ! पृच्छामि दुर्विवक्ता स्म किं वसेत् ॥ ३० ॥**

**अन्वयः**—अथ यः सत्यं वा अनृतं वा यदि न एव प्रब्रूयात् , ( सः ) दुर्विवक्ता किं वसेत् स्म ? हे सुधन्वन् ! एतत् पृच्छामि ।

**अर्थः**—अभाषणेऽन्यथाभाषणे वा वक्तुः किं भवेदिति प्रश्नयति—**अथेति** । अथेत्यत्र प्रश्ने 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'त्यमरः, यः = पुरुषः, सत्यं वा = तथ्यं वा, अनृतं वा = असत्यं वा, यदि=चेत् , नैव प्रब्रूयात्=न वस्तुतो वदेत् , सः, दुर्विवक्ता=दुर्भाषणकर्ता, किं वसेत्=किं दुःखं प्राप्नुयात् ? स्मेति पादपूरणे, 'तु हि च स्म ह वै पादपूरणे' इत्यमरः, हे सुधन्वन्=हेब्रह्मन् ! एतत्=इदं, पृच्छामि=प्रश्नं कृत्वा ज्ञातुमिच्छामि ।

**भावार्थः**—यो न सत्यं न चाऽसत्यं किमपि वदेत्, सोऽन्याय्यभाषी कीदृग्दुःखमवाप्नुयादिति ॥

**भाषा**—प्रह्लाद बोले—हे सुधन्वा ! मैं ( आपसे ) यह पूछता हूँ कि जो सच अथवा झूठ कुछ नहीं कहता, वह अन्याययुक्त बात कहनेवाला पुरुष कैसे रहता है अर्थात् क्या दुःख पाता है ? ॥ ३० ॥

**सुधन्वा उवाच**—सुधन्वा=विप्रः, उवाच=आह स्म ।

**यां रात्रिमधिविन्ना स्त्री यां चैवाऽक्षपराजितः ।**
**यां च भाराभितप्ताङ्गो दुर्विवक्ता स्म तां वसेत् ॥ ३१ ॥**

**अन्वयः**—अधिविन्ना स्त्री यां रात्रिं वसेत्, अक्षपराजितः च एव यां रात्रिं वसेत्, भाराभितप्ताङ्गः च यां रात्रिं वसेत्, दुर्विवक्ता ता स्म वसेत् ।

**अर्थः**—दुर्विवक्ता कीदृग्दुःखं लभेतेति प्रश्नमुत्तरयति—**यां रात्रिमिति** । अधिविन्ना=कृतसापत्निका दयितेनोढास्त्वनेकास्तु भार्यासु प्रथमोढेति यावत्, 'कृतसापत्निकाऽध्यूढाऽधिविन्ने'त्यमरः, स्त्री=योषित्, या रात्रिं=यां क्षपां 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपे'-त्यमरः, अत्यन्तसयोगे द्वितीया, यस्यां पूर्णायां निशीत्यर्थः, वसेत्=सपत्नीचिन्तासन्तानव्याकुला सती जागर्यात्, अक्षपराजितः अक्षेषु=पाशकेषु द्यूत इत्यर्थः, 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः, पराजितः=पराभूतः अक्षपराजितः=द्यूतेनापहृतसर्वस्वश्चैव, यां रात्रिं, वसेत्=भूयो-द्रव्यावाप्तिः कथं भवितेति प्रजागरपरायणो दुःखितस्तिष्ठेत्, भाराभितप्ताङ्गः भारेण=भरेण, अभितप्तानि=सन्तप्तानि अङ्गानि=अवयवाः यस्य 'अङ्गं प्रतीकोऽवयव' इत्यमरः, तादृशश्च, यां रात्रिं, वसेत्=अतिवाहयेत्, दुर्विवक्ता=असम्यग् दुष्टं च भाषिता, तां रात्रिं=तादृशीं दुःखमयीं यामिनीं, वसेत्=नयेत्, तादृशं क्लेशं स लभेतेति यावत्, स्मेति पादपूर्णे ।

**भावार्थः**—सपत्नीसम्बन्धदुःखिता स्त्रीव, द्यूतपराभूतो द्यूतकृदिव, कृतपूर्वभारोद्वहनपरिश्रान्तो निर्धनः पुरुष इव, दुरभिसन्धिपूर्णवाक्यप्रयोजकः पुरुषोऽतितरां दुःखभाक् स्यादिति ॥

**भाषा**—सुधन्वा बोला–सौतवाली स्त्री, जुए में हारा हुआ मनुष्य तथा बोझ से पीडित-शरीरवाला पुरुष ये लोग जिस रात को बिताते हैं अर्थात् रात में जैसा दुःख पाते हैं, वैसा दुःख अन्याययुक्त बात कहनेवाला पाता है ॥ ३१ ॥

**नगरे प्रतिरुद्धः सन् बहिर्द्वारे बुभुक्षितः ।**
**अमित्रान् भूयसः पश्येद्यः साक्ष्यमनृतं वदेत् ॥ ३२ ॥**

**अन्वयः**—यः अनृतं साक्ष्यं वदेत्, (सः) नगरे प्रतिरुद्धः बुभुक्षितः सन् बहिर्द्वारे भूयसः अमित्रान् पश्येत् ।

**अर्थः**—अनृतसाक्ष्यफलं दर्शयति—**नगर इति** । यः=पुरुषः, अनृतम्=असत्यं, साक्ष्यं=साक्षित्वं, वदेत्=कथयेत् प्रदर्शयेदिति यावत्, सः, नगरे=पुरे कारागारादौ च, प्रतिरुद्धः=संरुद्धः, बुभुक्षितः=क्षुधितः सन्, बहिर्द्वारे=तोरणे द्वारबहिर्भाग इत्यर्थः, 'तोरणोऽस्त्री बहिर्द्वार'मित्यमरः, भूयसः=अनेकान्, अमित्रान्=शत्रून्, पश्येत्=अवलोकयेत् ।

**भावार्थः**—असत्यसाक्षी नगरे रुद्धो बुभुक्षितश्च पुरुषः पुरः समुपस्थितानहितान् वीक्ष्येव दुःखभाक् स्यात् ॥

**भाषा**—नगर में घिरा हुआ, भूख से व्याकुल मनुष्य ( जिसप्रकार ) बाहर द्वार पर बहुत से शत्रुओं को देखता हो अर्थात् उन्हें देख कर दुःखी होता हो ( उसी प्रकार वह मनुष्य दुःखी होता है ) जो झूठी गवाही देता है ॥ ३२ ॥

**पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ३३ ॥**
**हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।**
**सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेः ॥ ३४ ॥**

**अन्वयः**—(पुरुषः) पश्वनृते पञ्च हन्ति, गवानृते दश हन्ति, अश्वानृते शतं हन्ति, पुरुषानृते च सहस्रं हन्ति । हिरण्यार्थे अनृतं वदन् ( नरः ) जातान् अजातान् च हन्ति, भूम्यनृते सर्वं हन्ति, ( तत् ) भूम्यनृतं मा स्म वदेः ।

**अर्थः**—असत्यसाक्ष्यप्रदर्शनेन किं भवतीति प्रदर्शयन्ननृतभाषी दोषी भवतीति तथा कर्तुं निषेधति—**पञ्चेति, हन्तीति च** । पुरुषः, पश्वनृते पश्वर्थम् अनृतं तस्मिन् पश्वनृते=पशुलाभोद्देनाशेऽसत्यभाषणे, पञ्च=पूर्वजान् पञ्च पुरुषान् , हन्ति=नाशयति स्वर्गात् पातयतीत्यर्थः, गवानृते=गोप्राप्तिनिमित्तानथ्यवचने, दश=दशसङ्ख्याकान् पूर्वपुरुषान् , हन्ति=परलोकात् पातयति, अश्वानृते=घोटकार्थे चासत्यवचने, शतं=पूर्वजान् शतं पुरुषान् , हन्ति=नाशयति, पुरुषानृते=यस्य कस्यचित् पुरुषस्य कृते असत्यभाषणे कृते, सहस्रं=पूर्वजान् सहस्रं मनुष्यान् , हन्ति=परलोकादधः पातयति । हिरण्यार्थे=सुवर्णार्थे, अनृतम्=असत्यं, वदन्=भाषमाणः, नरः, जातान्=उत्पन्नान् अवरपुरुषान् , अजातांश्च=अनुत्पन्नानपि, हन्ति=पातयति परलोकान्नाशयति, भूम्यनृते=भूम्यर्थमनृतभाषणे, सर्वं=सम्पूर्णं पूर्वापरान् परावरांश्च सकलान् जातानजातांश्चेति यावत् , हन्ति=नाशयति । तत् , भूम्यनृतं=भूमितुल्यायाः केशिन्याः कृतेऽसत्यं, मा स्म वदेः=न कथयेः ।

**भावार्थः**—असत्यभाषी पूर्वपुरुषान् स्वर्गलोकादधः पातयति । यतो हि पश्वादिभूम्यन्तसम्बन्धेनाप्यसत्यभाषणेन पूर्वोत्तरपुरुषाणामधःपातो भवति स्वर्गात्, ततस्त्वं भूमिसदृशकेशिनीकृतेऽसत्यमाश्रयन् सर्वं न नाशयेः ॥

**भाषा**—मनुष्य पशु के लिए झूठ बोलकर पाँच ( पुरुषों ) की हत्या करता है, गाय के लिए झूठ बोलकर दस की हत्या करता है, घोडे के लिए झूठ बोलकर सौकी हत्या करता है, पुरुष के लिए झूठ बोलकर हजार की हत्या करता है, सोने के लिए झूठ बोलकर पैदा हुए और न पैदा हुए जीवों की हत्या करता है और भूमि के लिए झूठ बोलकर सबकी हत्या कर डालता है, इसलिए भूमि (केशिनी) के लिए (कभी भी) झूठ नहीं बोलना चाहिए॥३३-३४॥

**प्रह्लाद उवाच**—प्रह्लादः=दैत्येन्द्रः, उवाच=श्रुत्वोत्तरमकथयत् ।

**मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ! ।**
**मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ।। ३५ ।।**

**अन्वयः**—हे विरोचन ! अङ्गिराः मत्तः वै श्रेयान्, सुधन्वा त्वत्, अस्य माता मातुः श्रेयसी, तस्मात् तेन त्वं वै जितः ।

**अर्थः**—प्रह्लादो निर्णयं कुर्वन्नाह—**मत्तः श्रेयानिति** । हे विरोचन=हे पुत्र ! अङ्गिराः= तन्नामा मुनिः सुधन्वनः पिता, मत्तः=मत्, वै=निश्चयेन, श्रेयान्=श्रेष्ठः 'श्रेयान् श्रेष्ठ' इत्यमरः, अस्तीति सर्वत्र शिष्यते, सुधन्वा=अयं ब्राह्मणः, त्वत्=त्वत्तः श्रेयानस्तीति, अस्य=सुधन्वनः, माता=जननी, मातुः=तव जनन्याः, श्रेयसी=श्रेष्ठा, तस्मात्=हेतोः, तेन=सुधन्वना, त्वं=भवान्, 'वै' इति निश्चये पादपूरणे वा, जितः=पराजितः ।

**भावार्थः**—यतोऽङ्गिरास्तत्पत्नी च मत्तस्त्वन्मातुश्च श्रेष्ठतामावहतस्तस्मात्त्वदपेक्षया सुधन्वा श्रेष्ठ इति तेन त्वं पराजितोऽसीति ॥

**भाषा**—प्रह्लाद बोले—मुझसे श्रेष्ठ अङ्गिरा ( सुधन्वा के पिता ) हैं और हे विरोचन ! तुमसे श्रेष्ठ सुधन्वा हैं । इनकी ( सुधन्वा की ) माता भी ( तुम्हारी ) माता से श्रेष्ठ है इसलिए तुम इनसे ( सुधन्वा से ) निःसन्देह हार गये ॥ ३५ ॥

**विरोचन ! सुधन्वायं प्राणानामीश्वरस्तव ।**
**सुधन्वन् ! पुनरिच्छामि त्वया दत्तं विरोचनम् ।। ३६ ।।**

**अन्वयः**—हे विरोचन ! अयं सुधन्वा तव प्राणानाम् ईश्वरः । हे सुधन्वन् ! त्वया पुनः दत्तं विरोचनम् इच्छामि ।

**अर्थः**—पद्यस्य पूर्वार्धेन विरोचनमुपदिश्योत्तरार्धेन सुधन्वानं प्रार्थयते—**विरोचनेति** । हे विरोचन=हे पुत्र ! अयम्=एषः, सुधन्वा=ब्राह्मणः, तव=ते, प्राणानाम्=असूनाम् 'पुंसि भूम्न्यसवः प्राणा' इत्यमरः, ईश्वरः=स्वामी विद्यते । हे सुधन्वन्=हे विप्र ! त्वया=भवता, पुनः=भूयः, दत्तं=वितीर्णं, विरोचनं=पुत्रम्, इच्छामि=अभिलषामि ।

**भावार्थः**—इदानीं विजयेन सुधन्वन् ! त्वं विरोचनप्राणानां पतिरसीति त्वया पुनरपि मह्यं दीयमानमिमं पुत्रमहमाकाङ्क्षामीति ॥

**भाषा**—हे विरोचन ! ये सुधन्वा तुम्हारे प्राणों के मालिक हैं और हे सुधन्वा ! मैं यह चाहता हूँ कि आप विरोचन को ( मुझे ) दे दें ॥ ३६ ॥

**सुधन्वा उवाच**—सुधन्वा=श्रुतप्रह्लादवचनोऽङ्गिरःसूनुः, उवाच=अभाषत ।

**यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः ।**
**पुनर्ददामि ते पुत्रं तस्मात्प्रह्लाद ! दुर्लभम् ।। ३७ ।।**

**अन्वयः**—हे प्रह्लाद ! त्वं यत् धर्मम् अवृणीथाः, कामात् अनृतं न वदीः, तस्मात् दुर्लभं पुत्रं ते पुनः ददामि ।

**अर्थः**—प्रह्लादस्य न्याय्यं वचः श्रुत्वा तुष्यन् सुधन्वा ब्रवीति—**यद्धर्ममिति** । हे प्रह्लाद ! त्वं = भवान् , यत् = यस्मात्कारणात् , धर्मं = सदाचारम् , अवृणीथाः = वृतवान् , कामात्= अभिलाषात् 'कामोऽभिलाष' इत्यमरः, अनृतम् = असत्यं, न वदीः = नाऽवादीः न भाषितवानित्यर्थः, 'वदी'रित्यत्राऽडभाववृद्ध्यभावावार्षौ, तस्मात्=तत्कारणात् , दुर्लभं=दुष्प्रापं त्वयेति शेषः, पुत्रं = सुतं विरोचनं, ते=तुभ्यं, पुनः=भूयः, ददामि=प्रयच्छामि समर्पयामीत्यर्थः ।

**भावार्थः**—काममपहायैव धर्मानुकूलं न्यायमनुसरते ते पुत्रस्य पुनःप्रत्यर्पणं समन्तोषमङ्गीक्रियत इति ॥

**भाषा**—सुधन्वा बोला—हे प्रह्लाद ! आपने धर्म को अपनाया है तथा काम ( स्वार्थ ) के वश होकर झूठ नहीं कहा है, इसलिए मैं आपको फिर दुर्लभ पुत्र देता हूं ॥ ३७ ॥

**एष प्रह्लाद ! पुत्रस्ते मया दत्तो विरोचनः ।**
**पादप्रक्षालनं कुर्यात् कुमार्याः सन्निधौ मम ॥ ३८ ॥**

**अन्वयः**—हे प्रह्लाद ! एषः विरोचनः पुत्रः मया ते दत्तः, ( परन्तु एषः ) कुमार्याः सन्निधौ मम पादप्रक्षालनं कुर्यात् ।

**अर्थः**—अन्यदप्याह स एव—**एष इति** । हे प्रह्लाद ! एषः=अयं, विरोचनः = तन्नामा, पुत्रः=सुतः, मया, ते=तुभ्यं, दत्तः = प्रत्यर्पितः, परन्तु एषः, कुमार्याः=केशिन्याः, सन्निधौ= समीपे, मम=मे, पादप्रक्षालनं पादयोः=चरणयोः प्रक्षालनं=जलेन निर्मलीकरणं, कुर्यात्=विदध्यात्

**भावार्थः**—केशिन्याः पुरो मत्पादप्रक्षालनमेवास्य कर्तव्यमिदानीमवशिष्यत इति ॥

**भाषा**—हे प्रह्लाद ! मैंने आपको यह पुत्र विरोचन दे दिया, ( किन्तु यह ) 'केशिनी' कुमारी के निकट ( सामने ) मेरे चरणों को धोवे ॥ ३८ ॥

**विदुर उवाच**—विदुरः=धृतराष्ट्रसभासदस्यो नीतिवित् , उवाच=अवदत् ।

**तस्माद्राजेन्द्र ! भूम्यर्थं नानृतं वक्तुमर्हसि ।**
**मा गमः ससुतामात्यो नाशं पुत्रार्थमब्रुवन् ॥ ३९ ॥**

**अन्वयः**—हे राजेन्द्र ! तस्मात् भूम्यर्थे अनृतं वक्तुं न अर्हसि, पुत्रार्थम् अब्रुवन् ससुतामात्यः नाशं मा गमः ।

**अर्थः**—उक्तोदाहरणेनाऽसत्यान्निवर्तयन् धृतराष्ट्रमाह—**तस्मादिति** । हे राजेन्द्र = हे नृपश्रेष्ठ ! तस्मात्=तत्कारणात् , भूम्यर्थे=पृथिव्याः कृते, अनृतम्=असत्यं, वक्तुं = भाषितुं, न अर्हसि=न योग्योऽसि, पुत्रार्थं=सुतार्थं, सत्यमित्यध्याहार्यम्, अब्रुवन्=अभाषमाणः त्वं, ससुतामात्यः सुताश्च=पुत्राश्च अमात्याश्च=मन्त्रिणश्च तैः सह वर्तत इति तादृशः, नाशं=विनाशं, मा गमः = न गच्छेः, 'न माङ्योगे' इत्यडागमप्रतिषेधः ।

**भावार्थः**-पुत्रपक्षपातेन भूम्यर्थमसत्यं न स्पृशेः, अन्यथा मन्त्रिपुत्रसहितस्य ते नाशप्रसङ्गः॥

**भाषा**—विदुर बोले—इसलिए हे राजाओं में श्रेष्ठ ! पृथ्वी के विषय में आपको झूठ नहीं बोलना चाहिए। पुत्र के लिये ( सत्य ) न बोल कर पुत्रों तथा मन्त्रियों के साथ नाश को प्राप्त न होइये ॥ ३९ ॥

**न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।**
**यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् ॥ ४० ॥**

**अन्वयः**—देवाः पशुपालवत् दण्डम् आदाय न रक्षन्ति, तु यं रक्षितुम् इच्छन्ति; तं बुद्ध्या संविभजन्ति ।

**अर्थः**—भूम्यर्थासत्यभाषणान्निवारणोत्तरं नीत्यन्तरमुपदिशन्नाह—**न देवा इति** । देवाः=अमराः, पशुपालवत्=पशुरक्षका इव, दण्डं=लगुडम् , आदाय=गृहीत्वा, न रक्षन्ति=न पालयन्ति, तु=अपितु, यं=नरं, रक्षितुं=त्रातुं विपद उद्धर्तुमिति यावत् , इच्छन्ति=वाञ्छन्ति, तं=पुरुषं, बुद्धया=मत्या, संविभजन्ति=योजयन्ति ।

**भावार्थः**—रक्षणतत्परा देवाः पुरुषं बुद्ध्या योजयन्ति, न पशुपालवत् सदण्डास्तत्परा भवन्तीति ॥

**भाषा**—देवता लोग चरवाहे की तरह डण्डा लेकर ( किसीकी ) रक्षा नहीं करते (बल्कि) जिसकी रक्षा करना चाहते हैं उसे बुद्धि से युक्त कर देते हैं ॥ ४० ॥

**यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।**
**तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥ ४१ ॥**

**अन्वयः**—पुरुषः यथा यथा कल्याणे मनः कुरुते, तथा तथा अस्य सर्वार्थाः सिध्यन्ते, अत्र संशयः न ।

**अर्थः—यथेति** । पुरुषः=नरः, यथा यथा=येन येन प्रकारेण, कल्याणे=मङ्गलकार्ये 'कल्याणं मङ्गलं शुभम्' इत्यमरः, मनः=अन्तःकरणं, कुरुते=निवेशयति, तथा तथा=तेन तेन प्रकारेण, अस्य=पुरुषस्य, सर्वार्थाः=सकलप्रयोजनानि, सिध्यन्ते=सिध्यन्ति, आत्मनेपदमार्षम् , अत्र=अस्मिन् विषये, संशयः न=सन्देहो नास्ति ।

**भावार्थः**—कल्याणे मनोनिवेशनं सर्वार्थसाधकमिति ॥

**भाषा**—ज्यों ज्यों पुरुष कल्याण ( हित की बातों ) मे मन लगाता जाता है, त्यों त्यों उसके सभी अर्थ ( कार्य ) सिद्ध होते हैं, इसमें सन्देह नही ॥ ४१ ॥

**नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् ।**
**नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ४२ ॥**

**अन्वयः**—छन्दांसि मायया वर्तमानं मायाविनम् एनं वृजिनात् न तारयन्ति, जातपक्षाः शकुन्ता नीडम् इव छन्दांसि एनम् अन्तकाले प्रजहति ।

**अर्थः—नैनमिति** । छन्दांसि=वेदाः, मायया=मोहावरणेन, वर्तमानं=युक्तं, मायाविनं=कपटयुक्तम् 'अस्मायामेधास्रजो विनि'रिति विनिप्रत्ययः, एनं=पुरुषं, वृजिनात्=दुष्कृतात् पापादिति यावत् , 'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषम् । कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृत'मित्यमरः, न तारयन्ति=नोद्धरन्ति, जातपक्षाः जाताः=उत्पन्नाः पक्षाः=

पत्राणि येषां ते=संरूढपक्षाः, शकुन्ताः=पक्षिणः 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा' इत्यमरः, नीडम् इव=कुलायमिव 'कुलायो नीडमस्त्रियां'मित्यमरः, छन्दांसि=वेदाः, एनं=पुरुषम्, अन्तकाले=मरणसमये, प्रजहति=त्यजन्ति।

**भावार्थः**—वेदाः कपटिनं न पापादुद्धर्तुं प्रभवो भवन्ति, अपि तु मृत्यावासन्ने पक्षवन्तः पक्षिणो नीडमिव तमेव त्यजन्तीति॥

**भाषा**—कपट का व्यवहार करनेवाले कपटी पुरुष का वेद भी पाप (कष्ट) से उद्धार नहीं करते। ऐसे पुरुष को वेद अन्तकाल में इस प्रकार छोड़ देते हैं जिस प्रकार पंख आने पर चिड़ियाँ घोंसले को छोड़ देती हैं॥ ४२॥

**मद्यपानं कलहं पूगवैरं भार्यापत्योरन्तरं ज्ञातिभेदम्।**
**राजद्विष्टं स्त्रीपुंसयोर्विवादं वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः॥ ४३॥**

**अन्वयः**—(बुधाः) मद्यपानं, कलहं, पूगवैरं, भार्यापत्योः अन्तरं, ज्ञातिभेदं, राजद्विष्टं, स्त्रीपुंसयोः विवादं, यः च प्रदुष्टः पन्थाः, (तम्)—(एतानि) वर्ज्यानि आहुः।

**अर्थः**—वर्ज्याष्टकं परिगणयति—**मद्यपानमिति**। बुधाः, मद्यपानं=मदिरापानं, कलहं=विग्रहं 'कलहविग्रहा'वित्यमरः, पूगवैरं=सङ्घविद्वेषं 'पूगः क्रमुकवृन्दयोः, वैरं विरोधो विद्वेष' इत्यमरौ, भार्यापत्योः=स्त्रीपुरुषयोः, अन्तरं=वियोगं, ज्ञातिभेदं=बन्धुभेदं, राजद्विष्टं=राजद्वेषं, स्त्रीपुंसयोः=पतिपत्न्योः, विवादं=पारस्परिकं कलहं, यश्च, प्रदुष्टः=असन्, पन्थाः=मार्गः तम्, एतानि=परिगणितान्यष्टौ, वर्ज्यानि=हेयानि, आहुः=कथयन्ति।

**भावार्थः**—मद्यपानादीनामष्टानां सर्वथा वर्जनमेव श्रेयस्करं भवतीति॥

**भाषा**—शराब-पीना, झगड़ा, संघ से वैर, पति और पत्नी में वियोग, जाति के लोगों में फूट, राजा से द्रोह, स्त्री-पुरुष का आपस में झगड़ा और जो कि मार्ग दूषित है इन सबको (विद्वान् लोग) वर्जित (न करने लायक) कहते हैं॥ ४३॥

**सामुद्रिकं वणिजं चौरपूर्वं शलाकधूर्तं च चिकित्सकं च।**
**अरिं च मित्रं च कुशीलवं च नैतान् साक्ष्ये त्वधिकुर्वीत सप्त॥४४॥**

**अन्वयः**—(नरः) सामुद्रिकं, चौरपूर्वं वणिजं, शलाकधूर्तं, चिकित्सकम्, अरिं, मित्रं, कुशीलवं च एतान् सप्त तु साक्ष्ये न अधिकुर्वीत।

**अर्थः**—साक्ष्यानधिकारिणो दर्शयति—**सामुद्रिकमिति**। नरः, सामुद्रिकं=हस्तरेखादिपरीक्षकं गणकं, चौरपूर्वं=पूर्वं चौरं, वणिजं=सम्प्रति व्यापारिणम्, अथवा चौरपूर्वं वणिजं=न्यूनतुलामानोपलादिना व्यवहर्तारं, शलाकधूर्तम्=अक्षशलाकादिना विश्वस्तानां वञ्चकं, चिकित्सकं चिकित्सां करोतीति तं=वैद्यं 'चिकित्सा रुक्प्रतिक्रिये'त्यमरः, अरिं=शत्रुं, मित्रं=सुहृदं, कुशीलवं कुत्सितं=निन्दितं शीलं=वृत्तं वाति=अनुसरति तथाभूतं चारणं नटमिति यावत्, 'चारणास्तु कुशीलवा' इत्यमरः, एतान्=सामुद्रिकादीन्, सप्त तु=सप्तसङ्ख्याकान् पुरुषांस्तु, साक्ष्ये=साक्षित्वे, न अधिकुर्वीत=न सन्निवेशयेत्।

भावार्थः—सामुद्रिकादीन् सप्तविधान् पुरुषान् न कदाचित् साक्षिणः कुर्यादिति ॥

भाषा—समुद्रिक ( हस्तरेखा ) शास्त्र के जानकार, पहले के चोर बनिये, शलाका पासा से दूसरों को ठगनेवाले, वैद्य, शत्रु, मित्र तथा नट—इन सातों को गवाही का अधिकार नहीं देना चाहिये ॥ ४४ ॥

**मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः।**
**एतानि चत्वार्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि ॥ ४५ ॥**

अन्वयः—मानाग्निहोत्रम् उत मानमौनम्, मानेन अधीतम् उत मानयज्ञः—एतानि चत्वारि अभयङ्कराणि ( भवन्ति ), अयथाकृतानि ( पुनः ) भयं प्रयच्छन्ति।

अर्थः—अभयप्रदान्यपि कार्याणि कदाचिद् भयप्रदानि भवन्तीति दर्शयति—**मानाग्नि-होत्रमिति**। पूर्वोत्तरार्धाभ्यां वैपरीत्येन पठितं प्रथमाध्याये व्याख्यातं पद्यमिदं प्रसङ्गेन समागतं पुनरपि व्याख्यायतेऽत्र। मानाग्निहोत्रं मानाय = लोके समुत्कर्षलाभार्थम् अग्निहोत्रम् = अग्नेर्होमकरणम्, उत = अथवा, मानमौनं मानार्थं = सम्मानावाप्त्यै मौनं = तूष्णीकत्वम्, मानेन = सत्कारेण सत्कारपूर्वं सम्मानप्राप्त्यर्थं वा, अधीतम् = अध्ययनम्, उत = उताहो, मानयज्ञः मानार्थं=प्रतिष्ठालब्ध्यै यज्ञः=यागः 'यज्ञः सवोऽध्वरो यागः' इत्यमरः, एतानि=इमानि, चत्वारि, अभयङ्कराणि = भयानुत्पादकानि भवन्ति, अयथाकृतानि = विपरीतं यथा स्यात्तथाचरितानि सन्ति, भयं = भीतिं 'भीतिर्भीः साध्वसं भयं'मित्यमरः, प्रयच्छन्ति = ददति।

भावार्थः—सादरमाचरितानि चत्वार्यग्निहोत्रादीनि भयनाशकराणि भवन्ति, परन्तु तान्येव विपरीतमाचरितानि भयमेवोत्पादयन्तीति ॥

भाषा—आदर ( श्रद्धा ) पूर्वक अग्निहोत्र करना, आदर अथवा उचित मात्रा के साथ मौन धारण करना, ( गुरूपदेश में ) आदर रखते हुए पढ़ना तथा आदर ( श्रद्धा ) के साथ यज्ञ करना—ये चार काम भयङ्कर नहीं हैं, किन्तु ये ही ठीक तौर पर न किये जाने से भयङ्कर हो जाते हैं ॥ ४५ ॥

**अगारदाही गरदः कुण्डाशी सोमविक्रयी।**
**पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः ॥ ४६ ॥**
**भ्रूणहा गुरुतल्पी च यश्च स्यात् पानपो द्विजः।**
**अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ॥ ४७ ॥**
**स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि।**
**रक्षेत्युक्तश्च यो हिंस्यात् सर्वे ब्रह्महभिः समाः ॥ ४८ ॥**

अन्वयः—अगारदाही, गरदः, कुण्डाशी, सोमविक्रयी, पर्वकारः, सूची, मित्रध्रुक्, पारदारिकः, भ्रूणहा, गुरुतल्पी, यः द्विजः च पानपः स्यात्, अतितीक्ष्णः, काकः, नास्तिकः, वेदनिन्दकः स्रुवप्रग्रहणः, व्रात्यः, कीनाशः, आत्मवान् अपि, यः 'रक्ष' इति उक्तः च हिंस्यात्—( एते ) सर्वे ब्रह्महभिः समाः ( ज्ञेयाः )।

**अर्थः**—ब्रह्महत्याकारिभिस्तुल्यान् पुरुषान् विशेषकेनाह—**अगारदाहीति, भ्रूणहेति, स्रुवप्रग्रहण इति च**। अगारदाही अगारं=भवनं दहति=भस्मीकरोतीति तच्छीलः, गरदः गरं=विषं ददातीति तादृशः, कुण्डाशी कुण्डस्य जारजस्य सभर्तृकासुतस्य 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्यमरः, अश्नाति=अन्नमत्तीति कुण्डाशी, तथा च देवलः—"अमृते जारजः कुण्डो मृते भर्तरि गोलकः। यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते॥" इति, सोमविक्रयी=सोमरसविक्रयकर्ता, पर्वकारः=शस्त्रकारः, सूची=नक्षत्रसूचकः पिशुनो वा, मित्रध्रुक् मित्राय द्रुह्यतीति मित्रध्रुक्=मित्रद्रोही, पारदारिकः परेषाम्=अन्येषां दाराः=स्त्रियः परदारान्=परस्त्रीः गच्छति=प्रेम्णोपयाति स पारदारिकः='गच्छतौ परदारादिभ्य' इति ठक्, भ्रूणहा भ्रूणं=गर्भं 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः, हन्ति=नाशयतीति तथा, गुरुतल्पी गुरोः=पितुराचार्यस्य वा तल्पं=दाराः शय्या वा अस्यास्तीति 'तल्पं शय्याट्टदारेषु' इत्यमरः, गुरुतल्पी=गुरुतल्पगामी, यः द्विजः च=ब्राह्मणोऽपि, पानपः पानं=मदिरां पिबतीति 'आतोऽनुसर्गे क' इति कप्रत्ययः, स्यात्=भवेत्, अतितीक्ष्णः=क्रूरतमः, काकः कुत्सितं=निन्दितं यथा स्यात्तथा अकति=कुटिलं गच्छतीति तादृशः क्षतोद्वर्तनादिना काकवत् दुःखितोऽपि दुःखदायी, नास्तिकः=वेदाप्रामाण्यवादी परलोकास्तित्वानङ्गीकारी वा 'अस्ति नास्ति दिष्टं मति'रिति ठक्प्रत्ययः, वेदनिन्दकः=श्रुतिनिन्दाकारी, स्रुवप्रग्रहणः स्रुवेण=यज्ञीयपात्रविशेषेण प्रगृह्णातीति तथा=ग्रामपुरोहितः राजकीयवृत्तिबलेन सर्वेभ्योऽपि वणिग्भ्यः स्रुवद्वारा धान्यादिवस्तुग्रहीता वा, व्रात्यः=संस्कारहीनः पतित इति यावत्, 'व्रात्यः संस्कारहीनः स्या'दित्यमरः, कीनाशः=यमः तद्वत् क्रूर इत्यर्थः, कर्षकः क्षुद्रो वा 'कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु' इत्यमरः, आत्मवानपि=समर्थोऽपि, यः=यः पुरुषः, रक्ष=पालय, इति=एवम्, उक्तः=केनापि प्रार्थितश्च, हिंस्यात्=नाशयेत्, यः शरणागतहिंसक इति यावत्, एते, सर्वे=सकलाः, ब्रह्महभिः=ब्रह्महत्याकर्तृभिः पापिभिः, समाः=तुल्याः ज्ञेयाः।

**भावार्थः**—गृहदाहकादयः परिगणिताः सर्वे ब्रह्मघ्नसदृशा महापापिन एवेति॥

**भाषा**—मकान जलाने वाला, विष देने वाला, पति के रहते जार से उत्पन्न ( कुण्ड ) पुरुष का अन्न खाने वाला, सोमरस ( मदिरा ) बेचने वाला, हथियार बनाने वाला, नक्षत्र-सूचक अथवा चुगुलखोर, मित्र से द्रोह करने वाला, पराई स्त्री के पास जाने वाला, गर्भ की हत्या करने वाला, गुरु की स्त्री के पास जाने वाला, ब्राह्मण होते हुए भी शराब पीने वाला, अत्यन्त उग्र स्वभाव वाला, बुरे और टेढ़े रास्ते पर चलने वाला अथवा दुःखी को भी दुःख देने वाला, ईश्वर को न मानने वाला, वेद की निन्दा करने वाला, अधिकार के बल से अन्यायपूर्वक प्रजा से धान्य आदि लेने वाला, पतित ( संस्कार हीन ), यम के समान क्रूर अथवा क्षुद्र, समर्थ होते हुए भी शरणार्थी को मारने वाला—ये सब ब्रह्महत्या करने वालों के बराबर हैं॥ ४६-४८॥

**तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः।**
**शूरो भयेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रेष्वापत्सु सुहृदश्चारयश्च ॥४९॥**

**अन्वयः**—तृणोल्कया जातरूपं, वृत्तेन भद्रः, व्यवहारेण साधुः, भयेषु शूरः, अर्थकृच्छ्रेषु धीरः ज्ञायते । कृच्छ्रेषु सुहृदः, आपत्सु अरयः च ज्ञायन्ते ।

**अर्थः**—कदा च केषां वस्तुनो ज्ञानं भवतीत्याह—**तृणोल्कयेति** । तृणानाम्=अर्जुनानां 'शष्पं बालतृणं घासो यवसं तृणमर्जुन'मित्यमरः, उल्का=ज्वाला तया 'उल्का स्यान्निर्गतज्वाले'त्यमरः, जातरूपं=काञ्चनं 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः, ज्ञायते इति सर्वत्र सम्बध्यते, वृत्तेन=चरित्रेण 'वृत्तं पद्ये चरित्रे चे'त्यमरः, भद्रः=वृषः धर्म इति यावत्, 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृष' इति, 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष' इत्यमरौ, भद्रशब्देन वृषशब्दग्रहणं तेन च धर्म इत्यर्थस्य करणं प्रसङ्गानुरोधेन ज्ञेयम्, ज्ञायते=अवगम्यते, व्यवहारेण—आचरणेन, साधुः=सज्जनः, भयेषु=भीतिषु, शूरः=वीरः, 'शूरो वीरश्च विक्रान्त' इत्यमरः, अर्थकृच्छ्रेषु अर्थानां=समुपस्थितविषयाणां कृच्छ्राणि=तत्सम्बद्धानि कष्टानि तेषु, धीरः=मनीषी 'धीरो मनीषी ज्ञः प्राज्ञ' इत्यमरः, ज्ञायते=बुध्यते परीक्ष्यत इति यावत्, कृच्छ्रेषु=कष्टेषु 'स्यात् कष्टं कृच्छ्रमाभील'मित्यमरः, आपत्सु=विपत्तिषु 'विपत्त्यां विपदापदा'—वित्यमरः, सुहृदः=मित्राणि, अरयः च=शत्रवश्च, ज्ञायन्ते=वचनविपरिणामेन बहुत्वम्, अवगम्यन्ते परीक्ष्यन्त इति यावत्, जनैरिति शेषः ।

**भावार्थः**—यथा तृणोल्कादिभिर्जातरूपादीनां ज्ञानं जायते तथा कष्टापत्त्यादिना मित्रामित्रयोरपि परीक्षा भवतीति ॥

**भाषा**—तृण की ज्वाला ( अग्नि ) से सोना, आचार से धर्म, व्यवहार से सज्जन, भय उपस्थित होने पर वीर, कठिन बातों में धीर तथा कष्ट और आपत्तियों में मित्र और शत्रु जाने जाते हैं ॥ ४९ ॥

**जरा रूपं हरति हि धर्ममाशा मृत्युः प्राणान् धर्मचर्यामसूया ।**
**क्रोधः श्रियं शीलमनार्यसेवा ह्रियं कामः सर्वमेवाभिमानः ॥५०॥**

**अन्वयः**—जरा रूपम्, आशा धैर्यं, मृत्युः प्राणान्, असूया धर्मचर्यां, क्रोधः श्रियम्, अनार्यसेवा शीलं, कामः ह्रियम्, अभिमानः सर्वम् एव हन्ति ।

**अर्थः**—के कैर्नाश्यन्त इति प्रदर्शयति—**जरेति** । जरा=विस्रसा वार्धक्यमिति यावत्, 'विस्रसा जरे'त्यमरः, रूपं=स्वरूपम्, आशा=आयता तृष्णा 'आशा तृष्णापि चायता' इत्यमरः, धैर्यं=धीरतां, मृत्युः=मरणम् 'अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रिया'मित्यमरः, प्राणान्=असून्, असूया=गुणेषु दोषाविष्करणं, धर्मचर्या=धर्माचरणं, क्रोधः=कोपः, 'कोपः क्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रिया'विति कोषः, श्रियं=कान्तिं सम्पदं वा, अनार्यसेवा अनार्याणां=दुष्टानां सेवा=श्ववृत्तिः परचित्तानुवर्तनमिति यावत्, 'सेवा श्ववृत्ति'रित्यमरः, शीलं=सद्वृत्तं, कामः=स्मरः 'काम पञ्चशरः स्मर' इति कोषः, ह्रियं=लज्जाम्, अभिमानः=गर्वः 'गर्वोऽभिमानोऽहङ्कार' इत्यमरः, सर्वं=सकलमेव, हन्ति=नाशयति ।

**भावार्थः**—जरादिभी रूपादयो नाश्यन्ते, गर्वश्च सर्वं विनाशयतीति भावः ॥

**भाषा**—बुढ़ापा सौन्दर्य को, आशा ( इच्छायें ) धैर्य को, मृत्यु प्राण को, असूया ( गुणों में दोष ढूंढने का भाव ) धर्माचरण को, क्रोध कान्ति अथवा सम्पत्ति को, नीच की सेवा शील ( अच्छे स्वभाव ) को, काम ( भोग की इच्छा ) लज्जा को तथा अभिमान सब कुछ को नष्ट कर देता है ॥ ५० ॥

**श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात् सम्प्रवर्धते ।**
**दाक्ष्यात्तु कुरुते मूलं संयमात् प्रतितिष्ठति ॥ ५१ ॥**

**अन्वयः**—श्रीः मङ्गलात् प्रभवति, प्रागल्भ्यात् सम्प्रवर्धते, दाक्ष्यात् तु मूल कुरुते, संयमात् प्रतितिष्ठति ।

**अर्थः**—केन केन हेतुना श्रिय उत्पत्त्यादिस्थितयो भवन्तीति दर्शयति—**श्रीर्मङ्गलादिति ।** श्रीः = लक्ष्मीः, मङ्गलात् = कल्याणात् सत्कार्यकारणादिति यावत् , 'कल्याणं मङ्गलं शुभ'मित्यमरः, प्रभवति = उत्पद्यते, प्रागल्भ्यात्=बुद्धेः प्रौढत्वात् , सम्प्रवर्धते=समेधते, दाक्ष्यात्=चातुर्यात् 'दक्षेऽतिचतुरपेशलपटव' इत्यमरः, मूलं=मूलनिवासस्थानं, कुरुते = करोति आश्रयतीत्यर्थः, संयमात् = योगाङ्गात् संयामात् इन्द्रियनिग्रहादिति यावत् , 'यमः संयामसंयमौ' इत्यमरः, प्रतिनिष्ठति = पूर्णरूपेण स्थितिं लभते ।

**भावार्थः**—मङ्गलप्रागल्भ्यदाक्ष्यसंयमेभ्यः प्रभववर्धनमूलकरणप्रतिष्ठाः श्रियो भवन्तीति ॥

**भाषा**—लक्ष्मी मङ्गल ( अच्छे काम ) से उत्पन्न होती है, बुद्धि की प्रौढता से बढ़ती है, दक्षता ( चतुराई ) से जड़ पकड़ती है और संयम ( इन्द्रियनिग्रह ) से निश्चल हो जाती है ५१

**अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च ।**
**पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ ५२ ॥**

**अन्वयः** - प्रज्ञा कौल्यं दमः श्रुतं पराक्रमः अबहुभाषिता यथाशक्ति दानं कृतज्ञता च अष्टौ गुणाः पुरुषं दीपयन्ति ।

**अर्थः**—पुरुषस्वरूपशोभाकरान् गुणान् दर्शयति—**अष्टाविति ।** प्रज्ञा = मतिः, कौल्यं= सत्कुलीनत्वं, दमः=इन्द्रियदमनं, श्रुतं = शास्त्रश्रवणं, पराक्रमः = शौर्यम् , अबहुभाषिता=मितभाषित्वं, यथाशक्ति=शक्त्यनुकूलं, दानं=वितरणं, कृतज्ञता = उपकृतिज्ञत्वं च, अमी, अष्टौ= अष्टसङ्ख्याकाः, गुणाः = प्रज्ञादयः, पुरुषं=नरं, दीपयन्ति=प्रकाशयन्ति ।

**भावार्थः**—प्रज्ञादयो गुणाः पुरुषस्य शोभां वर्धयन्तीति तेऽवश्यं सङ्ग्राह्याः ॥

**भाषा**—बुद्धि, कुलीनता, इन्द्रियदमन, विद्या, पराक्रम, व्यर्थ का बहुत न बोलना, सामर्थ्य के अनुसार दान देना तथा उपकार को मानना-ये आठ गुण पुरुष को सुशोभित करते हैं॥५२॥

**एतान् गुणांस्तात ! महानुभावानेको गुणः संश्रयते प्रसह्य ।**
**राजा यदा सत्कुरुते मनुष्यं सर्वान् गुणानेष गुणो विभाति ॥५३॥**

**अन्वयः**—हे तात ! एकः गुणः महानुभावान् एतान् गुणान् प्रसह्य संश्रयते, राजा यदा मनुष्यं सत्कुरुते, ( तदा ) एषः गुणः सर्वान् गुणान् विभाति ।

अर्थः—राजकृतसत्कारगुणस्य सर्वातिशायित्वं दर्शयति—**एतानिति**। हे तात=हे माननीय! एकः=वक्ष्यमाणः, गुणः, महानुभावान्=प्रभावविशेषशालिनः, एतान् गुणान्=पूर्वोक्तान् प्रज्ञादीन् गुणान्, प्रसह्य=हठात् 'प्रसह्य तु हठार्थक'मित्यमरः, संश्रयते=आश्रयति, राजा=नृपः, यदा=यस्मिन् काले, मनुष्यं=पुरुषं, सत्कुरुते=सम्मानयति, तदेति शेषः, एषः=राजकृतसत्कारलक्षणः, गुणः, सर्वान्=समग्रान्, गुणान्=प्रज्ञादीन् दयादाक्षिण्यादींश्च, विभाति=शोभयति विभूषयतीति यावत्, विभातीत्यत्राऽन्तर्भावितो णिः, अथवा अतिक्रम्येत्यध्याहार्य शोभत इत्यर्थः कार्यः।

**भावार्थः**—राजकृतः पुरुषसत्कारः प्रज्ञादिसर्वगुणातिशायी भवतीति॥

**भाषा**—हे महाराज! इन बड़े ही प्रभावशाली गुणों में एक गुण हठात् आश्रय ले लेता है। राजा जब (किसी) मनुष्य का सत्कार करता है, तो केवल एक यहीं परसत्काररूपी गुण सभी गुणों को प्रकाशित कर देता है अथवा सभी गुणों से बढ़कर शोभित होता है॥५३॥

**अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि।**
**चत्वार्येषामन्ववेतानि सद्भिश्चत्वारि चैषामनुयान्ति सन्तः॥ ५४॥**

**अन्वयः**—हे नृप! मनुष्यलोके इमानि अष्टौ स्वर्गस्य निदर्शनानि। एषां चत्वारि सद्भिः अन्ववेतानि, सन्तः एषां चत्वारि अनुयान्ति।

अर्थः—**अष्टाविति**। हे नृप=हे राजन्! मनुष्यलोके=मर्त्यलोके, इमानि=वक्ष्यमाणानि, अष्टौ=अष्टसङ्ख्याकानि, स्वर्गस्य लोकस्य=स्वर्लोकस्य, निदर्शनानि=दृष्टान्ताः साधकानीति यावत्। एषाम्=एतेषां मध्ये, चत्वारि=आद्यानि चत्वारि, सद्भिः=सज्जनैः, अन्ववेतानि=नित्यसम्बद्धानि सन्ति, सन्तः=सत्पुरुषाः, एषाम्=एषु निर्धारणे षष्ठी, चत्वारि=अन्त्यानि तु, अनुयान्ति=अनुसरन्ति।

**भावार्थः**—अष्टौ कर्माणि भुवि स्वर्गसाधकानि सन्ति, तेषु चत्वारि तु स्वभावसिद्धान्येव सतां सन्ति, अपराण्यपि सद्भिरनुष्ठीयन्त इति॥

**भाषा**—हे राजन्! मनुष्यलोक में ये आठ (गुण) स्वर्ग के साधक हैं। इनमें से चार सज्जनों में नित्य वर्तमान रहते हैं और शेष चारों का अनुसरण सज्जन करते हैं॥ ५४॥

**यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः।**
**दमः सत्यमार्जवमानृशंस्यं चत्वार्येतान्यनुयान्ति सन्तः॥ ५५॥**

**अन्वयः**—सद्भिः यज्ञः दानम् अध्ययनं तपः—एतानि चत्वारि अन्ववेतानि, सन्तः दमः सत्यम् आर्जवम् आनृशंस्यम्—एतानि चत्वारि अनुयान्ति।

**अर्थः**—कानि तान्यष्टौ स्वर्गसाधनानीति दर्शयति—**यज्ञ इति**। सद्भिः=सत्पुरुषैः, यज्ञः=अध्वरः 'यज्ञः सवोऽध्वरो याग' इत्यमरः, दानं=धनादिवितरणं 'दानमुत्सर्जनविसर्जने। विश्राणनं वितरण'मित्यमरः, अध्ययनं=स्वाध्यायः, तपः=तपश्चरणम्—एतानि चत्वारि, अन्ववेतानि=नित्यं सम्बद्धानि, सन्तः=सत्पुरुषाः, दमः=इन्द्रियदमनं, सत्यं=सत्यव्रतानुष्ठानम्,

आर्जवं=सरलता, आनृशंस्यं=दयालुता, एतानि चत्वारि, अनुयान्ति=अनुगच्छन्ति ।

**भावार्थः**—यजनदानाध्ययनतपश्चरणानि स्वर्गप्राप्तिकराणि सद्भिर्नित्यमनुष्ठीयन्ते, दमसत्यार्जवानृशंस्यान्यपि तैराश्रियन्त इति ॥

**भाषा**—यज्ञ, दान, अध्ययन तथा तपस्या—ये चार गुण सज्जनों में नित्य वर्तमान रहते हैं और इन्द्रियदमन, सत्य बोलना, सरलता तथा दयालुता इन चार गुणों का सज्जन अनुसरण करते हैं ॥ ५५ ॥

**इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा ।**
**अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५६ ॥**

**अन्वयः**—इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा अलोभः—इति धर्मस्य अयम् अष्टविधः मार्गः स्मृतः ।

**अर्थः—इज्याध्ययनदानानीति** । इज्याध्ययनदानानि इज्या=यज्ञश्च, अध्ययनं च=श्रुत्याद्यभ्यासः, दानं च=धनवितरणं चेत्यमूनि, तपः=तपश्चरणं, सत्यं=सत्यपालनं, क्षमा=क्षान्तिः, घृणा=करुणा 'कारुण्यं करुणा घृणा' इत्यमरः, अलोभः=लोभाभावः सन्तोष इति यावत्, इति=एवं, धर्मस्य=वैदिकस्य विधेः, 'श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः' इत्यमरः, अयम्=एषः, अष्टविधः=अष्टप्रकारकः, मार्गः=पन्थाः, स्मृतः=उक्तः ।

**भावार्थः**—यज्ञाद्यनुष्ठानं धर्ममार्गः, सचाऽवश्यमनुसरणीयः ॥

**भाषा**—यज्ञ, वेदाध्ययन, दान, तपश्चर्या, सत्य, क्षमा, दया तथा लोभ का न होना ( सन्तोष )—यह आठप्रकार का धर्म का मार्ग कहा गया है ॥ ५६ ॥

**तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते ।**
**उत्तरश्च चतुर्वर्गो नाऽमहात्मसु तिष्ठति ॥ ५७ ॥**

**अन्वयः**—तत्र पूर्वचतुर्वर्गः दम्भार्थम् अपि सेव्यते, उत्तरः चतुर्वर्गः च अमहात्मसु न तिष्ठति ।

**अर्थः—तत्रेति** । तत्र=अष्टविधे धर्ममार्गे, पूर्वचतुर्वर्गः चतुर्णां वर्गः=समूहः चतुर्वर्गः पूर्वः=प्रथमश्चासौ चतुर्वर्गश्च, इज्याध्ययनदानतपांसीत्यर्थः, दम्भार्थम् अपि=परप्रतारणबुद्ध्या धर्माचरणायापि, सेव्यते=भज्यते क्रियत इति यावत्, दुर्जनैरिति शेषः, उत्तरः=अन्तिमः, चतुर्वर्गः=सत्यक्षमाघृणाऽलोभरूपश्च, अमहात्मसु=दुर्जनेषु, न तिष्ठति=न स्थिरो भवति ।

**भावार्थः**—असन्तोऽष्टविधे धर्ममार्गे पूर्वं चतुर्वर्गं परप्रतारणार्थमपि कर्तुं पारयन्ति, किन्तु नोत्तरं चतुर्वर्गम् ॥

**भाषा**—इनमें से पहले चारों का समुदाय तो पाखण्ड के लिए भी अपनाया जाता है किन्तु बादवाले चारों का समुदाय उनमें नहीं टिकता जो महात्मा नहीं हैं ॥ ५७ ॥

**न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम् ।**
**नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनाभ्युपेतम् ॥ ५८ ॥**

**अन्वयः—**सा सभा न: यत्र वृद्धाः न सन्ति, ते वृद्धाः न; ये धर्मं न वदन्ति, असौ धर्मः न; यत्र सत्यं न अस्ति, तत् सत्यं न; यत् छलेन अभ्युपेतम् ( अस्ति )।

**अर्थः—न सेति ।** सा सभा = परिषत् 'समज्या परिषद्गोष्ठी सभासमितिसंसदः' इत्यमरः, न, यत्र=सभायां, वृद्धाः=स्थविराः 'प्रवयाः स्थविरो वृद्ध' इति कोषः, न सन्ति = न वर्तन्ते, ते वृद्धाः न, ये = वृद्धाः, धर्मं = श्रेयः 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी' इत्यमरः, न वदन्ति=न भाषन्ते, असौ=एषः, धर्मः न, यत्र=धर्मे, सत्यं=तथ्यं न अस्ति=न विद्यते, तत् सत्यं न, यत्= सत्यं, छलेन=कपटेन, अभ्युपेतं=सहितम् , अस्ति ।

**भावार्थः—**सच्छलं सत्यं न वस्तुतः सत्यं, यत्र च सत्यं, नास्ति स धर्मोऽपि न, धर्महीनं भाषमाणा न वृद्धत्वे परिगणनार्हाः, तादृशवृद्धाभाववती च सभा न वस्तुतः सभापदवाच्येति निष्कपटसत्यमिश्रधर्मप्रवक्तृवृद्धसेव्यैव सभा सभेति ज्ञेयम् ॥

**भाषा—**वह सभा ही नहीं, जहाँ वृद्ध लोग न हों। वे वृद्ध ही नहीं, जो धर्म की बात नहीं कहते। वह धर्म ही नहीं, जिसमें सत्य नहीं है और वह सत्य ही नहीं, जो कपट से युक्त हो ॥ ५८ ॥

**सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।**
**शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः ॥ ५९ ॥**

**अन्वयः—**सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनं शौर्यं चित्रभाष्यं च इमे दश स्वर्गयोनयः ( सन्ति )।

**अर्थः—**स्वर्गसाधकान्याह—**सत्यमिति ।** सत्यं = सत्यभाषणं, रूपं = नम्रताप्रदर्शनं, श्रुतं=शास्त्रालोचनं, विद्या=तन्त्रमन्त्रादिरूपा, कौल्यं = सत्कुलीनता, शीलं=स्वभावः सद्वृत्तं वा 'शीलं स्वभावे सद्वृत्ते' इत्यमरः, बलं = शक्तिः परोपकारक्षमा, धनं=न्यायार्जितं द्रव्यं, शौर्यं=शूरत्वं, चित्रभाष्यं च चित्रं=विचित्रम् अलौकिकमित्यर्थः, भाष्यं च = उक्तिः चित्रभाष्यं =शास्त्रानुसारि सयुक्तिकं वचनमिति यावत् , इमे = एते, दश=दशसङ्ख्यया परिगणिताः सत्यादयः, स्वर्गयोनयः स्वर्गस्य योनयः=कारणानि स्वर्गप्रदाः सन्ति।

**भावार्थः—**सत्यादयो दश पदार्थाः स्वर्गप्राप्तिसाधका इति ॥

**भाषा—**सत्य, सुन्दर विनीत स्वरूप, अध्ययन, विद्या, कुलीनता, सदाचार, बल, धन, शूरता और अद्भुत वाणी बोलना—ये दस स्वर्ग के कारण हैं ॥ ५९ ॥

**पापं कुर्वन् पापकीर्तिः पापमेवाश्नुते फलम् ।**
**पुण्यं कुर्वन् पुण्यकीर्तिः पुण्यमत्यन्तमश्नुते ॥ ६० ॥**

**अन्वयः—**पापकीर्तिः पापं कुर्वन् पापम् एव फलम् अश्नुते, पुण्यकीर्तिः पुण्यं कुर्वन् अत्यन्तं पुण्यम् अश्नुते ।

**अर्थः—**पापपुण्यकृतौ पापपुण्यात्मकमेव फलं लभेते इति दर्शयति—**पापमिति ।** पापकीर्तिः=दुर्यशाः पुरुषः, पापम्=अघं, कुर्वन्=कुर्वाणः, पापम् एव=दुष्टमेव, फलम् , अश्नुते=

अश्नाति प्राप्नोतीत्यर्थः, पुण्यकीर्तिः=सुयशाः, पुण्यं=सुकृतं, कुर्वन्=विदधत् , अत्यन्तं=बहुलं, पुण्यं=श्रेयः, अश्नुते=विन्दति ।

**भावार्थः**—पापी दुष्टं, पुण्यवांश्च सद् फलमवाप्नोतीति ॥

**भाषा**—पाप करनेवाला मनुष्य पापकीर्ति ( बुरेनामवाला ) होकर बुरा फल ही पाता है और पुण्य करनेवाला मनुष्य पवित्रयशवाला होकर शाश्वत पुण्य का भागी होता है ॥ ६० ॥

**तस्मात् पापं न कुर्वीत पुरुषः संशितव्रतः ।**
**पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।**
**नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥ ६१ ॥**

**अन्वयः**—तस्मात् संशितव्रतः पुरुषः पापं न कुर्वीत, पुनः पुनः क्रियमाणं पापं प्रज्ञां नाशयति, नष्टप्रज्ञः नरः नित्यं पापम् एव आरभते ।

**अर्थः—तस्मादिति** । तस्मात=तत्कारणात् , संशितव्रतः संशितं=तीक्ष्णतमं व्रतं=नियमो यस्य सः, पुरुषः = नरः, पापं=दुष्कर्म, न कुर्वीत=न कुर्यात , पुनः पुनः=मुहुः 'मुहुः पुनः पुनः शश्व'दित्यमरः, क्रियमाणं=विधीयमानं, पापं=दुश्चरणं, प्रज्ञां =बुद्धिं, नाशयति=भ्रंशयति । नष्टप्रज्ञः नष्टा=कलुषिता प्रज्ञा=मतिर्यस्य तथाभूतः, नरः=पुरुषः, नित्यम्=सर्वदा, पापम् एव= दुष्कर्मैव, आरभते=प्रारम्भं करोति ।

**भावार्थः**—पापं न कर्तव्यं, यतस्तेन बुद्धिनाशः पुनः पापाचारोदयश्च भवत इति ॥

**भाषा**—इसलिए दृढव्रत होकर पुरुष को पाप नहीं करना चाहिए, ( क्योंकि ) बार बार किये जाने पर पाप बुद्धि को नष्ट कर देता है और नष्टबुद्धिवाला मनुष्य नित्य पापयुक्त कर्म ही करता है ॥ ६१ ॥

**पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।**
**वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥ ६२ ॥**

**अन्वयः**—पुनः पुनः क्रियमाणं पुण्यं प्रज्ञां वर्धयति, वृद्धप्रज्ञः नरः नित्यं पुण्यम् एव आरभते ।

**अर्थः—पुण्यमिति** । पुनः पुनः=भूयो भूयः, क्रियमाणम्=अनुष्ठीयमानं, पुण्यं=सुकृतं, प्रज्ञां=मतिं, वर्धयति=एधयति, वृद्धप्रज्ञः=उद्भूतसद्बुद्धिः, नरः=पुरुषः, नित्यम्=अनवरतम् , पुण्यम् एव=सत्कर्मैव, आरभते ।

**भावार्थः**—पुण्यानुष्ठानेन सद्बुद्धेरुदयात् पुनः पुण्योपचयाच्च तत्कर्तव्यतोचिता ॥

**भाषा**—बार बार किये जाने पर पुण्य बुद्धि को बढ़ाता है । उन्नतबुद्धिवाला पुरुष पुण्य-युक्त कर्म ही करता है ॥ ६२ ॥

**पुण्यं कुर्वन् पुण्यकीर्तिः पुण्यं स्थानं स्म गच्छति ।**
**तस्मात् पुण्यं निषेवेत पुरुषः सुसमाहितः ॥ ६३ ॥**

**अन्वयः**—पुण्यकीर्तिः पुण्यं कुर्वन् पुण्यं स्थानं गच्छति स्म, तस्मात् सुसमाहितः पुरुषः पुण्यं निषेवेत ।

**अर्थः—पुण्यमिति** । पुण्यकीर्तिः=सयशा नरः, पुण्यं=सुकृतं, कुर्वन् , पुण्यं स्थानं= स्वर्गं, गच्छति=याति, स्मेति पादपूरणे, तस्मात्=तद्धेतोः, सुसमाहितः=अतिसावधानः, पुरुषः, पुण्यं=धर्मं, निषेवेत=सेवेत कुर्यादित्यर्थः ।

**भावार्थः**—पुण्याचरणेन स्वर्गप्राप्तिर्भवत्यतः सावधानमनाः पुण्यं कुर्वीतेति ॥

**भाषा**—पुण्य करनेवाला मनुष्य पवित्रकीर्ति होकर पवित्र लोक ( स्वर्ग ) में जाता है, इसलिए सावधान होकर पुरुष को पुण्य कर्म करना चाहिए ॥ ६३ ॥

**असूयको दन्दशूको निष्ठुरो वरकृच्छठः ।**
**स कृच्छ्रं महदाप्नोति न चिरात् पापमाचरन् ॥ ६४ ॥**

**अन्वयः**—( यः ) असूयकः दन्दशूकः निष्ठुरः वैरकृत् शठः ( अस्ति ), सः पापम् आचरन् न चिरात् महत् कृच्छ्रम् आप्नोति ।

**अर्थः—असूयक इति** । यः, असूयकः=गुणेऽपि दोषाविष्कर्ता, दन्दशूकः=सर्प इव मर्मोपघातकतया क्रोधेन च क्रूराशयः, निष्ठुरः=कठोरवचनः, वैरकृत्=विरोधकर्ता, शठः=धूर्तश्च अस्ति, सः=स पुरुषः, पापम्=असत्कर्म, आचरन्=कुर्वन् , न चिरात्=शीघ्रं, महत्=अधिकं, कृच्छ्रं=कष्टं 'स्यात् कष्टं कृच्छ्रमाभील'मित्यमरः, आप्नोति = लभते ।

**भावार्थः**—असूयादिदोषयुक्तः पापमाचरन् द्रुतमेव महतीं विपदमवाप्नोतीति ॥

**भाषा**—गुणों में दोष को ढूंढनेवाला, सर्प के समान मर्म स्थान में चोट पहुँचानेवाला, निष्ठुर ( अप्रिय कठोर वचन बोलनेवाला ), अकारण वैर करनेवाला तथा धूर्त मनुष्य पाप करता हुआ शीघ्र ही भारी कष्ट में पड़ता है ॥ ६४ ॥

**अनसूयुः कृतप्रज्ञः शोभनान्याचरन् सदा ।**
**न कृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ६५ ॥**

**अन्वयः**—अनसूयुः कृतप्रज्ञः सदा शोभनानि आचरन् महत् कृच्छ्रं न आप्नोति, सर्वत्र विरोचते च ।

**अर्थः—अनसूयुरिति** । अनसूयुः = मृषोद्भावितनिन्दापराङ्मुखः, कृतप्रज्ञः = मतिमान् पुरुषः, सदा = सर्वदा, शोभनानि = सुन्दराणि कर्माणि, आचरन् = कुर्वन् सन् , महत्=अधिकं, कृच्छ्रं = कष्टं, न आप्नोति = न विन्दति । अथवा नकृच्छ्रं = सुखम् , आप्नोति; सर्वत्र = सर्वस्मिन् स्थाने, विरोचते च = विशेषेण दीप्यते च ।

**भावार्थः**—विवेकी सत्कर्माचरन् सर्वत्र विराजते न च कष्टं समासादयतीति ॥

**भाषा**—गुणों में दोष ढूंढ़ने की वृत्ति से रहित तथा बुद्धिमान् मनुष्य सदा शुभ कर्मों को करता हुआ कभी भारी कष्ट में नहीं पड़ता अर्थात् बहुत सुख पाता है और सब जगह सुशोभित होता है ॥ ६५ ॥

**प्रज्ञामेवावगमयति यः प्राज्ञेभ्यः स पण्डितः।**
**प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥ ६६ ॥**

**अन्वयः**—यः प्राज्ञेभ्यः प्रज्ञाम् एव अवगमयति, सः पण्डितः। हि प्राज्ञः धर्मार्थौ अवाप्य सुखम् एधितुं शक्नोति।

**अर्थः—प्रज्ञामिति।** यः=पुरुषः, प्राज्ञेभ्यः=बुद्धिमद्भ्यः तत्सकाशादित्यर्थः, प्रज्ञाम् एव=बुद्धिमेव, अवगमयति=अवगच्छति प्राप्नोतीति यावत्, स्वार्थिको णिच्, अथवा प्राज्ञेभ्यः =बुद्धिमतः द्वितीयार्थे चतुर्थी, प्रज्ञामेव=प्रकृष्टं ज्ञानमेव, अवगमयति=ज्ञापयति, सः, पण्डितः =सदसद्विवेकी, (ज्ञेयः)। हि=निश्चयेन, प्राज्ञः=विवेकी, धर्मार्थौ=सुकृतं द्रव्यं च, अवाप्य= लब्ध्वा, सुखं=शम्, एधितुं=वर्धयितुमित्यर्थः, शक्नोति=समर्थो भवति।

**भावार्थः**—विवेकी धर्मार्थप्राप्त्या सुखी भवतीति ॥

**भाषा**—जो पुरुष बुद्धिमानों से बुद्धि को प्राप्त करता है अथवा बुद्धिमानों को अपनी बुद्धि का परिचय देता है, वह पण्डित है। बुद्धिमान् पुरुष ही धर्म और अर्थ को प्राप्त करके सुख की वृद्धि कर सकता है॥ ६६ ॥

**दिवसेनैव तत् कुर्याद्येन रात्रौ सुखं वसेत्।**
**अष्टमासेन तत् कुर्याद्येन वर्षाः सुखं वसेत् ॥ ६७ ॥**

**अन्वयः**—(नरः) तत् दिवसेन एव कुर्यात्, येन रात्रौ सुखं वसेत्, तत् अष्टमासेन कुर्यात्, येन वर्षाः सुखं वसेत्।

**अर्थः—दिवसेनेति।** नरः, तत्=कर्म, दिवसेन एव=दिनेनैव दिन एवेति यावत्, कुर्यात्=कुर्वीत, येन=कर्मणा, रात्रौ=निशायां, 'निशा निशीथिनी रात्रि'रित्यमरः, सुखं= सुखपूर्वकं, वसेत्=निवसेत्, तत्=कर्म सङ्ग्रहादिकम्, अष्टमासेन=अष्टानां मासानां समाहारः अष्टमासं तेन=मार्गादिमासाष्टकेन, कुर्यात्=विदधीत, येन, वर्षाः=पूर्णे वर्षर्तौ, अत्यन्तसंयोगे द्वितीया, सुखम्=अक्लेशं यथा स्यात्तथा, वसेत्=तिष्ठेत्।

**भावार्थः**—नरोऽहनि तावत्कर्म समाचरेत्, येन रात्रौ सुखं लभेत, एवमेव मासाष्टकेनापि तावत् पर्याप्तं विदध्यात्, येन वर्षासु गृहे स्थित्वैव सुखेन कालं नेतुं शक्नुयात्॥

**भाषा**—(मनुष्य को) दिन में वही काम करना चाहिए, जिससे (वह) रात में सुख से रह सके तथा आठ महीनेमें वही करना चाहिए, जिससे बरसात भर सुखसे रह सके॥६७॥

**पूर्वे वयसि तत् कुर्याद्येन वृद्धः सुखं वसेत्।**
**यावज्जीवेन तत् कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ६८ ॥**

**अन्वयः**—पूर्वे वयसि तत् कुर्यात्, येन वृद्धः (सन्) सुखं वसेत्। यावज्जीवेन तत् कुर्यात्, येन प्रेत्य सुखं वसेत्।

**अर्थः—पूर्वे इति।** नरः, पूर्वे=आद्ये, वयसि=अवस्थायां तारुण्य इत्यर्थः, तत्=कर्म, कुर्यात्=आचरेत्, येन=कर्मणा कृतेन, वृद्धः सन्=स्थविरो भूत्वा, सुखं=सुखेन, वसेत्=

समयं यापयेत्, यावज्जीवेन = यावदायुः, तत्, कुर्यात् = विदध्यात्, येन = हेतुना, प्रेत्य = मरणोत्तरं स्वर्गादिकमासाद्य, सुखं = सुखेन, वसेत् = स्थातुं शक्नुयात्।

**भावार्थः**—वृद्धावस्थायां सुखेन स्थातुं तदुचितसम्पत्समृद्धये तारुण्य एव यत्नो विधेयः, प्रेत्य च सुखं लब्धुं यावज्जीवं यतनीयम्॥

**भाषा**—पहली अवस्था में पुरुष को वह काम करना चाहिए, जिससे वह बूढ़ा होने पर सुखपूर्वक रह सके और जीवन पर्यन्त वही काम करते रहना चाहिए, जिससे मरने पर वह ( स्वर्ग में ) सुख से रहे॥ ६८॥

**जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम्।**
**शूरं विजितसङ्ग्रामं गतपारं तपस्विनम्॥ ६९॥**

**अन्वयः**—( लोकाः ) जीर्णम् अन्नं, गतयौवनां भार्यां, विजितसङ्ग्रामं शूरं, गतपारं तपस्विनं च प्रशंसन्ति।

**अर्थः—जीर्णमिति**। लोकाः, जीर्णं = परिपाकं गतम्, अन्नं = भोज्यं, गतयौवनाम् = अतिक्रान्ततारुण्यां वार्धक्यमुपगतामिति यावत्, भार्यां = स्त्रियं, विजितसङ्ग्रामं विजितः = जितः सङ्ग्रामः = आहवः 'सङ्ग्रामाभ्यागमाहवा' इत्यमरः, येन तादृशं, शूरं = वीरं 'शूरो वीरश्च विक्रान्त' इत्यमरः, गतपारं = पारं गतं ज्ञाततत्त्वमिति यावत्, तपस्विनं = तापसं च, प्रशंसन्ति = स्तुवन्ति।

**भावार्थः**—अन्नभार्याशूरतापसाः परिपाकयौवनात्ययसङ्ग्रामविजयतत्त्वज्ञानैः प्रशस्यन्ते॥

**भाषा**—पचे हुए अन्न, जिसकी जवानी बीत चुकी ऐसी पत्नी ( स्त्री ), संग्राम को जीतने वाले वीर तथा तत्त्वज्ञानी तपस्वी की ( लोग ) प्रशंसा करते हैं॥ ६९॥

**धनेनाधमलब्धेन यच्छिद्रमपिधीयते।**
**असंवृतं तद्भवति ततोऽन्यदवदीर्यते॥ ७०॥**

**अन्वयः**—यत् छिद्रम् अधर्मलब्धेन धनेन अपिधीयते, तत् असंवृतं भवति; ततः अन्यत् ( च ) अवदीर्यते।

**अर्थः—धनेनेति**। यत्, छिद्रं = रन्ध्रं दोष इत्यर्थः, अधमलब्धेन = अन्यायप्राप्तेन, धनेन = द्रव्येण, अपिधीयते = तिरोधीयते आच्छाद्यत इति यावत्, तत् = छिद्रम्, असंवृतं = अन्ते प्रकाशितं, भवति, ततः = तस्मात्, अन्यत् = इतरच्च, छिद्रमित्यर्थः, अवदीर्यते = स्फुटीभवति।

**भावार्थः**—अन्याय्येन धनेनाच्छादितोऽपि दोषोऽन्ते प्रकाशितो भवति तथा तदितरोऽपि दोषः स्फुटीभवति॥

**भाषा**—अधर्म ( अन्याय ) के द्वारा प्राप्त किये गये धन से जो बुराई छिपाई जाती है, वह ( अन्त में ) खुल ही जाती है और (उसके खुलने से) दूसरी बुराई भी खुल जाती है॥७०

**गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम्।**
**अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः॥ ७१॥**

**अन्वयः**—आत्मवतां शास्ता गुरुः, दुरात्मनां शास्ता राजा भवति। अथ प्रच्छन्नपापानां शास्ता वैवस्वतः यमः ( अस्ति )।

**अर्थः—गुरुरिति**। आत्मवतां = जितेन्द्रियाणां विजितमनसां वा, शास्ता = शासनकर्ता समुचितमार्गप्रदर्शकः, गुरुः = आचार्यः, भवति, दुरात्मनां = दुर्जनानां, शास्ता = दण्डप्रदाता, राजा = नृपः, भवति। अथ = अपि च, प्रच्छन्नपापानां प्रच्छन्नानि = गूढानि पापानि = अघानि येषां तेषां शास्ता = शासकः, वैवस्वतः विवस्वतोऽपत्यं पुमान् वैवस्वतः = तन्नामा, यमः=शमनः 'शमनो यमराड् यमः' इत्यमरः, अस्ति।

**भावार्थः**—सज्जनदुर्जनगूढपापानां गुरुनृपयमाः शास्तारः सन्ति॥

**भाषा**—चित्त को वश में करनेवाले लोगों का शासन करनेवाला गुरु है, दुष्टों का शासन करने वाला राजा है और छिपकर पाप करने वालों का शासन करने वाला वैवस्वत ( सूर्यपुत्र ) यमराज है॥ ७१॥

**ऋषीणां च नदीनां च कुलानां च महात्मनाम्।**
**प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च॥ ७२॥**

**अन्वयः**—ऋषीणां नदीनां महात्मनां कुलानां स्त्रीणां दुश्चरितस्य च प्रभवः न अधिगन्तव्यः।

**अर्थः—ऋषीणामिति**। ऋषीणां=मुनीनां, नदीनां = सरितां, महात्मनां=साधूनां, कुलानां = वंशानां, स्त्रीणां = योषितां, दुश्चरितस्य च = दुराचरणस्यापि, प्रभवः=उत्पत्तिस्थानं जन्ममूलमिति यावत्, 'प्रभवो जन्ममूले स्या'दिति मेदिनी, सामर्थ्यं वा, न अधिगन्तव्यः अधिगन्तुं=ज्ञातुं, न शक्यः=न सम्भवनीयः अज्ञेय इति यावत्।

**भावार्थः**—ऋष्यादीनां जन्ममूलं सामर्थ्यं वा न केनापि ज्ञातुं शक्यमिति॥

**भाषा**—ऋषियों के, नदियों के और महात्माओं के वंशों का तथा स्त्रियों के दुष्ट आचरण का उत्पत्तिस्थान अथवा सामर्थ्य नहीं जाना जा सकता॥ ७२॥

**द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी।**
**क्षत्रियः शीलभाग् राजंश्चिरं पालयते महीम्॥ ७३॥**

**अन्वयः**—हे राजन्! द्विजातिपूजाभिरतः दाता ज्ञातिषु आर्जवी शीलभाक् क्षत्रियः महीं चिरं पालयते।

**अर्थः—द्विजातिपूजाभिरत इति**। द्विजातिपूजाभिरतः द्विजातेः=ब्राह्मणस्य पूजा= सपर्या तत्र अभिरतः=दत्तमनाः, दाता=दानी, ज्ञातिषु=बन्धुषु, आर्जवी=सरलः, शीलभाक्= सच्छीलः, क्षत्रियः = राजा, महीं=मेदिनीं 'क्ष्माऽवनिर्मेदिनी मही' त्यमरः, चिरं=चिराय, पालयते=रक्षति।

**भावार्थः**—ब्राह्मणसेवी दानी बन्धुषु सरलः सच्छीलश्च राजा चिराय महीं भुनक्ति॥

**भाषा**—हे राजन्! ब्राह्मणों की पूजा में तत्पर, दान देनेवाला, जाति के लोगों से सरलता

का बर्ताव करनेवाला तथा सदाचारवाला क्षत्रिय ( राजा ) बहुत दिनों तक पृथ्वी का पालन करता है ॥ ७३ ॥

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ७४ ॥**

**अन्वयः—**शूरः कृतविद्यः यः सेवितुं जानाति च-( एते ) त्रयः पुरुषाः सुवर्णपुष्पां पृथिवीं चिन्वन्ति ।

**अर्थः—सुवर्णपुष्पामिति ।** शूरः=वीरः, कृतविद्यः कृता विद्या येन सः कृतविद्यः=विद्वान्, यः, सेवितुं=सेवां कर्तुं, जानाति=वेत्ति, च-एते, त्रयः=त्रिविधाः, पुरुषाः=नराः, सुवर्णपुष्पां सुवर्ण=स्वर्णमेव पुष्पं=कुसुमं यस्याः तां, पृथिवीं=पृथ्वीं 'गोत्रा कुः पृथिवी पृथ्वी'त्यमरः, तस्याः पृथिव्याः सकाशादित्यर्थः, 'अकथितं चे'त्यनेन कर्मसंज्ञा, चिन्वन्ति=सुवर्णरूपं पुष्पं सङ्गृह्णन्ति ।

**भावार्थः—**शूरादयस्त्रयः पृथिव्याः सारभूतं सुवर्णमाददते ॥

**भाषा—**वीर, विद्वान् और सेवा करने की कला जाननेवाला-ये तीन ( प्रकार के ) पुरुष सोने के फूलों वाली पृथ्वी से ( सोनारूपी फूल ) चुनते हैं ॥ ७४ ॥

**बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ! ।**
**तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ ७५ ॥**

**अन्वयः—**हे भारत ! कर्माणि बुद्धिश्रेष्ठानि बाहुमध्यानि ( भवन्ति ), तानि जङ्घा-जघन्यानि भारप्रत्यवराणि च ( भवन्ति ) ।

**अर्थः—बुद्धिश्रेष्ठानीति ।** हे भारत=हे भरतकुलोत्पन्न राजन् ! कर्माणि=कार्याणि, बुद्धि-श्रेष्ठानि बुद्धया=मत्या विहितानि तु श्रेष्ठानि=उत्तमानि वीरतयेति यावत्, भवन्ति, बाहुमध्यानि बाहुभ्यां=भुजाभ्यां 'भुजबाहू प्रवेष्टो दो'रित्यमरः, विहितानि च मध्यानि=मध्यमानि, भवन्ति, तानि=कर्माणि, जङ्घाजघन्यानि जङ्घया=प्रसृतया जान्वा 'जङ्घा तु प्रसृता जानु'रित्यमरः, जङ्घावद्गोपनीयेन कपटादिनेति यावत्, विहितानि च जघन्यानि=नीचानि, भारप्रत्यवराणि भारेण=शिरसि भारप्रदानेन बलात्कारेणेति यावत्, विहितानि प्रत्यवराणि=प्रतिनीचानि च भवन्ति ।

**भावार्थः—**कर्म बुद्धिसाध्यमुत्तमं, बाहुसाध्यं मध्यमं, कपटसाध्यमधमं बलात्कारसाध्यं चाऽधमतमं भवतीति ॥

**भाषा—हे भरतवंशीय राजन् ! बुद्धिबल से किये गये कर्म श्रेष्ठ, बाहुबल अर्थात् वीरता से किये गये कर्म मध्यम, जंघा अर्थात् कपट से किये गये कर्म कनिष्ठ तथा भार अर्थात् बलात्कार से किये गये कर्म नीच होते हैं ॥ ७५ ॥**

**दुर्योधनेऽथ शकुनौ मूढे दुःशासने तथा ।**
**कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ७६ ॥**

**अन्वयः—**अथ त्वं दुर्योधने शकुनौ मूढे दुःशासने तथा कर्णे च ऐश्वर्यम् आधाय भूतिं कथम् इच्छसि ।

**अर्थः—**विदुर उपसंहरन्नाह-**दुर्योधन इति** । अथेति प्रश्ने 'मङ्गलानन्तरारम्भप्रश्न-कार्त्स्न्येष्वथो अथे'ति कोषः, त्वं=भवान्, दुर्योधने=ज्येष्ठपुत्रे, शकुनौ=तदाख्ये धृतराष्ट्रस्य ते श्याले, मूढे=मूर्खे 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः, दुःशासने=दुर्योधनानुजे स्वपुत्रे, तथा=तादृक्, कर्णे च=अङ्गदेशाधिपतौ पुत्रस्य मित्रे च, ऐश्वर्यं=सम्पत्तिं राज्यसम्बन्धिनीम्, आधाय=स्थापयित्वा, भूतिं=कल्याणं, कथं=केन प्रकारेण, इच्छसि=अभिलषसि ।

**भावार्थः—**राज्यरक्षणादिविधौ मूढेषु दुर्योधनादिषु विश्वासेन ते कल्याणमसम्भवीति ॥

**भाषा—**दुर्योधन, शकुनि, मूर्ख दुःशासन तथा कर्ण को राज्यसम्पत्ति सौंप कर आप कैसे ऐश्वर्य ( कल्याण ) की इच्छा करते हैं ॥ ७६ ॥

**सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ ! ।**
**पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ७७ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतौ तृतीयोऽध्यायः ।

**अन्वयः—**हे भरतर्षभ ! सर्वैः गुणैः उपेताः पाण्डवाः तु त्वयि पितृवत् वर्तन्ते, तेषु ( त्वं ) पुत्रवत् वर्तस्व ।

**अर्थः—**पाण्डवास्त्वया स्वीयत्वेन दर्शनीया इति प्रदर्शयति—**सर्वैरिति** । सर्वैः=सकलैः, गुणैः=प्रोक्तै राजयोग्यैर्गुणैः, उपेताः=युक्ताः, पाण्डवाः युधिष्ठिरादयस्तु, त्वयि=भवति, पितृवत्=पितृतुल्यं, वर्तन्ते=व्यवहरन्ति, तेषु=पाण्डवेषु, पुत्रवत्=पुत्रसदृशं 'ममैवेमे पुत्रा' इति बुद्ध्येति यावत्, वर्तस्व=आचर व्यवहरेति यावत् ।

**भावार्थः—**पाण्डवा अपेक्षितसकलगुणसम्पन्ना भवन्तं पितरमिव मन्यन्तेऽतस्त्वमपि तेषु पुत्रत्वबुद्ध्या वर्तस्वेति ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिनिर्मितायां तत्त्वार्थदर्शिनीत्याख्यायां व्याख्यायां तृतीयोऽध्यायः समाप्तः ।

**भाषा—**हे भरतकुलश्रेष्ठ ! सब गुणों से युक्त पाण्डव आप के साथ पिता का बर्ताव करते हैं, आप उनके साथ पुत्र का वर्ताव कीजिए ॥ ७७ ॥

श्री अनन्तरामशास्त्री वेताल कृत सरलार्थबोधिनी नामक विदुरनीति की हिन्दी भाषाटीका का तृतीय अध्याय समाप्त ।



## अथ चतुर्थोऽध्यायः।

**विदुर उवाच**—विदुरः=नीतिवित्तन्नामा, उवाच=पुनरपि कथयामास।

**अत्रैवोदाहरन्तीममितिहासं पुरातनम्।**
**आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम्॥ १॥**

**अन्वयः**—अत्र एव नः श्रुतम् आत्रेयस्य साध्यानां च संवादं पुरातनम् इमम् इतिहासम् उदाहरन्ति।

**अर्थः**—आत्रेयसाध्यसंवादरूपमितिहासं प्रदर्शयन्नाह—**अत्रैवेति**। बुधाः, अत्र एव=अस्मिन् विषय एव, नः=अस्माकम् अस्माभिरित्यर्थः, श्रुतम्=आकर्णितम्, आत्रेयस्य=अत्रि-गोत्रसमुद्भूतस्य दत्तात्रेयस्य, साध्यानां=देवयोनिविशेषाणां, संवादं=परस्परभाषणरूपं, पुरा-तनं=प्राचीनम्, इतिहासं=पुरावृत्तम् 'इतिहासः पुरावृत्त' इत्यमरः, उदाहरन्ति=प्रदर्शयन्ति।

**भावार्थः**—आत्रेयसाध्यसंवादरूपं पुरातनमितिहासमुपदर्शयन्ति विद्वांसः॥

**भाषा**—विदुर बोले—इसी प्रसङ्ग में ( लोग ) आत्रेय तथा साध्यों ( देव विशेषों ) के संवाद स्वरूप इस प्राचीन इतिहास का उदाहरण देते हैं, जिसे मैंने जाना है॥ १॥

**चरन्तं हंसरूपेण महर्षिं संशितव्रतम्।**
**साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा॥ २॥**

**अन्वयः**—साध्याः देवाः पुरा महाप्राज्ञं हंसरूपेण चरन्तं संशितव्रतं महर्षिं पर्यपृच्छन्त वै।

**अर्थः**—इतिहासमुपन्यस्यति—**चरन्तमिति**। साध्याः=साध्यनामानो द्वादशसङ्ख्याकाः सङ्घचारिणो देवयोनिविशेषाः, देवाः=गणदेवताः, पुरा=प्राचीनसमये, महाप्राज्ञं=मतिमत्तमं, हंसरूपेण=परमहंसरूपेण, चरन्तं=वर्तमानं, संशितव्रतं संशितम्=अतितीक्ष्णं व्रतं=नियमो यस्य 'नियमो व्रतमस्त्री'त्यमरः, तं, महर्षिं महांश्चासौ ऋषिश्च महर्षिः तं=महामुनिम् आत्रेयं, पर्यपृच्छन्त=पर्यपृच्छन् पृष्टवन्तः, आत्मनेपदमार्षम्।

**भावार्थः**—साध्यनामका देवाः कदाचिदात्रेयं पप्रच्छुरिति॥

**भाषा**—प्राचीन काल में हंस ( संन्यासी ) के रूप में विचरते हुए तीक्ष्ण व्रत ( कड़े नियम ) वाले महाबुद्धिमान् महर्षि ( आत्रेय ) से साध्य नामक देवों ने पूछा था॥ २॥

**साध्या ऊचुः**—साध्याः=गणदेवताः, ऊचुः=अब्रुवन्।

**साध्या देवा वयमेते महर्षे! दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम्।**
**श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः काव्यां वाचं वक्तुमर्हस्युदाराम्॥३॥**

**अन्वयः**—हे महर्षे! एते वयं साध्याः देवाः भवन्तं दृष्ट्वा अनुमातुं न शक्नुमः, त्वं श्रुतेन धीरः बुद्धिमान् मतः, उदारां काव्यां वाचं नः वक्तुम् अर्हसि।

**अर्थः**—उपदेशार्थं मुनिं प्रार्थयते—**साध्या इति**। हे महर्षे=हे महामुने! एते=पुरस्तादुपस्थिताः, वयं, साध्याः=तदाख्यया ख्याताः, देवाः=गणदेवताः, भवन्तं=त्वां, दृष्ट्वा=

विलोक्य तव दर्शनं कृत्वा, अनुमातुं = भवत्पाण्डित्यं तर्कयितुं, न शक्नुमः = न पारयामः, त्वं, श्रुतेन=शास्त्रश्रवणेन, धीरः=विद्वान् , बुद्धिमान् = मेधावी, मतः = सम्मतः, उदारां = महतीम् 'उदारो दानृमहतो'रित्यमरः, काव्यां=काव्यमयीं विद्वत्त्वपरिचायिकां, वाचं=वाणीं, नः = अस्मान् , वक्तुम् = उपदेष्टुम् , अर्हसि = उचितोऽसि ।

**भावार्थः**—न वयं दर्शनमात्रेण भवन्तं परिचेतुं पारयामः । भवांस्तु विद्वान् मेधावी च, अतः शास्त्रसिद्धान्तसम्मतं किञ्चिदुपदिशत्विति ॥

**भाषा**—साध्यगण बोले—हे महर्षि ! हम लोग साध्य नामक देवगण, आपको देख कर ( आपके पाण्डित्य आदि के विषय में ) अनुमान नहीं कर सकते । आपको हम लोग विद्या के कारण धैर्यशाली बुद्धिमान् समझते हैं । आप विद्वान् पुरुषों के योग्य सुसंस्कृत तथा उदार ( प्रशस्त ) अर्थवाले वचन का उपदेश दीजिए, क्योंकि आप उस योग्य हैं ॥ ३ ॥

**हंस उवाच**—हंसः = परमहंसावस्थां प्राप्तो मुनिरात्रेयः, उवाच = अकथयत् ।

**एतत्कार्यममराः ! संश्रुतं मे धृतिः शमः सत्यधर्मानुवृत्तिः ।**
**ग्रन्थिं विनीय हृदयस्य सर्वं प्रियाप्रिये चात्मसमं नयीत ॥ ४ ॥**

**अन्वयः**—हे अमराः ! धृतिः शमः सत्यधर्मानुवृत्तिः–एतत् कार्यं मे संश्रुतम् , आत्मसमं हृदयस्य सर्वं ग्रन्थिं विनीय प्रियाप्रिये च नयीत ।

**अर्थः**—कर्तव्योपदेशं दर्शयति—**एतदिति** । हे अमराः = देवाः ! धृतिः = धैर्यं दुःखाद्यभिघातेऽप्यनुद्विग्नता, शमः=शान्तिः, सत्यधर्मानुवृत्तिः सत्यं=तथ्यं च धर्मश्च = धारकः ध्यानादिरूपः साक्षात्कारकः, तयोः अनुवृत्तिः = अनुवर्तनं सततानुशीलनम्—एतत्=इदं, कार्यं = कर्तव्यं, मे=मया, संश्रुतम्=समाकर्णितं गुरुभ्यो ज्ञातमित्यर्थः, अथच, आत्मसमम्=शरीरेण सह, हृदयस्य = चित्तस्य 'चित्तं तु चेतो हृदय'मित्यमरः, सर्वं=सकलं, ग्रन्थिं = ममताहन्तारूपं पर्व 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः, विनीय = अपसार्य, प्रियाप्रिये प्रियं च अप्रियं च प्रियाप्रिये = इष्टानिष्टे, नयीत=अपनयेत् , दूरीकुर्यादित्यर्थः, नयेतेत्यर्थे 'नयीते'ति प्रयोग आर्षः ।

**भावार्थः**—मुनिर्गुरुभ्यः श्रुतं कर्तव्यमुपदेष्टुकामः शास्त्ररहस्यं बोधयन्नाह—चेतःस्थैर्यमिन्द्रियजयं सत्यानुशीलनं धर्मानुष्ठानं च कृत्वा तद्द्वाराऽपनीतहार्दिकसकलाहन्ताममतारूपग्रन्थिः प्रियाप्रिययोः शरीरेण तुल्यं त्यागं कुर्यादिति ॥

**भाषा**—हंस ( संन्यासी ) बोले—हे देवगण ! मैंने यही कर्तव्य ( विद्वानों से ) भलीभाँति सुना है कि धैर्य धारण करना, ( चित्त में ) शान्ति रखना तथा सत्य और धर्म का अनुसरण करना चाहिए और शरीर के साथ ही हृदय के सब अभिमान को हटाकर प्रिय तथा अप्रिय भाव को अपने से दूर करना चाहिए ॥ ४ ॥

**आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।**
**आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ५ ॥**

**अन्वयः—**आकुश्यमानः न आक्रोशेत् , तितिक्षितः मन्युः एव आक्रोष्टारं निर्दहति, अस्य सुकृतं च विन्दति ।

**अर्थः—**शपन्तं न प्रतिशपेदिति बोधयति—**आकुश्यमान इति** । आकुश्यमानः=परै-र्व्यर्थं शप्तोऽपि, न आक्रोशेत्=न शपेत् 'शापाक्रोशौ दुरेषणे'त्यमरः, तितिक्षतः=क्षमां कुर्वतः सहनशीलस्य पुंस इत्यर्थः, परस्मैपदमार्षम् , मन्युः=क्रोध एव 'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरः, आक्रोष्टारं=शप्तारं निन्दकमित्यर्थः, निर्दहति=सर्वथा भस्मीकरोति, अस्य=आक्रोष्टुः, सुकृतं=पुण्यं च विन्दति=लभते ।

**भावार्थः—**परैः शप्तस्यापि तितिक्षावतः पुरुषस्य मन्युः शप्तारमेव दहति, शान्तस्तु तत्कृतं सुकृतं च लभत इति ॥

**भाषा—**निन्दित होने पर अर्थात् अपनी निन्दा सुनने पर ( कभी दूसरे की ) निन्दा नहीं करनी चाहिए, ( क्योंकि ) सहन करनेवाले का क्रोधमात्र निन्दा करने वाले को जला देता है और उसके पुण्य को ले लेता है ॥ ५ ॥

**नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी ।**
**न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुषतीं वर्जयीत ॥ ६ ॥**

**अन्वयः—**( मनुष्यः ) परस्य आक्रोशी न, परस्य अवमानी न, मित्रद्रोही न, उत नीचो-पसेवी न, अभिमानी च न, हीनवृत्तः च न स्यात् । रूक्षां रुषतीं वाचं वर्जयीत ।

**अर्थः—**मनुष्येण कीदृशा न भवितव्यमिति दर्शयति—**नाऽऽक्रोशीति** । मनुष्यः, परस्य=अन्यस्य, आक्रोशी=शप्ता, न=न स्यात् , परस्य अवमानी=अपमानकर्ता, न=न स्यात् , मित्रद्रोही=मित्रद्रोहकारी, न=न स्यात् , उत=उताहो, नीचोपसेवी=हीनसेवकः, न=न स्यात् , अभिमानी=अहङ्कारी च, न=न स्यात् , हीनवृत्तः हीनं=क्षुद्रं वृत्तं=चरित्रं यस्य 'वृत्तं पद्ये चरित्रे चे'त्यमरः, तथाभूतश्च, न स्यात्=न भवेत् । रूक्षां=परुषां, रुषतीं=रोषपूर्णां, वाचं=वाणीं, वर्जयीत=वर्जयेत् त्यजेदिति यावत् , आर्षोऽयं प्रयोगः ।

**भावार्थः—**पराक्रोशावमानमित्रद्रोहनीचसेवनाभिमानासच्चरितत्वादिरहितः परुषक्रोध-पूर्णवाक्यत्यागी च मनुष्यः स्यादिति ॥

**भाषा—**मनुष्य को दूसरे की निन्दा तथा अपमान करनेवाला, मित्र से द्रोह करनेवाला, नीच पुरुष की सेवा करनेवाला, घमंड रखनेवाला तथा हीन क्षुद्र आचरण करनेवाला नहीं होना चाहिए और रूखी तथा क्रोधयुक्त वाणी नहीं बोलनी चाहिए ॥ ६ ॥

**मर्माण्यस्थीनि हृदयं तथासून् रूक्षा वाचो निर्दहन्तीह पुंसाम् ।**
**तस्माद्वाचमुषतीमुग्ररूपां धर्मारामो नित्यशो वर्जयीत ॥ ७ ॥**

**अन्वयः—**इह रूक्षाः वाचः पुंसां मर्माणि अस्थीनि हृदयं तथा असून् निर्दहन्ति, तस्मात् धर्मारामः उषतीम् उग्ररूपां वाचं नित्यशः वर्जयीत ।

**अर्थः—**लोकपीडाकरीं वाचं प्रयोक्तुं निवारयति—**मर्माणीति** । इह=अस्मिन् संसारे,

रूक्षाः=परुषाः, वाचः = गिरः 'गीर्वाग्वाणी सरस्वती'त्यमरः, पुंसां=पुरुषाणां, मर्माणि = सन्धि-स्थानानि, अस्थीनि=कीकसानि 'कीकसं कुल्यमस्थि चे'त्यमरः हृदयं=मनः, तथा असून्=प्राणान् , निर्दहन्ति=ज्वलयन्ति, तस्मात्=अतः, धर्मारामः धर्मे आसमन्तात् रमतेऽसौ धर्मारामः= धर्मप्रेमी धर्मात्मा वा, उशतीं=दाहकारिणीम् , उग्ररूपाम् उग्रं = रौद्रं रूपं=स्वरूपं यस्याः 'रौद्रं तूग्रममी त्रिषि'त्यमरः, वाचं = वाणीं, नित्यशः=नित्यं, वर्जयीत=त्यजेत् । आर्षोऽयं प्रयोगः, वर्जयेदित्युचितम् ।

**भावार्थः**—धर्माभिमानी परोद्वेगसन्तपकारिणीं वाचं सर्वथा त्यजेदिति ॥

**भाषा**—इस संसार मे रूखे वचन पुरुषों के मर्म स्थल, हड्डी, चित्त तथा प्राण ( तक ) को जला देते हैं, इसलिए सन्तापदायक उग्र वचन से धर्मप्रिय पुरुष को नित्य ही दूर रहना चाहिए ॥ ७ ॥

**अरुन्तुदं परुषं रूक्षवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।**
**विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वै वहन्तम् ॥८॥**

**अन्वयः**—( नरः ) अरुन्तुदं परुषं रूक्षवाचं वाक्कण्टकैः मनुष्यान् वितुदन्तं जनानां मुखे निबद्धां निर्ऋतिं वै वहन्तं ( पुरुषम् ) अलक्ष्मीकतमं विद्यात् ।

**अर्थः**—अत्यन्तं दरिद्रं लक्षयति—**अरुन्तुदमिति** । नरः, अरुन्तुदं = मर्मस्पृशम् 'अरुन्तुदं तु मर्मस्पृक्' इत्यमरः, परुषं=क्रूरं, रूक्षवाचं=परुषवचनं, वाक्कण्टकैः=वचनशल्यैः, मनुष्यान् = मानवान् , वितुदन्तं=पीडयन्तं, जनानां = लोकानां, मुखे=वदने, निबद्धां=वर्तमानां, निर्ऋतिम्=अलक्ष्मीं मृत्युं वा, वै=निश्चयेन, वहन्तं=धारयन्तं, पुरुषम् , अलक्ष्मीकतमम् अतिशयेन नास्ति लक्ष्मीर्यस्य तं=दरिद्रतमं, विद्यात्=जानीयात् !

**भावार्थः**—दुर्वचोभिर्लोकान् पीडयन् पुमान् दरिद्रो भवतीति ॥

**भाषा**—मर्मस्पर्शी, परुष, रूखे बोलनेवाले, वाणीरूपी काँटो से मनुष्यों को पीड़ित करनेवाले ( इसप्रकार ) मुख में वर्तमान दरिद्रता अथवा मृत्यु को धारण करनेवाले पुरुष को मनुष्यों में सब से बढ़कर द्ररिद्र समझना चाहिए ॥ ८ ॥

**परश्चेदेनमभिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।**
**स विध्यमानोऽप्यतिदह्यमानो विद्यात्कविः सुकृतं मे दधाति ॥९॥**

**अन्वयः**—परः सुतीक्ष्णैः अनलार्कदीप्तैः बाणैः एनं भृशम् अभिविध्येत चेत् (तर्हि) विध्यमानः अतिदह्यमानः अपि सः कविः—मे सुकृतं दधाति—( इति ) विद्यात् ।

**अर्थः**—परस्य वाग्बाणान् सहेतेति प्रदर्शयति—**परश्चेदिति** । परः=अन्यः, सुतीक्ष्णैः= अतिनिशितैः, अनलार्कदीप्तैः अनलः=पावकः अर्कः=मार्तण्डश्च 'कृशानुः पावकोऽनलः', 'विकर्तनार्कमार्तण्डे'त्यमरौ, तद्वत् दीप्तैः = प्रज्वलितैः असह्यैरित्यर्थः, बाणैः=वाक्सायकैः, एनं=इमं पुरुषं, भृशम्=अत्यन्तम् , अभिविध्येत=विद्धं कुर्यात् , चेत्=यदि, तर्हि विध्यमानः=हन्यमानः अतिदह्यमानः=अतिशयेन दाहं प्राप्यमाणोऽपि, सः कविः = विद्वान् , मे = मम, सुकृतं=पुण्यं, दधाति=पुष्णाति-इति, विद्यात्=जानीयात् ।

**भावार्थः**—परेषां वाग्बाणैराहतोऽपि मतिमान् नरस्तं पुण्यवर्धकं मत्वा तूष्णीं तिष्ठेदिति॥

**भाषा**—बुद्धिमान् पुरुष को यदि कोई दूसरा पुरुष ( शत्रु ) अग्नि तथा सूर्य के समान चमकनेवाले अत्यन्त तीक्ष्ण बाणों से सर्वथा छेद डाले, किन्तु छिदे जाने तथा अत्यन्त पीड़ित होने पर भी इस ( बुद्धिमान् पुरुष ) को यही समझना चाहिए कि 'वह ( बाण मारनेवाला ) मेरे पुण्य को ही पुष्ट कर रहा है' ॥ ९ ॥

**यदि सन्तं सेवति यद्यसन्तं तपस्विनं यदि वा स्तेनमेव ।**
**वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति ॥ १० ॥**

**अन्वयः**—( यः ) सन्तम् असन्तं यदि तपस्विनं यदि स्तेनम् एव वा यदि सेवते, सः तेषां वशं तथा अभ्युपैति, यथा वासः रङ्गवशं प्रयाति ।

**अर्थः**—सेव्यानुकूलः सेवको भवतीति सदृष्टान्तं निर्दिशति—**यदीति** । यः, सन्तं = सत्पुरुषम् , असन्तं=दुष्टं, यदि=चेत् , तपस्विनं यदि=मुनिं यदि 'मुनिर्दान्तौ तपस्विना'वित्यमरः, स्तेनम् एव वा=अथवा चौरमेव, यदि सेवते=भजति यदि, तर्हि सः = स पुरुषः, तेषां सत्प्रभृतीनां, वशम् = अधीनं, अधीनतामिति यावत्, तथा=तेन प्रकारेण, अभ्युपैति=गच्छति, यथा = येन प्रकारेण, वासः=वस्त्रं 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुक'मित्यमरः, रङ्गवशं = वर्णाधीनतां, प्रयाति=गच्छति ।

**भावार्थः**—वस्त्रं येन वर्णेन संसृज्यते तद्वद् भवति, तथा सदसत्तपस्विचौरसेवी तथैव भवतीति ॥

**भाषा**—मनुष्य सज्जन, दुष्ट, तपस्वी अथवा चोर जिस किसीकी सेवा करता है उसीके वश में हो जाता है, जैसे कपड़ा रङ्ग के वश में हो जाता है ॥ १० ॥

**अतिवादं न प्रवदेन्न वादयेद्यो नाहतः प्रतिहन्यान्न घातयेत् ।**
**हन्तुं च यो नेच्छति पापकं वै तस्मै देवाः स्पृहयन्त्यागताय ॥११॥**

**अन्वयः**—यः अतिवादं न प्रवदेत् न वादयेत् , आहतः न प्रतिहन्यात् न प्रतिघातयेत् , यः च पापकं हन्तुं न इच्छति, देवाः आगताय तस्मै स्पृहयन्ति वै ।

**अर्थः**—**अतिवादमिति** । यः=पुरुषः, प्रोक्तोऽपीति प्रकरणानुरोधेनाध्याहार्यम् , अतिवादम् अत्यन्तं वादोऽतिवादस्तम्=उत्तरप्रत्युत्तररूपेणाऽधिकभाषणंपारुष्यं वा 'पारुष्यमतिवादः स्या'दिति कोषात् , न वदेत्=न कथयेत् , न वादयेत्=न भाषयेत, आहतः=ताडितोऽपि, न प्रतिहन्यात्=न प्रतिहिंस्यात् , न घातयेत्=नान्यद्वारा हन्यात् , यश्च, पापकं=पापिनं पापकर्तारमिति यावत् , हन्तुं=नाशयितुं, न इच्छति=नाऽभिलषति, ।देवाः=सुराः, आगताय=आयाताय स्वर्ग इति शेषः, तस्मै=पुरुषाय, स्पृहयन्ति=अभिलषन्ति प्रेम कुर्वते, 'स्पृहेरीप्सित' इति सम्प्रदानाच्चतुर्थी, वै=निश्चयेन ।

**भावार्थः**—प्रेरितोऽपि पुमान् वादप्रतिवादौ न कुर्यान्न वा कारयेत् , तथाऽऽहतोपि न

न हन्यान्न च घातयेत्। तौ पातकिनोऽपि वधमनिच्छंश्चापीति त्रय एते देवानां प्रीतिपात्रं जायन्त इति ॥

**भाषा—**( परुषवचन सुनने पर भी ) जो पुरुष न तो अपने अमर्यादित वचन बोलता है और न दूसरे से ही ( ऐसा वचन ) बोलवाता है, चोट खाने पर भी जो न स्वयं ( मारनेवाले को ) मारता है न (उसे) दूसरों से मरवाता है तथा पापी को भी मारने की इच्छा नहीं करता, उसका ( स्वर्ग में ) आगमन देवता भी चाहते हैं ॥ ११ ॥

**अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद् व्याहृतं तद् द्वितीयम् ।**
**प्रियं वदेद्व्याहृतं तत्तृतीयं धर्मं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२ ॥**

**अन्वयः—**( बुधाः ) व्याहृतात् अव्याहृतं श्रेयः, सत्यं वदेत्–तत् व्याहृतं द्वितीयम् , प्रियं वदेत्–तत् व्याहृतं तृतीयम् , धर्म्यं वदेत्–तत् व्याहृतं चतुर्थम् आहुः ।

**अर्थः—अव्याहृतमिति ।** अस्मिन् पद्ये 'आहु'रिति क्रिया, तदाक्षिप्तो 'बुधा' इति कर्ता चेति द्वावपि समस्तेषु वाक्येष्वन्वितौ। बुधाः, व्याहृतात्=भाषणात् , अव्याहृतं=मौनं, श्रेयः=वरम् असत्यादीनां तत्र मिश्रणासम्भवात् , आहुः=कथयन्ति, सत्यं=तथ्यं, वदेत्=भाषेत, तत् व्याहृतं=तद्भाषणं सत्यमिश्रं, द्वितीयं=ततोऽधिकं श्रेयः, आहुः, प्रियं=मधुरं, वदेत्=कथयेत् , तत् व्याहृतं=सत्यप्रियमिश्रितं भाषणं, तृतीयं=ततोऽप्यधिकं श्रेयः, आहुः, धर्म्यं=धर्मादनपेतं धर्मयुक्तं 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः, वदेत्=गदेत् , तत्=सत्यं प्रियं धर्म्यं च, व्याहृतं=भाषणं, चतुर्थं=तदपेक्षयाप्यधिकतमं श्रेष्ठम् , आहुः ।

**भावार्थः—**असत्यादिभाषणापेक्षया मौनमेव श्रेष्ठं, मौनापेक्षया सत्यभाषणं श्रेष्ठं, तदेव प्रियञ्च यदि स्यात्तर्हि पूर्वापेक्षया श्रेष्ठतरं, सत्येन प्रियेण च संमिश्रं भाषणं धर्मयुक्तं स्याच्चेत्तर्हि तत्तु श्रेष्ठतममेवेति भाषणस्य सविशेषणत्वे उत्तरोत्तरमुत्कर्षः प्रतिपादित इति ॥

**भाषा—**बोलने से मौन रहना, मौन रहने से सत्य बोलना, सत्य बोलने से सत्य तथा प्रिय बोलना और उस से भी बढ़ कर सत्य, प्रिय तथा धर्मयुक्त वचन बोलना श्रेष्ठ कहा जाता है ॥ १२ ॥

**यादृशैः सन्निविशते यादृशांश्चोपसेवते ।**
**यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ १३ ॥**

**अन्वयः—**पूरुषः यादृशैः सन्निविशते, यादृशान् उपसेवते च, यादृक् भवितुम् इच्छेत् च, तादृक् भवति ।

**अर्थः—यादृशैरिति ।** पूरुषः=नरः 'पुरुषाः पूरुषा नरा' इत्यमरः, यादृशैः=यथाविधैः जनैः, संनिविशते=सङ्गच्छते 'नेर्विश' इत्यात्मनेपदम्, यादृशान्=यत्प्रकारकान् नरान् , उपसेवते=भजति, यादृक्=यथा, भवितुम् इच्छेत् च=बुभूषेच्च, तादृक्=तथाविधः, भवति । 'त्यदादिषु दृशोऽनालोचने कञ्चे'ति शास्त्रेणोभयत्र कन्प्रत्ययः, उभयत्र च चकारात् क्विन्प्रत्ययः ।

**भावार्थः—**यथा बुभूषति यादृशानुपसर्पति यादृशैश्च सङ्गं कुरुते, पुरुषस्तथाविधो भवतीति ।

**भाषा**—मनुष्य जैसे लोगों के साथ रहता है, जैसे लोगों की सेवा करता है तथा जैसा होना चाहता है वैसा ही हो भी जाता है ॥ १३ ॥

**यतो यतो निवर्तते ततस्ततो विमुच्यते ।**
**निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १४ ॥**

**अन्वयः**—( पुरुषः ) यतः यतः निवर्तते, ततः ततः विमुच्यते । हि सर्वतः निवर्तनात् अणु अपि दुःखं न वेत्ति ।

**अर्थः**—**यतो यत इति** । पुरुषः, यतः यतः=यस्माद् यस्माद् विषयात्, निवर्तते=निवृत्तो भवति, ततः ततः=तस्मात्तस्माद्विषयात्, विमुच्यते=मुक्तो भवति । हि=तथाहि, सर्वतः=सर्वविषयेभ्यः, निवर्तनात्=परावर्तनात्, अणु अपि=अल्पमपि, दुःखं=कष्टं, न वेत्ति=न जानाति ।

**भावार्थः**—विषयेषु प्रवृत्तिर्दुःखकारणं ततो निवृत्तौ च न दुःखमिति विषयनिवृत्तिः श्रेयसी ॥

**भाषा**—जिन जिन विषयों से मनुष्य विमुख होता जाता है उन उन विषयों से वह छुटकारा पाता जाता है और सभी विषयों से छुटकारा पाने पर उसे लेशमात्र भी दुःख नहीं विदित होता ॥ १४ ॥

**न जीयते चानुजिगीषतेऽन्यान्न वैरकृच्चाऽप्रतिघातकश्च ।**
**निन्दाप्रशंसासु समस्वभावो न शोचते हृष्यति नैव चायम् ॥१५॥**
**भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।**
**सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६ ॥**

**अन्वयः**—( यः ) न जीयते, अन्यान् न अनुजिगीषते च, न च वैरकृत्, अप्रतिघातकः च ( अस्ति ) निन्दाप्रशंसासु समस्वभावः अयं न शोचते, न एव हृष्यति च । सत्यवादी मृदुः दान्तः यः सर्वस्य भावम् इच्छति, अभावे मनः न कुरुते, सः उत्तमपूरुषः ( अस्ति ) ।

**अर्थः**—उत्तमपुरुषं लक्षयति—**न जीयत इति, भावमिति च** । यः, न जीयते=परैर्न पराभूयते, अन्यान्=इतरान्, न अनुजिगीषते=न विजेतुमिच्छति च, आत्मनेपदमार्षम्, न वैरकृत्=नापि विरोधकर्ता, अप्रतिघातकश्च=अहिंसकश्चास्ति, निन्दाप्रशंसासु निन्दाः=गर्हणानि च 'कुत्सा निन्दा च गर्हणे' इत्यमरः, प्रशंसाः=स्तुतयश्च तासु, समस्वभावः समः=तुल्यः स्वभावः=स्वरूपं स्वरूपंच स्वभावश्चे'त्यमरः, अयं=पुरुषः, न शोचते=न शोकं करोति आत्मनेपदमार्षम्, न एव=न कदापि, हृष्यति=प्रसीदति च । सत्यवादी=सत्यवक्ता, मृदुः=कोमलप्रकृतिः, दान्तः=दमितः, तपःक्लेशसहश्च 'दान्तस्तु दमिते', 'तपःक्लेशसहो दान्त' इत्यमरौ, यः=पुरुषः, सर्वस्य=सकलजनस्य, भावं=कल्याणम्, इच्छति=वाञ्छति, अभाव=अकल्याणे, मनः=चित्तं, न कुरुते=न विदधाति, सः, उत्तमपूरुषः=उत्तमः पुरुषः, अस्ति ।

**भावार्थः**—अपराजितो विजयानभिलाषी हिंसाशून्योऽविरोद्धा समस्वभावश्च यः स्तुतौ न हृष्यति निन्दायां च न खिद्यति, सत्यवक्ता मृदुचेता दान्तश्च यः सर्वस्यापि भावमभिलषति न कस्याप्यभावं, स किल पुरुषेषु श्रेष्ठो मन्तव्यः ॥

**भाषा**—( ऐसा मनुष्य ) न तो स्वयं जीता जाता है और न दूसरों को जीतने की ही इच्छा करता है, न तो ( अकारण ) वैर ही करता है और न तो मारनेवाले को विना जवाब दिये ही रहता है, निन्दा और प्रशंसा दोनों में एक समान रहता हुआ न तो शोक करता है और न प्रसन्न ही होता है। जो सबका कल्याण चाहता है, किसी के अमङ्गल में चित्त नही लगाता है तथा सत्यवादी, दयालु और जितेन्द्रिय है, वह उत्तम पुरुष कहा जाता है॥१५-१६॥

**नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च।**
**रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ १७ ॥**

**अन्वयः**—यः अनर्थकं न सान्त्वयति, प्रतिज्ञाय ददाति च ( तथा ) परस्य रन्ध्रं जानाति, सः मध्यमपूरुषः।

**अर्थः**—मध्यमपुरुषं लक्षयति—**नानर्थकमिति**। यः = मनुष्यः, अनर्थकम् = अर्थरहितं व्यर्थमित्यर्थः, न सान्त्वयति = न तोषयति, केवलं वाङ्मात्रेणैव न सन्तोषयति, अपितु तदुचित-कर्मणा प्रसादयति, प्रतिज्ञाय = प्रतिश्रुत्य, ददाति = वितरति च, तथा, परस्य=अन्यस्य, रन्ध्रं= छिद्रं दोषमिति यावत्, 'छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्र'मित्यमरः, जानाति=वेत्ति, सः मध्यम-पूरुषः = श्रेष्ठान्न्यूनः कनिष्ठादधिकः, इति मन्यताम्।

**भावार्थः**—दानपूर्वकं सान्त्वयिता प्रतिज्ञानुकूलं च दाता परच्छिद्रवेत्ता च मध्यमकोटिको मनुष्यो ज्ञेय इति॥

**भाषा**—जो व्यर्थ सान्त्वना नहीं देता ( बल्कि ) देने की प्रतिज्ञा करके देता है और दूसरे ( शत्रु ) की कमजोरी को जानता है वह मध्यम पुरुष ( कहा जाता ) है॥ १७ ॥

**दुःशासनस्तूपहतोऽभिशस्तो नावर्तते मन्युवशात् कृतघ्नः।**
**न कस्यचिन्मित्रमथो दुरात्मा कलाश्चैता अधमस्येह पुंसः ॥ १८ ॥**

**अन्वयः**—उपहतः अभिशस्तः कृतघ्नः दुःशासनः तु मन्युवशात् न आवर्तते, अथो दुरात्मा कस्यचित् मित्रं च न। इह अधमस्य पुंसः एताः कलाः ( सन्ति )।

**अर्थः**—अधमपुरुषं लक्षयन् दुःशासनमुदाहरति—**दुःशासन इति**। उपहतः=विकृतः, अभिशस्तः=आचारितः लोकापवाददूषित इति यावत्, 'अचारितः चारितोऽभिशस्ते'इत्यमरः, कृतघ्नः=उपकारानवेक्षकः, दुःशासनः=दुःखेन शास्यतेऽसौ, अथवा दुर्योधनानुजः, पुरुषस्तु, मन्युवशात्=क्रोधवशात् 'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरः, न आवर्तते=न प्रत्यावर्तते सरलतां न प्राप्नोतीति भावः, अथो=अथ, दुरात्मा=क्षुद्रचित्तः, कस्यचित्=कस्यापि नरस्य, मित्रं=सुहृत् च, न=नास्ति। इह=संसारे, अधमस्य=अवमस्य कनिष्ठस्येत्यर्थः, 'रेफयाप्यावमाधमा' इत्य-मरः, पुंसः=पुरुषस्य, एताः=पूर्वोक्ताः, कलाः=लक्षणानि सन्ति। अत्र महाभारतीयासौ कथा-प्यनुसन्धेया-'घोषयात्रादौ गन्धर्वैः शस्त्रैराहतो बद्ध्वा च स्वस्थानं नीयमानो दुःशासनः पाण्डवैर्मोचितोऽपि न तेषामुपकारं मन्यते प्रत्युत तैर्विरुणद्धि'-इति।

**भावार्थः**—उपद्रुतत्वादिलक्षणलक्षितः पुमानधमो भवति, तादृगेव दुःशासनोऽस्तीति सोऽप्यधम एवेति ज्ञायताम् ॥

**भाषा**—कठिनाई से शासन का मानना, विकृत तथा लोकापवाद से दूषित न होना, क्रोध में आकर उपकार को भूल जाना, किसी का मित्र न होना तथा दुष्ट चित्तवाला होना, ये अधम पुरुष के लक्षण हैं ॥ १८ ॥

**न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।**
**निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९ ॥**

**अन्वयः**—यः परेभ्यः अपि आत्मशङ्कितः कल्याणं न श्रद्दधाति, मित्राणि निराकरोति, सः वै अधमपूरुषः ।

**अर्थः**—पुनरप्यधमं लक्षयति—**न श्रद्दधातीति** । यः, परेभ्यः अपि=श्रेष्ठेभ्योऽपि, आत्मशङ्कितः आत्मनि=स्वस्मिन् स्वविषये शङ्कितः=संशयितः, विश्वासशून्य इति यावत् , कल्याणं=मङ्गलं हितमित्यर्थः 'कल्याणं मङ्गलं शुभ'मित्यमरः, न श्रद्दधाति=न विश्वसिति, मित्राणि=सुहृदः, निराकरोति=तिरस्करोति, सः, वै=निश्चयेन, अधमपूरुषः=अधमो मनुष्यः ।

**भावार्थः**—श्रेष्ठेभ्योऽप्यात्मनि शङ्कमानः कल्याणेऽश्रद्दधानश्च मित्रापमानकर्ता पुरुषोऽधमः परिकीर्त्यते ॥

**भाषा**—जो पुरुष स्वयं अपने पर विश्वास न कर श्रेष्ठ पुरुषों से भी (होनेवाले) कल्याण पर विश्वास नहीं करता और मित्रों का अपमान करता है, वह नीच पुरुष है ॥ १९ ॥

**उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् ।**
**अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः ॥ २० ॥**

**अन्वयः**—यः आत्मनः भूतिम् इच्छेत् (सः) उत्तमान् एव सेवेत, प्राप्तकाले तु मध्यमान् , सेवेतेति पुनरावर्तनीयम् , अधमान् तु न सेवेत ।

**अर्थः**—**उत्तमानिति** । यः, आत्मनः=स्वस्य, भूतिं=कल्याणम् , इच्छेत्=अभिलषेत् , सः, उत्तमान् एव=श्रेष्ठानेव पूर्वं लक्षितान् , सेवेत=भजेत, प्राप्तकाले=अवसरे समापतिते सति तु, मध्यमान्=मध्यानपि, सेवेत, अधमान् तु=हीनांस्तु, न=न कदापि, सेवेत ।

**भावार्थः**—भूतिकाम उत्तमसेवी समये च मध्यमसेव्यपि स्यात् , न कदाप्यधमसेवकः स्यादिति ॥

**भाषा**—अपना कल्याण चाहनेवाले पुरुष को उत्तम पुरुषों की सेवा करनी चाहिए, ( कभी कभी ) समय पड़ने पर मध्यम पुरुष की भी सेवा कर लेनी चाहिए, परन्तु नीच पुरुष की सेवा कभी नहीं करनी चाहिए ॥ २० ॥

**प्राप्नोति वै वित्तमसद्बलेन नित्योत्थानात् प्रज्ञया पौरुषेण ।**
**न त्वेव सम्यग्लभते प्रशंसां न वृत्तमाप्नोति महाकुलानाम् ॥ २१ ॥**

**अन्वयः**—( नरः ) बलेन नित्योत्थानात् प्रज्ञया पौरुषेण च असत् वित्तं वै प्राप्नोति, तु सम्यक् प्रशंसां न एव लभते, महाकुलानां वृत्तं च न आप्नोति ।

**अर्थः—प्राप्नोतीति** । नरः, बलेन = शक्त्या, नित्योत्थानात् नित्यम्=अजस्रम् 'नित्यानवरताजस्र'मित्यमरः, उत्थानम् = उत्साहः प्रयत्न इत्यर्थः, तस्मात्, प्रज्ञया = बुद्ध्या, पौरुषेण = पुरुषार्थेन च, असत्=अवर्तमानम्, अथवा असद्बलमित्येकं पदम्, तदा असतां = दुर्जनां बलं=सामर्थ्यं तेनेत्यर्थः कार्यः, वित्तं = धनं, वै = निश्चयेन, प्राप्नोति = लभते, तु=किन्तु, सम्यक् = उत्तमां, प्रशंसां=स्तुतिं, न एव=न कदापि, लभते = प्राप्नोति, महाकुलानां = सज्जनानां 'महाकुलकुलीनार्यसभ्यसज्जनसाधव' इत्यमरः, वृत्तं च=चरित्रं च 'वृत्तं पद्ये चरित्रे चे'त्यमरः, न आप्नोति=नाभिगच्छति ।

**भावार्थः**—बलादिना द्रव्यं लब्धुं शक्नोति नरः, परं न तेन प्रशस्यते, नापि सच्चरित इति कथ्यते ॥

**भाषा**—पुरुष, बल, सतत प्रयत्न, बुद्धि तथा पुरुषार्थ से अप्राप्त धन को प्राप्त करलेता है किन्तु (धन प्राप्त करने पर भी) भली भाँति प्रशंसा तथा ऊंचे कुलवालों के चरित्र को नहीं पाता २१

**धृतराष्ट्र उवाच**—धृतराष्ट्रः = राजा, उवाच=मध्य एव संशयितः सन् पप्रच्छ ।

**महाकुलेभ्यः स्पृहयन्ति देवा धर्मार्थनित्याश्च बहुश्रुताश्च ।**
**पृच्छामि त्वां विदुर ! प्रश्नमेतं भवन्ति वै कानि महाकुलानि ॥ २२ ॥**

**अन्वयः**—धर्मार्थनित्याः च बहुश्रुताः च देवाः महाकुलेभ्यः स्पृहयन्ति । हे विदुर ! 'महाकुलानि कानि वै भवन्ति ?' एतं प्रश्नं त्वां पृच्छामि ।

**अर्थः**—महाकुलत्वं व्याक्रियतामिति तमनुयुङ्क्ते—**महाकुलेभ्य इति** । धर्मार्थनित्याः धर्मः=वेदोदितविधिः, अर्थः=न्यायोपार्जितं धनं चेति तौ धर्मार्थौ = पुरुषार्थचतुष्टये प्राथम्यमुपगतौ द्वौ पुरुषार्थौ नित्यौ येषां ते, बहुश्रुताः बहु=बहुलं श्रुतं=शास्त्रं येषां ते 'श्रुतं शास्त्रावधृतयो'रित्यमरः, तादृशाश्च, देवाः=अमराः, महाकुलेभ्यः = श्रेष्ठकुलेभ्यः, स्पृहयन्ति=कामयन्ते । हे विदुर ! महाकुलानि महान्ति च तानि कुलानि च महाकुलानि=श्रेष्ठानि कुलानि, कानि, भवन्ति=एतम्=इमं, प्रश्नं=पृच्छां, त्वां=भवन्तं पृच्छामि करोमि ।

**भावार्थः**—देवा महाकुलं कामयन्तेऽतो महाकुलं स्पष्टीकुरु ॥

**भाषा**—धृतराष्ट्र बोले—हे विदुर ! मैं आपसे यह प्रश्न पूछता हूँ कि वे ऊंचे कुल कौन से हैं जिनकी इच्छा देवता, नित्य धर्म और अर्थ में रहनेवाला तथा भारी विद्वान् लोग किया करते हैं ॥ २२ ॥

**विदुर उवाच**—विदुरः=स धृतराष्ट्रपृष्टः, उवाच = उत्तरयामास ।

**तपो दमो ब्रह्मवित्तं वितानाः पुण्या विवाहाः सततान्नदानम् ।**
**येष्वेवैते सप्त गुणा वसन्ति सम्यग्वृत्तास्तानि महाकुलानि ॥ २३ ॥**

**अन्वयः**—तपः दमः ब्रह्मवित्तं वितानाः पुण्याः विवाहाः सततान्नदानम्–एते सप्त सम्यग्वृत्ताः गुणाः येषु वसन्ति एव, तानि महाकुलानि ( विद्यात् ) ।

**अर्थः**—महाकुलं लक्षयति—**तप इति** । तपः = तपश्चरणं चान्द्रायणादि, दमः=इन्द्रियदमन, ब्रह्मवित्तं ब्रह्मणः = ब्राह्मणस्य वित्तं=धनं पठनपाठनादि, वितानाः = यज्ञाः, पुण्याः = पवित्राः शास्त्रानुकूलाः, विवाहाः=उपयमाः 'विवाहोपयमौ समा'वित्यमरः, सततान्नदानं सततं= निरन्तरम् अन्नदानम्=अन्नवितरणं सततान्नदानम्–एते=पूर्वोक्ताः, सप्त=सप्तसङ्ख्याकाः, सम्यग्वृत्ताः=सम्यग्जाताः सुस्थिरा इति यावत्, गुणाः=सद्गुणाः, येषु=येषु कुलेषु, वसन्ति=तिष्ठन्त्येव, तानि, महाकुलानि = श्रेष्ठवंशान् , विद्यात् ।

**भावार्थः**—येषु तपःप्रभृतीना सप्तानां गुणानां नित्य निवासस्तानि महाकुलनाम्ना व्यवह्रियन्त इति ॥

**भाषा**—विदुर बोले–तप, दम ( इन्द्रियों को वश मे करना ), ब्राह्मणों का धन ( वेदाध्ययन ), यज्ञ क्रिया का अनुष्ठान, पवित्र ( शास्त्रानुकूल ) विवाह तथा अन्न का सदा दान– ये सात गुण जिनमें स्थिर रूप से रहते हैं वेही ऊंचे कुल है ॥ २३ ॥

**येषां हि वृत्तं व्यथते न योनिश्चित्तप्रसादेन चरन्ति धर्मम् ।**
**ये कीर्तिमिच्छन्ति कुले विशिष्टां त्यक्तानृतास्तानि महाकुलानि ॥२४॥**

**अन्वयः**—येषां वृत्तं न व्यथते, योनिः न व्यथते, ये चित्तप्रसादेन धर्मं चरन्ति, त्यक्तानृताः कुले विशिष्टां कीर्तिम् इच्छन्ति, तानि महाकुलानि ।

**अर्थः**—**येषामिति** । येषां=पुरुषाणां, वृत्तं = चरित्रं वर्तनमिति यावत् , न व्यथते= न पीडयते, योनिः = उत्पत्तिकारणं पित्रादि, न व्यथते = न दुःखमाप्नोति, ये, चित्तप्रसादेन= प्रसन्नेन चेतसा, धर्मं=पुण्यं, चरन्ति=आचरन्ति, त्यक्तानृताः त्यक्तम् अनृतम् = असत्यं यैस्तादृशाः सन्तः, कुले=वंशे, विशिष्टां=लोकातिगां, कीर्तिं=यशः, इच्छन्ति=वाञ्छन्ति, तानि, महाकुलानि विद्यादिति शेषः ।

**भावार्थः**—चरित्रं सुखकरं, पित्रादयश्च सुखिनः, चेतःप्रसादपूर्णो धर्मः, कुलोन्नतिरसत्यत्यागश्च येषु ते महाकुलपदवाच्या इति ॥

**भाषा**—जिनका आचरण न कष्ट का होता है और (जिनके आचरण से) पितरों को दुःख नहीं होता, जो प्रसन्न मन से धर्म का पालन करते है, जो अपने लिए विशेष कीर्ति की इच्छा करते हैं तथा जो असत्य का त्याग करते हैं वे ऊंचे कुल हैं ॥ २४ ॥

**अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।**
**कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५ ॥**

**अन्वयः**—अनिज्यया कुविवाहैः वेदस्य उत्सादनेन धर्मस्य अतिक्रमेण च कुलानि अकुलतां यान्ति ।

**अर्थः—अनिज्ययेति** । अनिज्यया=यज्ञाभावेन, कुविवाहैः=अशास्त्रीयोपयमैः, वेदस्य=श्रुतेः 'श्रुतिः स्त्री वेद आम्नायस्त्रयी'त्यमरः, उत्सादनेन=नाशनेन असत्प्रयोगेणेत्यर्थः, धर्मस्य=सदाचरितस्य वेदविधेः, अतिक्रमेण=उल्लङ्घनेन च, कुलानि=गोत्राणि, अकुलतां=दुष्कुलतां, यान्ति=प्राप्नुवन्ति ।

**भावार्थः**—यज्ञाकरणकुविवाहवेदोत्सादनधर्मातिक्रमणैः सत्कुलताविनाशात् दुष्कुलत्वं पुंसु समापततीति ॥

**भाषा**—यज्ञ न करने से, बुरे विवाह करने से, वेद का दुरुपयोग करने से तथा धर्म का उल्लङ्घन करने से कुल नीच हो जाते हैं ॥ २५ ॥

**देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २६ ॥**

**अन्वयः**—देवद्रव्यविनाशेन ब्रह्मस्वहरणेन ब्राह्मणातिक्रमेण च कुलानि अकुलतां यान्ति ।

**अर्थः—देवद्रव्यविनाशेनेति** । देवद्रव्यविनाशेन देवानां=सुराणां द्रव्यं=धनं मूर्त्यैं समर्पितं वस्त्राभूषणादि तत्पूजानिमित्तमुत्सृष्टं भूम्यादि वा, तस्य विनाशः=नाशनं तेन, ब्रह्मस्वहरणेन ब्रह्मणः=ब्राह्मणस्य स्वं=द्रव्यं ब्रह्मस्वं=ब्राह्मणोद्देशेनोत्सृष्टमन्नक्षेत्रविद्यालयमठादि तस्य हरणं=स्वायत्तीकरणं तेन, ब्राह्मणातिक्रमेण ब्राह्मणानां=महीसुराणाम् अतिक्रमः=मर्यादोल्लङ्घनं तेन च, कुलानि=वंशाः, अकुलतां=दुष्कुलत्वं, यान्ति=गच्छन्ति ।

**भावार्थः**—देवद्रव्यादित्रिविधदोषकरणेन कुलानि दुष्कुलानि जायन्ते ॥

**भाषा**—देवताओंके धन का नाश करने से, ब्राह्मणों के धन का हरण करने से तथा ब्राह्मणों की आज्ञा का पालन न करने से कुल नीच हो जाते हैं ॥ २६ ॥

**ब्राह्मणानां परिभवात्परिवादाच्च भारत ! ।**
**कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ २७ ॥**

**अन्वयः**—हे भारत ! ब्राह्मणानां परिभवात् परिवादात् च न्यासापहरणेन च कुलानि अकुलतां यान्ति ।

**अर्थः—ब्राह्मणानामिति** । हे भारत=हे भरतकुलोत्पन्न राजन् ! ब्राह्मणानां=विप्राणां, परिभवात्=अनादरात् 'अनादरः परिभवः परीभावस्तिरस्क्रिये'त्यमरः, परिवादात् च=आक्षेपाच्च निन्दाया अपीति यावत्, 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इति कोषः, न्यासापहरणेन न्यासः=निक्षेपः विश्वासेन यद्धनं परस्य सविधे स्थाप्यते तत् न्यासपदेनोच्यते, तस्य अपहरणं=प्रत्यर्पणाभावः तेन च, कुलानि=अन्वयाः, अकुलतां=दुष्कुलत्वं, यान्ति=उपगच्छन्ति ।

**भावार्थः**—ब्राह्मणानां तिरस्कारेण निन्दया च न्यासाप्रत्यर्पणेनापि कुले दोषा उत्पद्यन्त इति ॥

**भाषा**—हे भरतवंशी राजा ! ब्राह्मणों के अपमान तथा निन्दा से और धरोहर को हड़प लेने से कुल नीच हो जाते हैं ॥ २७ ॥

**कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः।**
**कुलसङ्ख्यां न गच्छन्ति यानि हीनानि वृत्ततः॥ २८॥**

**अन्वयः**—गोभिः पुरुषतः अर्थतः समुपेतानि (अपि) वृत्ततः हीनानि (च) यानि कुलानि (सन्ति, तानि) कुलसङ्ख्यां न गच्छन्ति।

**अर्थः—कुलानीति।** गोभिः=धेनुभिः वाग्भिश्च विद्याभिरित्यर्थः, 'स्वर्गेषुपशुवाग्वज्र-दिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ'रित्यमरः, पुरुषतः=पुरुषैः, अर्थतः=अर्थैश्च, अत्र सर्वत्र करणार्थे सार्वविभक्तिकस्तसिः, समुपेतानि=सङ्गतानि सहितान्यपीति यावत्, यानि, कुलानि=गोत्राणि 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वया'वित्यमरः, वृत्ततः=वृत्तेन सदाचरणेन, हीनानि=शून्यानि, च सन्ति, तानि, कुलसङ्ख्यां कुले=वंशे सङ्ख्यां=सङ्ख्यानं गणनामिति यावत्, न गच्छन्ति=न यान्ति, कुलत्वेन तत्परिगणनं न भवतीत्यर्थः।

**भावार्थः**—विद्याधेनुपुरुषसम्पत्तिशालीन्यपि कुलानि चरित्रहीनानि सन्ति कुलत्वेन न परिगण्यन्त इति॥

**भाषा**—गायों, पुरुषों तथा धन से युक्त होने पर भी सदाचार से हीन कुल कुलों (ऊँचे कुलों) की गणना में नहीं आते॥ २८॥

**वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि।**
**कुलसङ्ख्यां च गच्छन्ति कर्षन्ति च महद्यशः॥ २९॥**

**अन्वयः**—अल्पधनानि अपि वृत्ततः अविहीनानि तु कुलानि कुलसङ्ख्यां गच्छन्ति, महत् यशः च कर्षन्ति।

**अर्थः**—अल्पधनानि अपि=स्वल्पधनयुक्तान्यपि, वृत्ततः=चरित्रेण, अविहीनानि=पूर्णानि तु, कुलानि=वंशाः, कुलसङ्ख्यां=कुलगणनां, गच्छन्ति=यान्ति सत्कुलत्वेन परिगण्यन्त इत्यर्थः, महत्=विशालं 'विशालं पृथुलं मह'दित्यमरः, यशः=कीर्तिं च, कर्षन्ति=आनयन्ति लभन्त इत्यर्थः।

**भावार्थः**—चारित्र्यपूर्णान्यल्पधनान्यपि कुलानि कुलत्वेन गण्यन्ते, यशस्वीनि च भवन्ति॥

**भाषा**—सदाचार से युक्त कुल थोड़े धनवाले होते हुए भी ऊँचे कुलों की गणना में आजाते हैं और बड़े यश के भागी होते हैं॥ २९॥

**वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च।**
**अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः॥ ३०॥**

**अन्वयः**—(नरः) वृत्तं यत्नेन संरक्षेत्, वित्तम् एति याति च, वित्ततः क्षीणः अक्षीणः, वृत्ततः हतः तु हतः।

**अर्थः—वृत्तमिति।** नरः, वृत्तं=चरित्रं 'वृत्तं पद्ये चरित्रे चे'त्यमरः, यत्नेन=प्रयत्नेन, संरक्षेत्=पालयेत्, वित्तं=धनम्, एति=आगच्छति, याति=गच्छति च, वित्ततः=वित्तेन, क्षीणः=

हीनः, अक्षीणः=अहीनः परिपूर्ण एवास्ति, वृत्ततः=चरित्रेण च, उभयत्र सार्वविभक्तिकस्तसिः, हतः तु=नष्टस्तु, हतः=भ्रष्टः पतित एव जात इत्यर्थः ।

**भावार्थः—**वित्तं चपलं, कदाचिदेति कदाचिच्चापयाति, तद्धानिर्न तावद्दुःखहेतुः, वृत्त-हीनता तु सर्वथा नाशिकेति वृत्तं सर्वतोभावेन प्रयत्नपूर्वकमवश्यं रक्षणीयमेवेति ॥

**भाषा—**धन आता जाता रहता है ( उसकी चिन्ता नहीं करनी चाहिए ), पर सदाचार की यत्न पूर्वक रक्षा करनी चाहिए, ( क्योंकि ) धन से हीन पुरुष हीन नहीं होता, पर सदाचार से रहित पुरुष नष्ट ही हो जाता है ॥ ३० ॥

**गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।**
**कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥ ३१ ॥**

**अन्वयः—**यानि कुलानि वृत्ततः हीनानि ( भवन्ति, तानि ) गोभिः पशुभिः अश्वैः सु-समृद्धया कृष्या च न प्ररोहन्ति ।

**अर्थः—गोभिरिति ।** यानि, कुलानि = गोत्राणि, वृत्ततः=चरित्रेण, हीनानि = शून्यानि भवन्ति, तानि कुलानि, गोभिः=धेनुभिः विद्याभिर्वा, पशुभिः=हस्त्यादिभिः, अश्वैः=घोटकैः, समृद्धया=अत्यन्तं सम्पन्नया, कृष्या=कर्षणेन च, न=नैव, प्ररोहन्ति=फलन्ति विस्तारं लभन्त इति यावत् ।

**भावार्थः—**सदाचरणहीनानि कुलानि गवादिपूर्णान्यपि न विस्तृतिं प्राप्नुवन्तीति ॥

**भाषा—**जो कुल सदाचार से हीन हैं वे गायों, पशुओं, घोड़ों तथा बहुत बढ़ी चढ़ी खेती से भी आगे नहीं बढते ॥ ३१ ॥

**मा नः कुले वैरकृत्कश्चिदस्तु राजामात्यो मा परस्वापहारी ।**
**मित्रद्रोही नैकृतिकोऽनृती वा पूर्वाशी वा पितृदेवातिथिभ्यः ॥३२॥**

**अन्वयः—**( राजन् ! ) नः कुले राजा अमात्यः वा कश्चित् वैरकृत् परस्वापहारी मित्रद्रोही नैकृतिकः अनृती वा पितृदेवातिथिभ्यः पूर्वाशी वा मा अस्तु ।

**अर्थः—मा न इति ।** राजन् , ! नः=अस्माकं, कुले=वंशे, राजा=नृपः, अमात्यः=मन्त्री वा, कश्चित्=कोऽपि, वैरकृत्=विरोधकर्ता, परस्वापहारी परस्वस्य=अन्यदीयधनस्य अपहारी= अपहरणकर्ता, मित्रद्रोही मित्रेभ्यः=सुहृद्भ्यः द्रुह्यति=द्रोहं करोतीति, नैकृतिकः निकृतिः= शाठ्यम् अस्त्यस्मिन्निति नैकृतिकः=शठः मायावीत्यर्थः,'कुसृतिर्निकृतिः शाठ्य'मित्यमरः,अनृती= असत्यभाषी, पितृदेवातिथिभ्यः पितरश्च=अग्निष्वात्तादयः, देवाश्च=ब्रह्मादयश्च, अतिथयश्च =अभ्यागताः, तेभ्यः, असमर्प्येति शेषः, पूर्वाशी पूर्वम्=आदौ अश्नातीति पूर्वाशी=पूर्वभोजी वा, मा अस्तु=मा भवतु ।

**भावार्थः—**वैरकर्ता परधनापहारी मित्रद्रोही शठोऽसत्यवक्ता देवद्विजातिथिपूर्वभोक्ता च कश्चिदस्मत्कुले राजा मन्त्री वा मा भवतु नवोत्पद्यताम् ॥

**भाषा**—हम लोगों के कुल में राजा अथवा मन्त्री कोई भी ( अकारण ) वैर करनेवाला, दूसरों के धन को ले लेनेवाला, मित्र से शत्रुता रखनेवाला, कपटी, असत्यवादी तथा पितरों, देवताओं और अतिथियों से पहले भोजन करनेवाला न होवे ॥ ३२ ॥

**यश्च नो ब्राह्मणान् हन्याद्यश्च नो ब्राह्मणान् द्विषेत् ।**
**न नः स समितिं गच्छेद्यश्च नो निर्वपेत् कृषिम् ॥ ३३ ॥**

**अन्वयः**—यः च नः ब्राह्मणान् हन्यात् , यः च नः ब्राह्मणान् द्विषेत् , यः च नः कृषिं निर्वपेत् , सः नः समितिं न गच्छेत् ।

**अर्थः—यश्चेति** । यः=नरश्च, नः=अस्माकं कुले, ब्राह्मणान्=विप्रान् , हन्यात्=हिंसां कुर्यात् , यश्च, नः=अस्माकं कुले, ब्राह्मणान्=द्विजान् , द्विषेत्=द्वेषं कुर्यात् , यश्च, नः, कृषिं= क्षेत्रकर्षणं, निर्वपेत्=कुर्यात् , सः = पुरुषः, नः=अस्माकं, समितिं=सभां, 'सभासमितिसंसदः' इत्यमरः, न गच्छेत् = न समिलेत् ।

**भावार्थः**—अस्मत्कुलप्रसूतः कश्चित् ब्राह्मणहन्ता ब्राह्मणद्वेषी क्षेत्रकर्षणपरश्च स्यात् , सोऽस्माकं समितौ प्रवेशं नार्हतीति ॥

**भाषा**—हम लोगों मे जो ब्राह्मणों को मारे तथा उनसे वैर करे और खेती करे ( हल जोते ) वह हमारी सभा में न जाय अर्थात् हम लोगों से अलग समझा जाय ॥ ३३ ॥

**तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।**
**सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३४ ॥**

**अन्वयः**—सतां गेहेषु कदाचन तृणानि भूमिः उदकं चतुर्थी सूनृता वाक् च-एतानि न उच्छिद्यन्ते ।

**अर्थः—तृणानीति** । सतां = सज्जनानां, गेहेषु=गृहेषु, कदाचन=कदाचिदपि, तृणानि = घासाः 'शष्पं बालतृणं घासो यवसं तृणमर्जुनमित्यमरः, अत्र तृणपदेनासनं गृह्यते, तथाच आसनानीत्यर्थः, भूमिः=स्थानमुपवेष्टुम् , उदकं=जलं पादप्रक्षालनार्थमाचमनार्थं च, चतुर्थी, सूनृता=मिष्टा, वाक्=भाषणं च, एतानि = आसनादीनि, न उच्छिद्यन्ते = नोत्साद्यन्ते, अवश्यमेव लभ्यन्त इत्यर्थः ।

**भावार्थः**—आसनस्थानजलमिष्टभाषणानि सतां गेहे सर्वदा वर्तन्त एवेति ॥

**भाषा**—तृण, भूमि, जल ( ये तीनों ) तथा चौथा प्रिय वचन, सज्जनों के घर में कभी भी नष्ट नहीं होते अर्थात् अवश्य ही प्राप्त होते हैं ॥ ३४ ॥

**श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।**
**प्रवृत्तानि महाप्राज्ञ ! धर्मिणां पुण्यकर्मिणाम् ॥ ३५ ॥**

**अन्वयः**—हे महाप्राज्ञ ! हे राजन् ! परया श्रद्धया उपनीतानि ( एतानि ) धर्मिणां पुण्यकर्मिणां सत्कृतिं ( कर्तुं ) प्रवृत्तानि ( भवन्ति ) ।

**अर्थः—श्रद्धयेति** । हे महाप्राज्ञ = हे महामतिमन्, हे राजन्=हे नृप ! परया=महत्या, श्रद्धया=भक्त्या, उपनीतानि = समीपं प्रापितानि दत्तानीत्यर्थः, एतानि=तृणादीनि, धर्मिणां= धर्मात्मनां, पुण्यकर्मिणां = पुण्यवतां, सत्कर्तुं=सत्कारं, कर्तुं प्रवृत्तानि=तत्पराणि, भवन्ति ।

**भावार्थः**—जनैः श्रद्धया समुपस्थापिता आसनादयः पदार्थाः पुण्यवतां सत्कारकरणाय सन्नद्धा भवन्तीति ॥

**भाषा**—हे महाबुद्धिमन् राजन् ! धर्म करनेवाले पुण्यात्माओं के सत्कार के लिए तो ( ये चारों ) बड़ी श्रद्धा के साथ उपस्थित किये जाते हैं ॥ ३५ ॥

**सूक्ष्मोऽपि भारं नृपते ! स्यन्दनो वै शक्तो वोढुं न तथान्ये महीजाः ।**
**एवं युक्ता भारसहा भवन्ति महाकुलीना न तथान्ये मनुष्याः ॥ ३६ ॥**

**अन्वयः**—हे नृपते ! सूक्ष्मः अपि स्यन्दनः भारं वोढुं (यथा) शक्तः, तथा अन्ये महीजाः न, एवं युक्ताः महाकुलीनाः भारसहाः भवन्ति, तथा अन्ये मनुष्याः न ।

**अर्थः—सूक्ष्मोऽपीति** । हे नृपते=हे राजन् ! सूक्ष्मः अपि=लघुरपि, स्यन्दनः=रथः, 'शताङ्गः स्यन्दनो रथ' इत्यमरः, भारं=भरं, वोढुं=धृत्वा नेतुं, यथा, शक्तः=समर्थः, तथा=तेन प्रकारेण, अन्ये=इतरे, महीजाः मह्यां जायन्ते इति महीजाः=महीरुहाः वृक्षा इति यावत्, 'वृक्षो महीरुहः शाखी'त्यमरः, न = भारं वोढुं न समर्थाः सन्ति, एवम् = एतादृगेव, युक्ताः=योग्याः, महाकुलीनाः=महाकुलोत्पन्नाः पुरुषाः, भारसहाः भारं सहन्त इति भारसहाः=भारसहकर्तारः, भवन्ति, तथा=तद्वत्, अन्ये=इतरे, मनुष्याः=नराः, न भवन्ति = न जायन्ते ।

**भावार्थः**—महाकुलीना एव सांसारिकधार्मिकभारसहनशक्ता भवन्तीति ॥

**भाषा**—हे राजन् ! थोड़े से भी बोझ को जिसप्रकार रथ ढो सकता है उसप्रकार और दूसरे वृक्ष नहीं ढो सकते । इसीप्रकार ऊँचे कुल में उत्पन्न योग्य पुरुष भार सहनेवाले होते हैं और दूसरे मनुष्य वैसे नहीं हो सकते ॥ ३६ ॥

**न तन्मित्रं यस्य कोपाद्बिभेति यद्वा मित्रं शङ्कितेनोपचर्यम् ।**
**यस्मिन्मित्रे पितरीवाश्वसीत तद्वै मित्रं सङ्गतानीतराणि ॥ ३७ ॥**

**अन्वयः**—(नरः) यस्य कोपात् बिभेति, वा यत् मित्रं शङ्कितेन उपचर्यम्, तत् मित्रं न, पितरि इव यस्मिन् मित्रे आश्वसीत, तत् मित्रं वै, इतराणि सङ्गतानि ।

**अर्थः—न तदिति** । नरः, यस्य = पुंसः, कोपात्=क्रोधात्, बिभेति=भयमधिगच्छति, वा=अथवा, यत्, मित्रं=सुहृत्, शङ्कितेन=शङ्कायुक्तेन मनसा, उपचर्यं = सेवनीयं भवति, तत्, मित्रं = सखा, न=नास्ति, पितरि इव=जनक इव, यस्मिन् मित्रे=यस्मिन् सुहृदि, आश्वसीत= आश्वसेत्, अत्रात्मनेपदमार्षम्, तत्, मित्रं=सखा, वै = निश्चयेन, अस्तीति शेषः, इतराणि= अन्यानि, सङ्गतानि=सहचराणि, सन्तीति ।

**भावार्थः**—यस्माद् भयं यस्मिंश्च शङ्का, नासौ मित्रशब्दव्यवहार्यः, किन्तु यस्मिन् पूर्णो विश्वासः, स एव मित्रमिति कथ्यते, तद्भिन्नस्तु प्रसङ्गवशेन सङ्गत इत्येव ॥

**भाषा**—जिसके क्रोध से डरा जाय अथवा अविश्वास के साथ जिसकी सेवा की जाय वह मित्र नहीं है, बल्कि जिस मित्र पर पिता की भाँति भरोसा हो वही ( वास्तविक ) मित्र है दूसरे तो साथीमात्र हैं ॥ ३७ ॥

**यः कश्चिदप्यसम्बन्धो मित्रभावेन वर्तते ।**
**स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ३८ ॥**

**अन्वयः**—असम्बद्धः अपि यः कश्चित् मित्रभावेन वर्तते, सः एव बन्धुः, तत् मित्रम् , सा गतिः, तत् परायणम् ।

**अर्थः—य कश्चिदिति** । असम्बद्धः अपि=सम्बन्धरहितोऽपि, यः कश्चित्=यः कोपि पुमान्, मित्रभावेन=मैत्र्या, वर्तते=तिष्ठति, सः एव बन्धुः=स एव बान्धवः, तत् मित्रं=स सखा, सा गतिः=तदेव शरणम् , तत् परायणं=स एवाश्रयः, अस्तीति शेषः ।

**भावार्थः**—सम्बन्धाभावेऽपि मैत्रीमनुपालयन् पुरुष एव बन्धुर्मित्रं गतिः परायणं चास्ति॥

**भाषा**—जो पुरुष सम्बन्ध न रहने पर भी मित्र की भाँति बर्ताव करता है, वही भाई ( सहायक ), मित्र, अवलम्ब तथा आश्रय है ॥ ३८ ॥

**चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।**
**पारिप्लवमतेर्नित्यमध्रुवो मित्रसङ्ग्रहः ॥ ३९ ॥**

**अन्वयः**—चलचित्तस्य वृद्धान् अनुपसेवतः पारिप्लवमतेः पुंसः मित्रसङ्ग्रहः नित्यम् अध्रुवः।

**अर्थः—चलचित्तस्येति** । चलचित्तस्य चलं=चञ्चलं चित्तं=मनो यस्य तादृशस्य, वृद्धान्=प्रवयसः 'प्रवयाः स्थविरो वृद्ध' इत्यमरः, अनुपसेवतः=असेवमानस्य, परस्मैपदमार्षम् , पारिप्लवमतेः पारिप्लवा=चञ्चला 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः, मतिः= बुद्धिर्यस्य तस्य, पुंसः=पुरुषस्य, मित्रसङ्ग्रहः मित्राणां=सुहृदां सङ्ग्रहः, नित्यं=सर्वदा, अध्रुवः=अस्थिरः ।

**भावार्थः**—यस्य चित्तं बुद्धिश्च चञ्चले, यो वृद्धानुपसेवी च वर्तते, असौ मित्रसङ्ग्रहं कर्तुं न प्रभवतीति ॥

**भाषा**—चञ्चल मन तथा बुद्धिवाले और बड़े बूढ़ों की सेवा न करनेवाले पुरुष के लिए मित्रों का सङ्ग्रह नित्य ही अनिश्चित है ॥ ३९ ॥

**चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।**
**अर्थाः समभिवर्तन्ते हंसाः शुष्कं सरो यथा ॥ ४० ॥**

**अन्वयः**—हंसाः यथा शुष्कं सरः समभिवर्तन्ते, ( तथा ) अर्थाः चलचित्तम् अनात्मानम् इन्द्रियाणां वशानुगं समभिवर्तन्ते ।

**अर्थः—चलचित्तमिति**॥ हंसाः=मानसौकसः 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकस' इत्यमरः, यथा, शुष्कं=शोषं प्राप्तं जलहीनमिति यावत् , सरः=सरसीं, 'कासारः सरसी सरः' इत्यमरः, समभिवर्तन्ते=समीपमुपयान्ति न परमन्तः प्रविशन्ति, तथा, अर्थाः=कार्यसिद्धयः धनानि

वा, चलचित्तं=चञ्चलमनसम्, अनात्मनम्=आत्माभिमानशून्यं दूषितान्तःकरणं वा, इन्द्रियाणां =करणानां, वशानुगं वशम्=अधीनम् अधीनताम् अनुगच्छति=अनुसरतीति तं, नरं, समभिवर्तन्ते=सम्यक् अभितः वर्तन्ते समीपमायान्ति, नच फलन्ति।

**भावार्थः**—सरसि शुष्के हंसा न तत्र प्रविशन्ति, तत्पर्यन्तं केवलमनुधावन्ति, तथा अजितेन्द्रियोऽनात्मवांश्चलचित्तश्च कार्यसिद्धिं न चिराय भवित्रीं पश्यन्नपि न विन्दति॥

**भाषा**—चञ्चल-चित्तवाले, आत्माभिमान से शून्य अथवा दूषित-अन्तःकरणवाले तथा इन्द्रियों के वश में रहनेवाले मनुष्य के पास कार्यसिद्धि अथवा धन नही फटकता जैसे कि सूखे सरोवर के पास हंस नहीं फटकते॥ ४०॥

**अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः।**
**शीलमेतदसाधूनामभ्रं पारिप्लवं यथा॥ ४१॥**

**अन्वयः**—पारिप्लवम् अभ्रं यथा (असज्जनाः) अकस्मात् एव कुप्यन्ति, अनिमित्ततः प्रसीदन्ति, एतत् असाधूनां शीलम्।

**अर्थः—अकस्मादिति।** पारिप्लवं=चञ्चलम्, अभ्रं यथा=मेघ इव 'अभ्रं मेघो वारिवाह' इत्यमरः, असज्जनाः, अकस्मात् एव=सहसैव, कुप्यन्ति=क्रुध्यन्ति, अनिमित्ततः=निमित्तं विनैव अहेतुकमेवेत्यर्थः, प्रसीदन्ति=तृप्यन्ति हृष्यन्ति च, एतत्=इदम्, असाधूनां=दुष्टानां 'सभ्यसज्जनसाधव' इत्यमरः, शीलं=स्वभावः।

**भावार्थः**—असाधवो व्यर्थं कुप्यन्ति, विना कारणं प्रसीदन्ति चेति॥

**भाषा**—दुष्टों का स्वभाव चञ्चल मेघ की भाँति (चलायमान) होता है। वे विना कारण ही क्रुद्ध हो जाते हैं और विना किसी हेतु के प्रसन्न भी हो जाते हैं॥ ४१॥

**सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये।**
**तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते॥ ४२॥**

**अन्वयः**—सत्कृताः कृतार्थाः च ये मित्राणां न भवन्ति, मृतान् तान् कृतघ्नान् क्रव्यादाः अपि न उपभुञ्जते।

**अर्थः—सत्कृताश्चेति।** सत्कृताः=सम्मानिताः, कृतार्थाः=कृतकृत्याः सफलाश्च, ये=नराः, मित्राणां=सुहृदाम्, अनुकूलाः पक्षपातिनो वेत्यध्याहार्यम्, न भवन्ति=न जायन्ते, मृतान्=प्रमीतान्, 'मृतप्रमीता'वित्यमरः, तान्=मित्रेण सत्कृतान् कृतार्थानपि तदननुकूलान्, अत एव कृतघ्नान्=विस्मृतोपकारतया दुष्टान्, क्रव्यादाः अपि=कौणपा अपि मांसभक्षका गृध्रादय इति यावत्, 'कौणपः क्रव्यात् क्रव्यादोऽस्रप आशर' इत्यमरः, न उपभुञ्जते=न भक्षयन्ति।

**भावार्थः**—मित्रेभ्यः सत्कारं सफलतां चासाद्य ये मित्राणि न सम्मानयन्ति, तेषां मांसभक्षणे क्रव्यादानामपि न प्रवृत्तिर्जायते॥

**भाषा**—जो मनुष्य आदर तथा कार्य की सिद्धि को पाकर भी मित्रों के ( अनुकूल ) नहीं होते, उन कृतघ्नों ( उपकार को भूल जानेवालों ) को, मरने पर भी, मांस खानेवाले जानवर नहीं खाते ॥ ४२ ॥

**अर्चयेदेव मित्राणि सति वाऽसति वा धने।**
**नानर्थयन् प्रजानाति मित्राणां सारफल्गुताम् ॥ ४३ ॥**

**अन्वयः**—धने सति असति वा मित्राणि अर्चयेत् एव, अनर्थयन् मित्राणां सारफल्गुतां न प्रजानाति।

**अर्थः—अर्चयेदिति**। धने=द्रव्ये, सति=वर्तमाने, असति वा=अविद्यमाने वा, मित्राणि=सुहृदः, अर्चयेत् एव=पूजयेदेव सत्कारादिभिः सम्मान्य तोषयेदित्यर्थः, अनर्थयन्=अप्रार्थयन्, मित्राणां=सुहृदां, सारफल्गुतां=सारासारताम् 'असारं फल्गु' इत्यमरः, न प्रजानाति=न विद्यात्, लिङर्थेऽत्र लट्।

**भावार्थः**—सर्वदैव मित्रसत्कारोऽवश्यं कर्तव्यः, निरपेक्षः स्नेही मित्राणां सारतामसारतां च नालोचयति ॥

**भाषा**—धन होने अथवा न होने पर भी ( किसी भी दशा में ) मित्रों का सत्कार करना ही चाहिये, अर्थ ( धन आदि ) की इच्छा न करनेवाला पुरुष मित्रों की ( धन की दृष्टि से ) सार्थकता या निरर्थकता को नहीं जानता ( विचारता ) ॥ ४३ ॥

**सन्तापाद् भ्रश्यते रूपं सन्तापाद् भ्रश्यते बलम्।**
**सन्तापाद् भ्रश्यये ज्ञानं सन्तापाद् व्याधिमृच्छति ॥ ४४ ॥**

**अन्वयः**—( जनस्य ) रूपं सन्तापात् भ्रश्यते, बलं सन्तापात् भ्रश्यते, ज्ञानं सन्तापात् भ्रश्यते, ( जनः ) सन्तापात् व्याधिम् ऋच्छति।

**अर्थः—सन्तापादिति**। जनस्य, रूपं=सौन्दर्यं, सन्तापात्=दुःखात् शोकाद्वा, भ्रश्यते=नश्यति, बलं=शक्तिः, सन्तापात्, भ्रश्यते=क्षीयते, ज्ञानं=बोधः, सन्तापात्, भ्रश्यते=विलीयते, जनः, सन्तापात्=खेदात् शोकाद्वा, व्याधि=रोगम्, 'रोगव्याधिगदामया' इत्यमरः, ऋच्छति=गच्छति प्राप्नोतीत्यर्थः। भ्रश्यतेरात्मनेपदमार्षम्।

**भावार्थः**—सन्तापेन रूपबलज्ञानानां नाशो व्याधिप्राप्तिश्चेति सन्तापो हेय इति ॥

**भाषा**—दुःख अथवा शोक से मनुष्य के सौन्दर्य, बल तथा ज्ञान नष्ट हो जाते हैं और वह रोग को प्राप्त होता ( रोगी हो जाता ) है ॥ ४४ ॥

**अनवाप्यं च शोकेन शरीरे चोपतप्यते।**
**अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ४५ ॥**

**अन्वयः**—शोकेन अनवाप्यं, शरीरे उपतप्यते च, अमित्राः प्रहृष्यन्ति, ( अतः ) शोके मनः मा स्म कृथाः।

**अर्थः**—**अनवाप्यमिति** । शोकेन=शुचा, किञ्चिदपि, अनवाप्यम्=अवाप्तुमशक्यं नावाप्यत इति यावत्, तेनैव हेतुना, शरीरे=देहे, उपतप्यते=केवलं ताप एवावाप्यते, जनैरिति शेषः, सन्तप्यत एवेति तात्पर्यम्, शोकेन शरीरे तापे समुत्पन्ने तु, अमित्राः=शत्रवः 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रव' इत्यमरः, प्रहृष्यन्ति=हर्षं प्राप्नुवन्ति, अतः, शोके=शुचि, मनः=चित्तं, मा स्म कृथाः=न विधेहि, 'न माङ्योगे' इति सूत्रेणाऽडभावः ।

**भावार्थः**—शोकेन न किमपि लभ्यते, केवलं शरीरे सन्तापो भवति, तेन च शत्रवः प्रसीदन्ति, तस्मान्न शोकः कदापि कार्यः ॥

**भाषा**—शोक से कुछ ( सुख आदि ) मिलता नहीं, ( उल्टे ) शरीर में जलन पैदा होती है तथा शत्रु प्रसन्न होते हैं । ( इसलिए ) शोक में चित्त न लगाइए ॥ ४५ ॥

**पुनर्नरो म्रियते जायते च पुनर्नरो हीयते वर्धते च ।**
**पुनर्नरो याचति याच्यते च पुनर्नरः शोचति शोच्यते च ॥ ४६ ॥**

**अन्वयः**—नरः पुनः म्रियते जायते च, नरः पुनः हीयते वर्धते च, नरः पुनः याचति याच्यते च, नरः पुनः शोचति शोच्यते च ।

**अर्थः**—**पुनर्नर इति** । नरः=पुरुषः, पुनः=भूयः, म्रियते=मृत्युमेति, जायते=उत्पद्यते च, नरः पुनः, हीयते=क्षीयते, वर्धते=एधते च, नरः पुनः, याचति=प्रार्थयते, याच्यते=प्रार्थ्यते च, नरः पुनः, शोचति=शोकं करोति, शोच्यते=शोकविषयो भवति च ।

**भावार्थः**—नरः पुनः पुनर्मरणोत्पत्त्यादिकं प्राप्नोतीति ॥

**भाषा**—मनुष्य बार बार मरता और जीता है, घटता और बढ़ता है, मांगता और माँगा जाता है तथा शोक करता और शोक का विषय होता है ॥ ४६ ॥

**सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च ।**
**पर्यायशः सर्वमेते स्पृशन्ति तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ४७ ॥**

**अन्वयः**—सुखं दुःखं च भवाभवौ लाभालाभौ मरणं जीवितं च एते पर्यायशः सर्वं स्पृशन्ति, तस्मात् धीरः न हृष्येत्, न च शोचेत् ।

**अर्थः**=**सुखमिति** । सुखं=शर्म अनुकूलवेदनीयमित्यर्थः, दुःखं=कष्टं च प्रतिकूलवेदनीयमिति यावत्, भवाभवौ=उत्पत्त्यनुत्पत्ती, लाभालाभौ=लाभहानी, मरणं=मृत्युः, जीवितं=जीवनं च, एते=सुखादयः, पर्यायशः=पर्यायेण क्रमशः, सर्वं=प्राणिमात्रं, स्पृशन्ति=प्राप्ता भवन्ति, तस्मात्=हेतोः, अस्मिन्विषये, धीरः=विद्वान्, न हृष्येत्=न मोदेत, न च शोचेत्=नापि शोकं कुर्यात् ।

**भावार्थः**—सुखदुःखादिकं द्वन्द्वं पर्यायेण सर्वानेवाक्रामति, तस्मादत्र विषये शोकहर्षयोरनवसर एवेति ॥

**भाषा**—सुख-दुःख, उत्पत्ति-विनाश, लाभ-हानि, मरण-जीवन,-ये सभी एक के बाद दूसरे ( मनुष्य के पास ) आते ही रहते हैं, इसलिए धीर ( बुद्धिमान् ) पुरुष को हर्ष तथा शोक नहीं करना चाहिए ॥ ४७ ॥

**चलानि हीमानि षडिन्द्रियाणि तेषां यद्यद्वर्धते यत्र यत्र ।**
**ततस्ततः स्रवते बुद्धिरस्य छिद्रोदकुम्भादिव नित्यमम्भः ॥४८॥**

**अन्वयः**—इमानि षट् इन्द्रियाणि चलानि हि, तेषां यत् यत् यत्र यत्र वर्धते, ततः ततः अस्य बुद्धिः छिद्रोदकुम्भात् नित्यम् अम्भ इव स्रवते ।

**अर्थः—चलानीति** । इमानि, षट्=षट्सङ्ख्याकानि, इन्द्रियाणि=श्रोत्रादीनि मनःसहितानि 'मनःषष्ठानीन्द्रियाणी'त्युक्तेः, चलानि=चञ्चलानि विषयानुधावीनीति यावत्, हि=निश्चयेन, सन्ति, तेषां=तेषामिन्द्रियाणां मध्यात्, निर्धारणार्थे षष्ठी, यत् यत्=यत्किञ्चिदिन्द्रियं, यत्र यत्र=यस्मिन् यस्मिन् विषये, वर्धते=वृद्धिमुपयाति, प्रवर्तत इत्यर्थः, ततः ततः=तस्मात्तस्माद्विषयात्, अस्य=पुंसः, बुद्धिः=मतिः, छिद्रोदकुम्भात् उदकस्य=जलस्य कुम्भः=घटः उदकुम्भः 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' इत्येनेनोदकस्य उदभावो भवति, छिद्रः=छिद्रपूर्णः इति यावत्, य उदकुम्भः तस्मात्=सच्छिद्राज्जलपूर्णाद्घटात्, नित्यम्=अनवरतम्, अम्भः इव=जलमिव 'अम्भोऽर्णस्तोयपानीये'त्याद्यमरः, स्रवते=क्षरयति विनश्यतीत्यर्थः, आत्मनेपदमार्षम् ।

**भावार्थः**—चलेषु षडिन्द्रियेषु विषयासक्तमिन्द्रियं मतिं नाशयतीति ॥

**भाषा**—ये छः ( मन तथा श्रोत्रादि पाँच ) इन्द्रियाँ चलायमान हैं, इनमें जो जो जिस जिस स्थान पर अर्थात् विषय में बढ़ जाती है उस उस स्थान से मनुष्य की बुद्धि छेदवाले घड़े में से जल की भाँति नित्य बाहर निकल जाया करती है ॥ ४८ ॥

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=राजा कुरूणाम्, उवाच=वक्ष्यमाणं पप्रच्छ ।

**तनुरुद्धः शिखी राजा मिथ्योपचरितो मया ।**
**मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ४९ ॥**

**अन्वयः**—तनुरुद्धः मिथ्या उपचरितः शिखी (इव) तनुरुद्धः मया मिथ्या उपचरितः राजा मन्दानां मम पुत्राणां युद्धेन अन्तं करिष्यति ।

**अर्थः—तनुरुद्ध इति** । तनुरुद्धः तनौ=देहे काष्ठरूपे 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनू'रित्यमरः, रुद्धः=आवृतः अनभिव्यक्तः, मिथ्या=वृथा, उपचरितः=पवनादिना प्रकाशतां नीतः, शिखी=अग्निरिव 'शिखावानाशुशुक्षणि'रित्यग्निपर्यायेष्वमरः, तनुरुद्धः=तितिक्षया तनुरुद्धसामर्थ्यः, मया, मिथ्या=व्यर्थं, बाल्ये इति शेषः, उपचरितः=पोषितः पालित इत्यर्थः, राजा=राज्ययोग्यो युधिष्ठिरः, मन्दानां=मूढानां 'मूढाल्पापटुनिर्भाग्या मन्दा' इत्यमरः, मम=मे, पुत्राणां=सुतानां दुर्योधनादीनां, युद्धेन=जन्येन 'युद्धमायोधनं जन्य'मित्यमरः, अन्तं=नाशम् 'अन्तो नाशो द्वयो'रित्यमरः, करिष्यति=विधास्यति ।

**भावार्थः**—अप्रकाशरूपेण स्थितो वह्निर्व्यर्थमेधितो यथा नाशयति, तथैव क्षान्त्या शरीरे सामर्थ्यं बिभ्रद् बाल्ये मिथ्योपलालितो युधिष्ठिरो मूढान् मत्पुत्रान् युद्धे नाशयिष्यतीति ॥

**भाषा**—धृतराष्ट्र बोले—शरीर ( लकड़ी ) में रुकी ( छिपी ) हुई आग की भाँति शान्तिः

द्वारा सामर्थ्य को शरीर में ही दबानेवाले राजा युधिष्ठिर से मैंने कपट का व्यवहार किया है ( इसलिए ) वे मेरे मूढ पुत्रों का युद्धद्वारा नाश कर डालेंगे ॥ ४९ ॥

**नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।**
**यत्तत्पदमनुद्विग्नं तन्मे वद महामते ! ॥ ५० ॥**

**अन्वयः—**हे महामते ! इदं सर्वं नित्योद्विग्नम् , इदं मनः नित्योद्विग्नम् , तत् यत् पदम् अनुद्विग्नं, तत् मे वद ।

**अर्थः—नित्योद्विग्नमिति ।** हे महामते=हे महाबुद्धिमन् विदुर ! इदम्=एतत् , सर्वं= सकलं जगत् , नित्योद्विग्नं नित्यं=सर्वदा उद्विग्नम्=उद्भ्रान्तम् 'उद्वेग उद्भ्रमे' इत्यमरः, अस्ति, इदं मनः=मच्चित्तं, नित्योद्विग्नं=सर्वत्र भ्रान्तमस्ति, तत्=तस्मात्कारणात् , यत् पदं= यत् स्थानम् , अनुद्विग्नम्=उद्वेगशून्यमस्ति, तत्=पदं, मे=मम मां प्रतीति यावत् , वद=कथय ।

**भावार्थः—**उद्भ्रान्ते जगति मन्मनोऽप्युद्विग्नं, तस्मात्तद्भिन्नं पदमुपदिशेति ॥

**भाषा—**यह सारा जगत् नित्य व्याकुल है और यह मन भी नित्य व्याकुल रहता है ; तो हे महाबुद्धिवाले ! जो पद ( स्थान ) स्थिर हो उसे मुझे बताइये ॥ ५० ॥

**विदुर उवाच—**विदुरः=श्रुतराजप्रश्नः, उवाच=उत्तरमकथयत् ।

**नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।**
**नान्यत्र लोभसन्त्यागाच्छान्तिं पश्यामि तेऽनघ ! ॥ ५१ ॥**

**अन्वयः—**हे अनघ ! विद्यातपसोः अन्यत्र न, इन्द्रियनिग्रहात् अन्यत्र न, लोभसन्त्यागात् अन्यत्र ते शान्तिं न पश्यामि ।

**अर्थः—नान्यत्रेति ।** हे अनघ ! नास्ति=न वर्तते अघं=पापं यस्मिन् तत्सम्बुद्धौ 'पापं किल्विषकल्मषम् । कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्' इत्यमरः, हे अनघ=हे निष्कलङ्क राजन् ! विद्यातपसोः विद्या च तपश्च विद्यातपसी तयोः अन्यत्र=विद्यातपोभ्यां विना, न=न शान्तिम् , इन्द्रियनिग्रहात् इन्द्रियाणां निग्रहस्तस्मात्=इन्द्रियसंयमात् , अन्यत्र न, लोभस- न्त्यागात् लोभस्य=आकाङ्क्षायाः सन्त्यागात्=विशेषेण वर्जनाच्च, अन्यत्र=इतरत्र, ते=तव, शान्तिं=शर्म, न, पश्यामि=अवलोकयामि ।

**भावार्थः-**विद्यातपोभ्यामिन्द्रियसंयमनेन लोभत्यागेन च भवतः शान्तिलाभः स्यान्नान्यथेति॥

**भाषा—**विदुर बोले—हे पापरहित ! विद्या, तप, इन्द्रियों का निग्रह तथा लोभ का त्याग इन सब को छोड़ कर और किसी उपाय से तुमको शान्ति मिलती मुझे दिखाई नहीं देती॥५१॥

**बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।**
**गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ५२ ॥**

**अन्वयः—**( नरः ) बुद्ध्या भयं प्रणुदति, तपसा महः विन्दते, गुरुशुश्रूषया ज्ञानं, योगेन शान्तिं विन्दति ।

**अर्थः—बुद्धयेति** । नरः, बुद्धया = सन्मत्या विवेकेनेति यावत् , भयं = भीतिं, प्रणुदति= दूरीकरोति, तपसा = तपश्चर्यया, महः=तेजः 'महस्तूत्सवतेजसो'रित्यमरः, विन्दते=लभते, गुरु-शुश्रूषया गुरोः=सद्गुरोः शुश्रूषा=उपासना तया 'वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासने'त्यमरः ज्ञानं=बोधं, योगेन = ध्यानेन चित्तव्यापाररोधनेन, तथाच पातञ्जलसूत्रम्–'योगश्चित्तवृत्ति-निरोधः' इति, शान्तिं = शमं, विन्दन्ति प्राप्नोति ।

**भावार्थः**—नरो बुद्धितपोगुरुशुश्रूषायोगैर्निर्भयतेजोज्ञानशान्तीः क्रमेणाप्नोतीति शान्ति-कामस्त्वं योगासक्तो भवेति ॥

**भाषा**—मनुष्य बुद्धि से भय को दूर करता है, तपस्या से तेज ( कान्ति ) को प्राप्त करता है, गुरु की सेवा से ज्ञान पाता है तथा योगाभ्यास से शान्ति लाभ करता है ॥ ५२ ॥

**अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।**
**रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५३ ॥**

**अन्वयः**—इह मोक्षिणः दानपुण्यम् अनाश्रिताः रागद्वेषविनिर्मुक्ताः (च सन्तः) विचरन्ति।

**अर्थः—अनाश्रिता इति** । इह = संसारे, मोक्षिणः = मुक्तिकामाः पुरुषाः, दानपुण्यं = दानोत्पद्यमानं पुण्यम् , अनाश्रिताः=अनिच्छन्तः, वेदपुण्यं = वेदाध्ययनश्रवणजन्यं पुण्यमपि, अनाश्रिताः=अनिच्छन्तः, रागद्वेषविनिर्मुक्ता रागश्च द्वेषश्च रागद्वेषौ=प्रेमविरोधौ ताभ्यां विनि-र्मुक्ताः = हीनाश्च सन्तः, विचरन्ति = परिभ्रमन्ति ।

**भावार्थः**—दानजन्यं वेदाद्यध्ययनश्रवणजन्यं च पुण्यमनभिलषन्तो रागद्वेषविहीना अत्र ये सन्ति, त एव मुक्त्यभिलाषिणो ज्ञेयाः । मोक्षेच्छुभिश्च पापपुण्ये विधूय वर्तितव्यमिति ॥

**भाषा**—मोक्ष चाहनेवाले पुरुष दान तथा वेदाध्ययन से मिलनेवाले पुण्य में निरासक्त तथा स्नेह और शत्रुता से अलग रह कर इस संसार में विचरते हैं ॥ ५३ ॥

**स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।**
**तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५४ ॥**

**अन्वयः**-स्वधीतस्य सुयुद्धस्य सुकृतस्य कर्मणः सुतप्तस्य तपसः च तस्य अन्ते सुखम् एधते।

**अर्थः—स्वधीतस्येति** । स्वधीतस्य=यथाविधि कृतस्य वेदादिस्वाध्यायाध्ययनस्य, सु-युद्धस्य = सम्यक् सम्पादितयुद्धकार्यस्य, सुकृतस्य कर्मणः = सदाचरितस्य पुण्यस्य, सुतप्तस्य= सम्यगनुष्ठितस्य, तपसः = तपश्चरणस्य च, तस्य = पूर्वोक्तस्य कार्यकलापस्य कर्तुः पुरुषस्य वा, अन्ते=समाप्तौ, सुखं=शर्म, एधते=वर्धते ।

**भावार्थः**—यथाविधिसमनुष्ठिताध्ययनादिसुखं तदन्ते लभ्यते ॥

**भाषा**—अच्छीतरह किये गये वेदाध्ययन, युद्ध, कर्म ( यज्ञ आदि ) तथा तपस्या का आनन्द, उनका अथवा करनेवाले मनुष्य का अन्त होने पर बढ़ता ( मिलता ) है ॥ ५४ ॥

**स्वास्तीर्णानि शयनानि प्रपन्ना न वै भिन्ना जातु निद्रां लभन्ते ।**
**न स्त्रीषु राजन् ! रतिमाप्नुवन्ति न मागधैः स्तूयमाना न सूतैः ॥५५॥**

**अन्वयः**—हे राजन् ! भिन्नाः स्वास्तीर्णानि शयनानि प्रपन्नाः जातु निद्रां न लभन्ते, स्त्रीषु रतिं न आप्नुवन्ति, मागधैः स्तूयमानाः न, सूतैः न ।

**अर्थः—स्वास्तीर्णानीति** । हे राजन्=हे महीपते ! भिन्नाः=परस्परं पृथग्भूताः पुरुषाः, स्वास्तीर्णानि=सम्यग् आच्छादितानि, शयनानि=निद्रासाधनीभूतानि सोपबर्हाणि शयनीयानि, प्रपन्नाः=प्राप्ता अपि, जातु=कदाचित् , निद्रां=स्वापं 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपी'त्यमरः, न लभन्ते=न प्राप्नुवन्ति, स्त्रीषु=योषित्सु, रतिं=प्रेम, न आप्नुवन्ति=न लभन्ते, मागधैः=मगधैः राज्ञः पुरस्ताद्वंशक्रमस्तावकैरिति यावत् , 'स्युर्मागधास्तु मगधा' इत्यमरः, स्तूयमानाः=प्रशस्यमानाः, न=रतिं न लभन्ते, सूतैः=स्तुतिपाठकैः, न=स्तूयमाना रतिं न लभन्ते ।

**भावार्थः**—स्वजनेषु भेदभावं वहन्तो जनाः सुन्दरशयनीयनिद्रायां स्त्रीषु मागधसूतकर्तृकस्तुतौ च रुचिं न वहन्तीति स्वात्मीयेषु भेदबुद्धिं न विदध्या इति ॥

**भाषा**—अपने बान्धवों से अलग रहनेवाले लोगों को भली भांति बिछी हुई सेज पर भी नींद नहीं आती, वे ( सुन्दर ) स्त्रियों के संसर्ग में अथवा भाटों और चारणों द्वारा स्तुत होने पर भी सुख नहीं पाते ॥ ५५ ॥

**न व भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः ।**
**न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ॥ ५६ ॥**

**अन्वयः**—भिन्नाः जातु धर्मं न चरन्ति वै, भिन्नाः इह सुखं न वै प्राप्नुवन्ति, भिन्नाः गौरवं वै न प्राप्नुवन्ति, भिन्नाः प्रशमं न रोचयन्ति वै ।

**अर्थः—न वै भिन्ना इति** । भिन्नाः=स्वज्ञातिविरोधिनः, जातु=कदाचित , धर्मं=सदाचारं, न चरन्ति=न कुर्वते, वै=निश्चयेन, भिन्नाः, इह=संसारे, सुखम्=आनन्दं, न वै=नैव, प्राप्नुवन्ति=विन्दन्ति, भिन्नाः, गौरवं वै=महत्त्वमपि, न प्राप्नुवन्ति=न लभन्ते, भिन्नाः, प्रशमं=शान्तिं, न रोचयन्ति=न कामयन्ते, वै=पादपूरणे ।

**भावार्थः**—स्वज्ञातिविरोधिनो नरा धर्माचरणं, सुखप्राप्तिं, गौरवलाभं शान्त्यभिलाषं च न कुर्वन्तीति ॥

**भाषा**—आपस में भेदभाव रखनेवाले लोग न तो कभी धर्म का आचरण करते हैं और न कभी इस संसार में सुख तथा गौरव पाते हैं और न शान्ति ही उन्हें भाती है ॥ ५६ ॥

**न वै तेषां स्वदते पथ्यमुक्तं योगक्षेमं कल्पते नैव तेषाम् ।**
**भिन्नानां वै मनुजेन्द्र ! परायणं न विद्यते किञ्चिदन्यद्विनाशात् ॥५७॥**

**अन्वयः**—हे मनुजेन्द्र ! तेषाम् उक्तं पथ्यं न स्वदते, तेषां योगक्षेमं न एव कल्पते, भिन्नानां विनाशात् अन्यत् किञ्चित् परायणं न विद्यते ।

**अर्थः—न वै तेषामिति** । हे मनुजेन्द्र=हे नराधिप ! तेषां=भिन्नानाम् , उक्तं=कथितं, पथ्यं=हितं 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः, न स्वदते=न रोचते, तेषां=भिन्नानां,

योगक्षेमं योगः=उपायः अलब्धलाभोद्योगरूपः क्षेमः=कुशलं लब्धपरिरक्षणरूपं चेत्यनयोः समाहारद्वन्द्वः योगक्षेमं 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु', 'कुशलं क्षेममस्त्रियाम्' इत्यमरौ, न तत्र कल्पते=नैव भवति, भिन्नानां=बन्धुविरोधिनां विनाशात्=नाशात्, अन्यत्=इतरत्, किञ्चित्=किमपि, परायणं=शरणं गतिरिति यावत्, न विद्यते=नास्ति ।

**भावार्थः**—भिन्नानां हितोक्तेररोचकत्वेन योगक्षेमाभावान्नाश एव परिणाम इति ॥

**भाषा**—न तो उन (भेदभाव रखनेवाले) लोगों को हितकर वचन अच्छा लगता है, और न उनका योग (अप्राप्त पदार्थ की प्राप्ति) तथा क्षेम (प्राप्त पदार्थ की रक्षा) वहन होता है। हे राजन्! भेदभाव रखनेवाले लोगों के लिये विनाश के सिवा कोई दूसरा परिणाम नहीं है ॥ ५७ ॥

**सम्पन्नं गोषु सम्भाव्यं सम्भाव्यं ब्राह्मणे तपः ।**
**सम्भाव्यं चापलं स्त्रीषु सम्भाव्यं ज्ञातितो भयम् ॥ ५८ ॥**

**अन्वयः**—गोषु सम्पन्नं सम्भाव्यम्, ब्राह्मणे तपः सम्भाव्यम्, स्त्रीषु चापलं सम्भाव्यम्, ज्ञातितः भयं सम्भाव्यम् ।

**अर्थः—सम्पन्नमिति** । गोषु=धेनुषु, सम्पन्नं=दुग्धादिसम्पत्तिः, भावे क्तः, सम्भाव्यं=कल्पनीयं, ब्राह्मणे=विप्रे, तपः=तपश्चरणं, सम्भाव्यं=तर्कणीयं, स्त्रीषु=योषित्सु, चापलं=चाञ्चल्यं, सम्भाव्यम्=अनुमेयं, ज्ञातितः=बान्धवादिसकाशात्, भयं=साध्वसं, सम्भाव्यं=भावनीयम् ।

**भावार्थः**—गोब्राह्मणयोषित्सु यथा दुग्धतपश्चाञ्चल्यानि सम्भाव्यन्ते तथा ज्ञातेर्भयमपि ॥

**भाषा**—गायों में गोरस, ब्राह्मण में तप, स्त्रियों में चपलता तथा जाति के लोगों से भय की सम्भावना हो सकती है ॥ ५८ ॥

**तन्तवः प्यायिता नित्यं तनवो बहुलाः समाः ।**
**बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम् ॥ ५९ ॥**

**अन्वयः**—बहुलाः समाः नित्यं प्यायिताः तनवः तन्तवः बहुत्वात् बहून् आयासान् सहन्ति—इति सताम् उपमा ।

**अर्थः—तन्तव इति** । बहुलाः=अनेकाः, समाः=वत्सरान् यावत्, 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः, नित्यं=सर्वदा, प्यायिताः=वृद्धिं नीताः दृढीकृता इति यावत्, तनवः=सूक्ष्माः कृशाः 'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु' इत्यमरः, तन्तवः=सूत्राणि 'सूत्राणि नरि तन्तवः' इत्यमरः, तत्सादृश्यादत्र तन्तवः=कुलतन्तवः युधिष्ठिरादयः, बहुत्वात्=भूयस्त्वात्, बहून्=बहुलान्, आयासान्=दुःखानि, सहन्ति=सहन्ते मर्षणं कुर्वन्ति, सहतेः परस्मैपदमार्षम्,—इति=एषा, सतां=सज्जनानाम्, उपमा=सादृश्यम् ।

**भावार्थः**—बहुवर्षपर्यन्तं पोषिताः पाण्डवाः सहन्तेऽतितरां दुःखमितीयं सतां रीतिः ॥

**भाषा**—बालक पाण्डव आपके द्वारा बहुत वर्षों तक पाले पोसे गये हैं। अब वे (वन में) बहुत होने के कारण बहुत से कष्टों को झेलते हुए सज्जनों के लिए उपमान हो रहे हैं ॥५९॥

**धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।**
**धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ! ॥ ६० ॥**

**अन्वयः—**हे भरतर्षभ ! हे धृतराष्ट्र ! ज्ञातयः व्यपेतानि उल्मुकानि इव धूमायन्ते, सहितानि च ज्वलन्ति ।

**अर्थः—धूमायन्त इति** । हे भरतर्षभ = हे भरतकुलश्रेष्ठ, हे धृतराष्ट्र ! ज्ञातयः=बन्धवः, व्यपेतानि=व्यस्तानि, उल्मुकानि इव = अलातानीव ज्वलत्काष्ठानीवेत्यर्थः, 'अथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्' इत्यमरः, धूमायन्ते=धूमवदाचरन्ति, कष्टप्रदा भवन्ति, सहितानि च= मिलितानि तु, चस्त्वर्थे, ज्वलन्ति = दीप्यन्ते ।

**भावार्थः—**अलातानि यथा मिलितानि ज्वलन्ति व्यस्तानि च धूमं कुर्वते तथा ज्ञातयोऽपि भेदं प्राप्ता दुःखप्रदा भवन्ति, सङ्गताश्च सुखपूर्णा भवन्तीति ज्ञातिभेदस्त्याज्य इति ॥

**भाषा—**हे धृतराष्ट्र ! सगोत्र लोग जलती हुई लकड़ियों की भाँति होते हैं। वे अलग होने पर धूमिल ( मलिन अथवा धूम्रयुक्त ) हो जाते हैं और इकट्ठा होने पर प्रज्वलित (तेजयुक्त अथवा बलते हुए ) हो उठते हैं ॥ ६० ॥

**ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।**
**वृन्तादिव फलं पक्वं धृतराष्ट्र ! पतन्ति ते ॥ ६१ ॥**

**अन्वयः—**हे धृतराष्ट्र ! ये ब्राह्मणेषु स्त्रीषु ज्ञातिषु गोषु च शूराः ( सन्ति ), ते वृन्तात् पक्वं फलम् इव पतन्ति ।

**अर्थः—ब्राह्मणेष्विति** । हे धृतराष्ट्र ! ये = नराः, ब्राह्मणेषु = विप्रेषु, स्त्रीषु = अबलासु, ज्ञातिषु = बान्धवेषु, गोषु च = धेनुष्वपि, शूराः=शौर्यप्रदर्शकाः सन्ति, ते = नराः, वृन्तात् = प्रसवबन्धनात् 'वृन्तं प्रसवबन्धन'मित्यमरः, पक्वं = परिपाकं गतं, फलमिव, पतन्ति = अधो यान्ति नश्यन्तीति ॥

**भावार्थः—**ब्राह्मणादिषु शौर्यदर्शकाः पुरुषा विनश्यन्तीति ॥

**भाषा—**हे धृतराष्ट्र ! जो लोग ब्राह्मणों, स्त्रियों, बान्धवों तथा गायों पर ( पीड़न आदि द्वारा ) वीरता दिखलाते हैं, वे इसतरह नष्ट हो जाते है जैसे पका फल वृन्त ( नाकू ) से टपक पड़ता है ॥ ६१ ॥

**महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः ।**
**प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥ ६२ ॥**

**अन्वयः—**बलवान् सुप्रतिष्ठितः सस्कन्धः महान् अपि एकजः वृक्षः वातेन क्षणात् मर्दितुं प्रसह्यः एव ।

**अर्थः—महानिति** । बलवान्=दृढः, सुप्रतिष्ठितः=बद्धमूलः, सस्कन्धः स्कन्धः=प्रकाण्डः शाखाद्युत्पत्तिस्थानमिति यावत्, 'अस्त्री प्रकाण्डः स्कन्धः स्या'दित्यमरः, तेन सह वर्तत इति

सस्कन्धः, महान् अपि=विशालोऽपि उच्चतनोऽपि वा, एककः=असहायः, वृक्षः=महीरुहः 'वृक्षो महीरुहः शाखी विटपी पादपस्तरु'रित्यमरः, वातेन = पवनेन 'नभस्वद्वातपवने'त्यमरः, क्षणात्= क्षणेन, मर्दितुम्=उन्मूलयितुं पातयितुमिति यावत्, प्रसह्यः एव = शक्य एवास्ति ।

**भावार्थः**—सर्वथा स्थिरोऽपि तरुरसहायः सन् वातेन यथा समूलं पात्यते तथैव सर्वविध-शक्तिसम्पन्नोऽपि पुमान् सुखेन नाश्यत एवेति ॥

**भाषा**—भली भांति प्रतिष्ठित ( मजबूत—जड़वाला ) तथा दृढ वृक्ष भी अकेला होने पर वायुद्वारा तना समेत क्षणभर में नष्ट किया जा सकता है ॥ ६२ ॥

**अथ ये सहिता वृक्षाः संघशः सुप्रतिष्ठिताः ।**
**ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसंश्रयात् ॥६३॥**

**अन्वयः**—अथ ये वृक्षाः सहिताः सङ्घशः सुप्रतिष्ठिताः ( सन्ति ), ते अन्योन्यसंश्रयात् शीघ्रतमान् वातान् सहन्ते ।

**अर्थ—अथेति** । अथ = अथो, ये, वृक्षाः=पादपाः, सहिताः = मिलिताः, सङ्घशः=सङ्घ-रूपेण, सुप्रतिष्ठिताः = सम्यग्बद्धमूलाः सञ्जाताः, सन्ति, ते = वृक्षाः, अन्योन्यसंश्रयात्=परस्परा-श्रयात्, शीघ्रतमान् = अतिवेगवतः, वातान् = पवनान् महावातानित्यर्थः, सहन्ते=मर्षन्ति ।

**भावार्थः**—एकत्र स्थिता अनेके तरवः परस्पराश्रयेण यथा महावातानपि सहमानास्तिष्ठन्ति, तथैव मिलिता बन्धवः परस्परसाहाय्येन विपदोऽभिभूय विराजन्त इति ॥

**भाषा**—और जो वृक्ष एक साथ समूहरूप से जड पकड़े रहते हैं, वे एक दूसरे के अवलम्ब से तेज से तेज आँधी को सह लेते हैं ॥ ६३ ॥

**एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।**
**शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६४ ॥**

**अन्वयः**—एवं द्विषन्तः गुणैः अपि समन्वितम् एकम् अपि मनुष्यं वायुः एकजं द्रुमम् इव शक्यं मन्यन्ते ।

**अर्थः—एवमिति** । एवम्=उक्तप्रकारेण, द्विषन्तः=शत्रवः, गुणैः=शौर्यौदार्यादिभिरपि, समन्वितं=युक्तम्, एकम् अपि=एकाकिनमपि 'एकाकी त्वेक एकक' इत्यमरः, मनुष्यं = नरं, वायुः = पवनः, एकजम्=असहायं, द्रुमम् इव = अनोकहमिव 'अनोकहः कुटः शालः पलाशी द्रुद्रुमाऽगमा' इत्यमरः, शक्यं=योग्यं, नाशयितुमिति शेषः, मन्यन्ते = सम्भावयन्ति ।

**भावार्थः**—पवनोऽसहायं वृक्षमिव शत्रवोऽप्यसहायं सुगुणमपि नरं नाशयितुं समर्था भवन्तीति ॥ ६४ ॥

**भाषा**—जैसे पवन अकेले वृक्ष को उखाड़ सकता है, वैसे ही गुणों से युक्त होने पर भी अकेले उस आदमी को शत्रु नष्ट कर देने योग्य समझते हैं ॥ ६४ ॥

**अन्यान्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।**
**ज्ञातयः सम्प्रवर्धन्ते सरसीवोत्पलान्युत ॥ ६५ ॥**

**अन्वयः**—ज्ञातयः सरसि उत्पलानि इव अन्योन्यसमुपष्टम्भात् उत अन्योन्यापाश्रयेण च सम्प्रवर्धन्ते ।

**अर्थः—अन्योन्यसमुपष्टम्भादिति** । ज्ञातयः=सगोत्राः 'सगोत्रबान्धवज्ञातिबन्धुस्व-स्वजनाः समा'इत्यमरः, सरसि=कासारे 'कासारः सरसी सर' इत्यमरः, उत्पलानि इव=कुवलया-नीव 'स्यादुत्पलं कुवलय'मित्यमरः, अन्योन्यसमुपष्टम्भात् अन्योन्यस्य=परस्परस्य समुपष्टम्भः=सुसम्बन्धः तस्मात्, उत=उताहो, अन्योन्यापाश्रयेण अन्योन्यस्य=परस्परस्य अपाश्रयः=साहाय्यं तेन च, सम्प्रवर्धन्ते=विस्तारमुन्नतिं च लभन्ते ।

**भावार्थः**—कमलानि यथा सरस्यां परस्परसम्बन्धसाहाय्यालम्बनेन वृद्धिमुपयान्ति तथैव ज्ञातयोऽपि परस्परं सम्बन्धं साहाय्यं च प्राप्य वर्धन्त इति ॥

**भाषा**—सगोत्र लोग एक दूसरे के सम्बन्ध तथा सहायता से इस प्रकार बढ़ते हैं जैसे तालाब में कमल ॥ ६५ ॥

**अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः ।**
**येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ६६ ॥**

**अन्वयः**—ब्राह्मणाः गावः ज्ञातयः शिशवः स्त्रियः येषाम् अन्नानि भुञ्जीत, ये च शरणा-गताः स्युः, ( तेऽपि ) अवध्याः ( सन्ति ) ।

**अर्थः—अवध्या इति** । ब्राह्मणाः=विप्राः, गावः=धेनवः, ज्ञातयः=बन्धवः, शिशवः=अर्भकाः 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशु'रित्यमरः, स्त्रियः=नार्यः, येषां=पुरुषा-णाम् , अन्नानि=भोज्यवस्तूनि, भुञ्जीत=अद्यात् , यदाश्रयेण जीविकानिर्वाहः स्यादित्यर्थः, ये च=ये पुरुषाश्च, शरणागताः='मां रक्षे'ति कथयन्तः समीपं प्राप्ताः, स्युः=भवेयुः, तेऽपि=ते पुरुषा अपि, अवध्याः=हन्तुमयोग्याः, सन्ति ।

**भावार्थः**—विप्रधेनुबन्धुशिशुस्त्रीभोजनदातृशरणागतानां रक्षणमेव कार्यं, न तु ते हन्तव्या इति॥

**भाषा**—ब्राह्मण, गायें, स्वजन, बच्चे, स्त्रियों, जिनका अन्न खाया जाय और जो शरण मे आये हों, ( ये सब ) अवध्य ( न मारने के योग्य ) हैं ॥ ६६ ॥

**न मनुष्ये गुणः कश्चिद्राजन् ! सधनतामृते ।**
**अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ६७ ॥**

**अन्वयः**—हे राजन् ! सधनताम् ऋते मनुष्ये कश्चित् गुणः न, अनातुरत्वात् ते भद्रम् , हि रोगिणः मृतकल्पाः ( भवन्ति ) ।

**अर्थः—नेति** । हे राजन्=हे नृप ! सधनतां=धनिकत्वम् , ऋते=विना, 'पृथग्विनान्तरे-र्ते' इत्यमरः, मनुष्ये=मानवे, कश्चित्=कोऽपि, गुणः, न=नास्ति, अनातुरत्वात्=रोगरहित-त्वाद्धेतोः, ते=तव, भद्रं=कल्याणम् , अस्तु, हि=यतः, रोगिणः=रोगवन्तः, मृतकल्पाः ईष-न्न्यूनाः मृताः=प्रमीताः 'मृतप्रमीता'वित्यमरः, मृतकल्पाः=मृततुल्या इत्यर्थः, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति कल्पप्प्रत्ययः, भवन्ति

**भावार्थः**—रोगिणो मृततुल्या भवन्ति, न भवांस्तथा, मनुष्ये तु सधनत्वान्नापरः कश्चिद् गुणः, सच त्वय्यस्तीति ते श्रेयो भवत्विति ॥

**भाषा**—हे राजन्! मनुष्य में धनी होने के सिवा और कोई गुण नहीं है, अस्वस्थ न होने के कारण आप का कल्याण हो, क्योंकि रोगी मरे मरे हुए के समान होते हैं ॥ ६७ ॥

**अव्याधिजं कटुकं शीर्षरोगि पापानुबन्धं परुषं तीक्ष्णमुष्णम्।**
**सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज! पिब प्रशाम्य ॥६८॥**

**अन्वयः**—हे महाराज! अव्याधिजं कटुकं शीर्षरोगि पापानुबन्धं परुषं तीक्ष्णम् उष्णं सतां पेयम् असन्तः यं न पिबन्ति, (तं) मन्युं पिब, प्रशाम्य।

**अर्थः**—क्रोधं जेतुमुपदिशति—**अव्याधिजमिति**। हे महाराज = हे प्रभो! अव्याधिजं= रोगानुत्पन्नं, कटुकं = मरीचादिस्वादतुल्यं, 'रसे कटुः' इत्यमरः, शीर्षरोगि = शिरोव्याधिकरं, क्लीबत्वमार्षम्, पापानुबन्धं पापस्य अनुबन्धः=अनुवर्तनं यस्मिस्तं = पापकरं, परुषं = रूक्षं, तीक्ष्णं = तिग्मं 'तिग्मं तीक्ष्णं खरं तद्'दित्यमरः, उष्णं = सोष्म तद्दसह्यमिति यावत्, सतां= सज्जनानां सद्भिरित्यर्थः, पेयं=पातुमर्हम्, असन्तः=दुर्जनाः, यं न पिबन्ति, तं मन्युं=क्रोधं दैन्यं वा 'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरः, त्वमिति शेषः, पिब = उदरे स्थापय बहिर्मा कृथाः, अपिच प्रशाम्य = शान्तिमुपेहि, शाम्यतेर्लोटि मध्यमपुरुषैकवचनेऽयं प्रयोगः।

**भावार्थः**—अव्याधिजत्वादिगुणविशिष्टं क्रोधं दैन्यं वा नियमय, तेनैव शान्तिमुपैष्यसीति॥

**भाषा**—हे महाराज! रोग से न उत्पन्न होनेवाले, कड़वे, सिरमें पीड़ा उत्पन्न करनेवाले, पाप उत्पन्न करनेवाले, कठोर, तीखे, गर्म, सज्जनों के पीने तथा असज्जनों के न पीने योग्य क्रोध अथवा दैन्य को पी लीजिए (रोक लीजिए) और शान्त हो जाइये ॥ ६८ ॥

**रोगार्दिता न फलान्याद्रियन्ते न वै लभन्ते विषयेषु तत्त्वम्।**
**दुःखोपेता रोगिणो नित्यमेव न बुध्यन्ते धनभोगान्न सौख्यम् ॥६९॥**

**अन्वयः**—रोगार्दिताः फलानि न आद्रियन्ते, विषयेषु तत्त्वं न लभन्ते वै, रोगिणः नित्यम् एव दुःखोपेताः (सन्तः) धनभोगान् न, सौख्यं (च) न बुध्यन्ते।

**अर्थः**—**रोगार्दिता इति**। रोगार्दिता रोगेण—व्याधिना अर्दिताः=पीडिताः पुरुषाः, फलानि=पुत्रादीन्, न आद्रियन्ते=न सत्कुर्वते, विषयेषु=भोग्यवस्तुषु तत्त्वं=सारासारविवेकमिति यावत्, न लभन्ते = न प्राप्नुवन्ति, वै = निश्चयेन, रोगिणः = रोगग्रस्ताः पुरुषाः, नित्यमेव=सदैव, दुःखोपेताः दुःखेन = व्यथया उपेताः = युक्ताः दुखोपेताः = व्यथिताः सन्तः, धनभोगान्=द्रव्याद्युपभोगान्, न = न बुध्यन्ते, सौख्यं = सुखं च, न बुध्यन्ते=नावगच्छन्ति।

**भावार्थः**—रोगिणो दुःखग्रस्ता न पुत्रादरं, न विषयविवेकज्ञानं, न धनभोगसुखादि च लभन्ते॥

**भाषा**—रोग से पीड़ित मनुष्य न तो (जीवन के) फलों (पुत्र पशु आदि) का ही आदर करते हैं और न तो पदार्थों के असलियत को ही पाते (जानते) हैं। नित्य ही दुःख से युक्त होने के कारण रोगी कभी भी धन का भोग तथा सुख का अनुभव नहीं करते ॥ ६९ ॥

**पुरा ह्युक्तं नाकरोस्त्वं वचो मे द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् !।**
**दुर्योधनं वारयेत्यक्षवत्यां कितवत्वं पण्डिता वर्जयन्ति ॥ ७० ॥**

**अन्वयः**—हे राजन् ! त्वं पुरा द्यूते जितां द्रौपदीं प्रेक्ष्य 'दुर्योधनं वारय' इति उक्तं मे वचः न अकरोः । पण्डिताः अक्षवत्यां कितवत्वं वर्जयन्ति ।

**अर्थः**—विदुरकृतं राजोपालम्भं दर्शयति—**पुरेति** । हेराजन्=हे महीपते! त्वं = भवान्, पुरा = पूर्वं, द्यूते = द्यूतक्रीडायां, जितां = विजिता, द्रौपदीं = पाञ्चालीं, प्रेक्ष्य = दृष्ट्वा, दुर्योधनं= स्वपुत्रं, वारय=निवर्तय, इति=एवम्, उक्तं = कथितं, मे=मम, वचः = वाक्यं, न अकरोः = न व्यदधाः । पण्डिताः = बुधाः, अक्षवत्यां = द्यूते 'द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपी'त्यमरः, कितवत्वं = द्यूतकृत्त्वं, 'धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः' इत्यमरः, वर्जयन्ति=निषेधन्ति।

**भावार्थः**—यदा पाण्डवैः समं द्यूतं विधाय द्रौपदीं जिगाय दुर्योधनस्तदा तदवलोक्य तस्मान्निवारणे प्रयुक्तं मद्वचो निशम्यापि विद्वत्संमनात् द्यूतकैतवान्न पुरा दुर्योधनं वारितवान् भवानिति नोचितमेतत् कृतं भवतेति ॥

**भाषा**—हे राजन् ! जुए में जीती हुई द्रौपदी को देखकर मैंने जो आपसे पहले कहा था कि 'दुर्योधन को जुआ खेलने से रोकिए, क्योंकि जुए में आसक्ति रखने को पण्डित लोग बुरा कहते हैं' उसे आपने नहीं किया ॥ ७० ॥

**न तद्बलं यन्मृदुना विरुध्यते सूक्ष्मो धर्मस्तरसा सेवितव्यः ।**
**प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥७१॥**

**अन्वयः**—तत् बलं न, यत् मृदुना ( सह ) विरुध्यते, धर्मः सूक्ष्मः, (सः) तरसा सेवितव्यः, श्रीः क्रूरसमाहिता ( सती ) प्रध्वंसिनी ( भवति ), मृदुप्रौढा ( च सती ) पुत्रपौत्रान् गच्छति ।

**अर्थः**—**न तदिति** । तत्, बलं = सामर्थ्यं, न=नास्ति, यत्, मृदुना = कोमलेन दुर्बलेन सह, विरुध्यते=विरोधः क्रियते, धर्मः, सूक्ष्मः = दुर्ज्ञेयः, अस्ति, सः, तरसा=बलेन, सेवितव्यः= आश्रयणीयः, धर्मपूर्वकं बलप्रयोगः कर्तव्यः, श्रीः = सम्पत्, क्रूरसमाहिता क्रूरे = दयादिगुण-वर्जिते कठोराशये पुंसि, समाहिता = साधु स्थापिता सती, प्रध्वंसिनी = विनश्वरा, भवति, अपगच्छतीत्यर्थः, मृदुप्रौढा मृदुना=कोमलेन दयालुना प्रौढा = प्रकर्षेण धृता सती, प्रौढेत्यत्र 'प्रादूहोढोढ्येषैष्येषु' इति वार्तिकेन वृद्धिः, पुत्रपौत्रान् पुत्राश्च पौत्राश्च तान् = पुत्रान् पुत्रपुत्रांश्चेत्यर्थः, गच्छति = अनुसरति ।

**भावार्थः**—दुर्बलेन विरोधकरणं न बलस्वरूपम्, बलं च धर्मानुसार्येव प्रयोक्तुमुचितम्, क्रूरः पुरुषः प्राप्तामपि सम्पत्तिं नाशयति, दयालुश्च तां स्वसन्तानपरम्परायां प्रापयितुं प्रभवतीति॥

**भाषा**—वह बल बल नहीं जो कि दुर्बल के साथ विरोध किया जाय, धर्म सूक्ष्म है और बल से ( उसका ) सेवन करना चाहिये, अर्थात् बल का प्रयोग धर्म के साथ करना चाहिए, सम्पत्ति क्रूर मनुष्य के हस्तगत होने से नष्ट हो जाती है तथा दयालु के हस्तगत होने से पुत्र-पौत्र आदि परम्परा तक बनी रहती है ॥ ७१ ॥

**धार्तराष्ट्राः पाण्डवान् पालयन्तु पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।**
**एकारिमित्राः कुरवो ह्येककार्या जीवन्तु राजन्! सुखिनः समृद्धाः ॥७२॥**

**अन्वयः—**धार्तराष्ट्राः पाण्डवान् पालयन्तु, पाण्डोः सुताः च तव पुत्रान् पान्तु, हे राजन्! एकारिमित्राः एककार्याः कुरवः समृद्धाः सुखिनः ( च सन्तः ) जीवन्तु ।

**अर्थः—धार्तराष्ट्रा इति ।** धार्तराष्ट्राः धृतराष्ट्रस्य अपत्यानि पुमांसः धार्तराष्ट्राः=दुर्योधनप्रभृतयः, पाण्डवान्=पाण्डुपुत्रान् युधिष्ठिरादीन् , पालयन्तु = रक्षन्तु, पाण्डोः सुताः च = पाण्डवाश्च, तव = ते, सुतान् = पुत्रान् , पान्तु=रक्षन्तु । हे राजन् = हे नृप ! एकारिमित्राः एके एव=समाना एव अरयः=शत्रवः मित्राणि=सुहृदश्च येषां ते, एकमेव = अभिन्नं प्रजापालनादि स्वोत्कर्षरूपं च कार्यं=कृत्यं येषां तथाभूताः, कुरवः=पाण्डवा धार्तराष्ट्राश्च, समृद्धाः= सम्पन्नाः, सुखिनः = सौख्ययुक्ताश्च सन्तः, जीवन्तु=प्राणन्तु प्राणान् दधतु ।

**भावार्थः—**पाण्डवेभ्यो धार्तराष्ट्राणां तेभ्यश्च पाण्डवानां रक्षणं भवतु, तथा समकार्याः सममित्रशत्रवश्च उभये ते सुखं समृद्धिं च प्राप्नुवन्त्विति ॥

**भाषा—**धृतराष्ट्र के पुत्र पाण्डवों की रक्षा करें और पाण्डु के पुत्र तुम्हारे पुत्रों की रक्षा करें । ( इस प्रकार ) सारे कुरुवंशी एकशत्रुमित्रवाले तथा एक कार्य करनेवाले होकर सुख तथा समृद्धि के साथ जियें ॥ ७२ ॥

**मेढीभूतः कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाजमीढ ! ।**
**पार्थान् बालान् वनवासप्रतप्तान् गोपायस्व स्वं यशस्तात ! रक्षन् ॥७३॥**

**अन्वयः—**हे आजमीढ ! त्वं कौरवाणां मेढीभूतः ( असि ), अद्य कुरुकुलं त्वयि आधीनम् ( अस्ति ), हे तात ! स्वं यशः रक्षन् त्वं वनवासप्रतप्तान् बालान् पार्थान् गोपायस्व ।

**अर्थः—मेढीभूत इति ।** हे आजमीढ=हे अजमीढवंशज धृतराष्ट्र ! त्वं=भवान् , कौरवाणां =कुरुवंश्यानां, मेढीभूतः=स्तम्भीभूतः प्रतिरोधक इति यावत् , असि, अद्य=अस्मिन् दिने साम्प्रतमित्यर्थः, 'अद्यात्राह्नी'त्यमरः, कुरुकुलं = कुरुवंशः, त्वयि=भवति, आधीनम् आसमन्ताद् अधीनम् ,। आधीनं = पूर्णरूपेणायत्तमस्ति, हे तात=हे प्रभो !, स्वं=स्वीयं, यशः=कीर्तिं, रक्षन्=पालयन् , त्वं, वनवासप्रतप्तान् वने = अरण्ये 'अटव्यरण्यं विपिनं गहनं काननं वन'मित्यमरः, वासः = निवासः तेन प्रतप्तान्=सन्तप्तान् दुःखिन इति यावत् , बालान्=बालकान् , पार्थान्=पाण्डवान् , गोपायस्व=गोपाय, पालयेत्यर्थः ।

**भावार्थः—**कुरूणामीश्वरं त्वां सर्वमेव तत्कुलमवलम्बतेऽतः स्वयशोरक्षणपूर्वं पुत्रैः समं पाण्डवानपि पालयेति ॥

**भाषा—**हे अजमीढ के वंशज ! इस समय आप कौरवों के स्तम्भस्वरूप हैं, कौरववंश आपही के अधीन है । हे तात ! अपने यश की रक्षा करते हुए वनवास से दुःखी बालक कुन्ती के पुत्रों की रक्षा कीजिए ॥ ७३ ॥

**सन्धत्स्व त्वं कौरव ! पाण्डुपुत्रैर्मा तेऽन्तरं रिपवः प्रार्थयन्तु ।**
**सत्ये स्थितास्ते नरदेव ! सर्वे दुर्योधनं स्थापय त्वं नरेन्द्र ! ॥ ७४ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि चतुर्थोऽध्यायः ।

अन्वयः—हे कौरव ! त्वं पाण्डुपुत्रैः सन्धत्स्व, रिपवः ते अन्तरं मा प्रार्थयन्तु, हे नरदेव ! सर्वे ते सत्ये स्थिताः ( सन्ति ), हे नरेन्द्र ! त्वं दुर्योधनं स्थापय ।

**अर्थः—सन्धत्स्वेति** । हे कौरव=हे कुरुवंशीय ! त्वं=भवान् , पाण्डुपुत्रैः=पाण्डवैः, सहेति शेषः, सन्धत्स्व=सन्धेहि सन्धि कुरु, ते=पाण्डवाः रिपवः=शत्रवः सन्तः, अन्तरं= भेदं प्रति 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः, मा प्रार्थयन्तु=नोत्सहन्ताम् , हे नरदेव=हे नरपते ! सर्वे=सकलाः, ते=युधिष्ठिरादयः, सत्ये=सन्मार्गे, स्थिताः=वर्तमानाः सन्ति, हे नरेन्द्र=हे प्रजाधीश ! त्वं, दुर्योधनं=स्वं ज्येष्ठपुत्रं, स्थापय=सत्यमार्गे स्थिरीकुरु युद्धोद्योगतश्च निवर्तय ।

**भावार्थः—**सन्मार्गस्थैः पाण्डवैः सह सन्धाय पुत्रं युद्धान्निवर्तय, येनान्ये द्विषन्तो न लभन्तामन्तरमिति ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिनिर्मितायां तत्त्वार्थदर्शिन्याख्यायां विदुरनीति-
व्याख्यायां चतुर्थोऽध्यायः समाप्तः ।

**भाषा—**हे कुरुवंशी राजा ! आप पाण्डु के पुत्रों से सन्धि कर लीजिए, वे शत्रु होते हुए भेद करने की ओर उत्साह न करें । हे राजन् ! वे सब ( पाण्डव ) सत्य पर टिके हैं। दुर्योधन को भी आप सत्य पर टिकावें और युद्ध के उद्योग से रोकें ॥ ७४ ॥

श्री अनन्तरामशास्त्री वेताल कृत विदुरनीति की हिन्दी भाषा टीका सरलार्थ-
बोधिनी का चतुर्थ अध्याय समाप्त ।

---

## पञ्चमोऽध्यायः ।

**विदुर उवाच—**विदुरः=नीतिज्ञः, उवाच=पुनरप्यग्रे कथयामास ।

**सप्तदशेमान् राजेन्द्र ! मनुः स्वायम्भुवोऽब्रवीत् ।**
**वैचित्रवीर्य ! पुरुषानाकाशं मुष्टिभिघ्नतः ॥ १ ॥**
**दानवेन्द्रस्य च धनुरनाम्यं नमतोऽब्रवीत् ।**
**अथो मरीचिनः पादानग्राह्यान् गृह्णतस्तथा ॥ २ ॥**
**यश्चाशिष्यं शास्ति वै यश्च तुष्येद्यश्चातिवेलं भजते द्विषन्तम् ।**
**स्त्रियश्च यो रक्षति भद्रमश्नुते यश्चाऽयाच्यं याचते कत्थते वा ॥३॥**

यश्चाभिजातः प्रकरोत्यकार्यं यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति यश्चाकाम्यं कामयते नरेन्द्र ! ॥४॥
वध्वाऽवहासं श्वशुरो मन्यते यो वध्वाऽवसन्नभयो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं स्त्रियं च यः परिवदतेऽतिवेलम् ॥ ५ ॥
यश्चापि लब्ध्वा न स्मरामीति वादी दत्त्वा च यः कत्थति याच्यमानः ।
यश्चासतः सत्त्वमुपानयीत एतान्नयन्ति निरयं पाशहस्ताः ॥ ६ ॥

**अन्वयः**—हे नरेन्द्र=हे राजेन्द्र ! हे वैचित्रवीर्य ! स्वायम्भुवः मनुः–'यः च अशिष्यं शास्ति, यः तुष्येत्, यः च अतिवेलं द्विषन्तं भजते, यः च स्त्रियः रक्षति भद्रम् अश्नुते, यः च अयाच्यं याचते, कत्थते वा, अभिजातः यः च अकार्यं प्रकरोति, अबलः यः च बलिना नित्य-वैरी, यः अश्रद्दधानाय ब्रवीति, यः च अकाम्यं कामयते, यः श्वशुरः वध्वा ( सह ) अवहासं मन्यते, यः वध्वा अवसन्नभयः ( सन् ) मानकामः ( अस्ति ), यः च परक्षेत्रे बीजं निर्वपति, यः च स्त्रियम् अतिवेलं परिवदते, यः च लब्ध्वा अपि 'न स्मरामि' इति वादी, यः च दत्त्वा याच्यमानः कत्थित, यः च असतः सत्त्वम् उपानयीत, इमान् सप्तदश पुरुषान् मुष्टिभिः आकाशं घ्नतः अनाम्यं दानवेन्द्रस्य धनुः नमतः च, अथो तथा अग्राह्यान् मरीचिनः पादान् गृह्णतः—अब्रवीत् । पाशहस्ताः एतान् निरयं नयन्ति ( इति च ) अब्रवीत् ।

**अर्थः**—नरकगामिनो मूर्खान् निर्दिशति षड्भिः पद्यैराद्यैः–**सप्तदशेत्यादि** । हे नरेन्द्र= हे नृपाल !, हे राजेन्द्र=महाराज !, हे वैचित्रवीर्य विचित्रवीर्यस्य अपत्यं पुमान् वैचित्रवीर्यः तत्सम्बुद्धौ हे वैचित्रवीर्य=हे धृतराष्ट्र ! स्वायम्भुवः स्वयम्भुवोऽपत्यं पुमान् स्वायम्भुवः= स्वायम्भुवनाम्ना प्रसिद्धः, मनुः=कल्पभेदेन सृष्टिकर्ता, यः च=यः पुरुषश्च, अशिष्यं=शासना-नर्हं, शास्ति=शिक्षयति उपदिशतीत्यर्थः, अथ च यः दुराचरणेन तुष्येत्=प्रसीदेत् तुष्यतीति यावत्, वर्तमानेऽत्र लिङः प्रयोगः, यः च=यः पुनः, अतिवेलं=भृशं, द्विषन्तं=शत्रुं, भजते= सेवते आश्रयतीत्यर्थः, यश्च, स्त्रियः=दारान्, रक्षति=वृत्तिलोभेन पालयति, तेन च, भद्रं= कल्याणं 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभ'मित्यमरः, अश्नुते=प्राप्नोति मन्यत इत्यर्थः, यश्च, अयाच्यं=याचनानर्हं, याचते = प्रार्थयते, कत्थते वा=आत्मश्लाघां वा करोति, अभिजातः =सत्कुलोत्पन्नः 'अभिजातस्तु कुलजे बुधे' इत्यमरः, यश्च=यः पुरुषः, अकार्यम्=अकृत्यं, प्रकरोति=विशेषेण कुरुते, अबलः=बलहीनः, यश्च, बलिना=शक्तिमता पुंसा, नित्यवैरी नित्यं= सर्वदा वैरी = विद्वेषकर्ता 'वैरं विरोधो विद्वेष' इत्यमरः, भवति, यः, अश्रद्दधानाय=श्रद्धाहीनाय, ब्रवीति=शास्त्रादिकं समुपदिशति, यश्च, अकाम्यम् = अनभिलषणीयं, कामयते=इच्छति, यः श्वशुरः=पत्युः पिता, वध्वा=स्नुषया 'वधूर्जाया स्नुषा स्त्री चे'त्यमरः, पुत्रपत्न्येति यावत्, सहेति शेषः, अवहासं=परिहासं, मन्यते=उचितं जानाति करोतीत्यर्थः, यः, वध्वा=स्नुषया तद्द्वारेत्यर्थः, अवसन्नभयः अवसन्नं=नष्टं भयं=भीतिः यस्य सः तादृशः सन्, मानकामः=

सम्मानाकाङ्क्षी अस्ति, यश्च, परक्षेत्रे परस्य=स्वेतरस्य क्षेत्रं=केदारः 'पुन्नपुंसकयोर्वप्रः केदारः क्षेत्र'मित्यमरः, तस्मिन्, बीजं निर्वपति=वपति, यश्च, स्त्रियं=योषितम्, अतिवेलं=भृशं कुलमर्यादामतिक्रम्य वा, परिवदते=निन्दति, वदतेरात्मनेपदमार्षम्, यश्च, लब्ध्वा अपि= धनादिकमवाप्यापि, न स्मरामि=न मे स्मृतिरस्यास्ति, इति=एवं, वादी=भाषमाणः, गृहीत्वापि प्रत्यर्पणानिच्छयाऽस्वीकर्तेति यावत्, यश्च, याच्यमानः=अभ्यर्थ्यमानः, दत्त्वा=वितीर्य, कत्थति= कत्थते श्लाघते, परस्मैपदमार्षम्, दाताहमित्यात्मानं प्रकाशयितुं कथयतीति यावत्, यश्च, असतः=अवर्तमानस्य, सत्त्वं=सत्ताम्, उपानयीत=स्थापयेत् स्थापयतीति यावत्, लडर्थे लिङ्, इमान्=वक्ष्यमाणान्, सप्तदश=सप्तदशसङ्ख्याकान्, पुरुषान्=नरान्, मुष्टिभिः= बद्धाङ्गुलिभिः पाणिभिः, आकाशं=विहायः 'पुंस्याकाशविहायसी' इत्यमरः, शून्यमित्यर्थः, घ्नतः=मारयतः, अनाम्यं=नमयितुमशक्यं ज्योतिःपूर्णत्वात्, दानवेन्द्रस्य दनूनां=मेघानां समूहो दानवं=मेघमाला तस्य इन्द्रः=स्वामी दानवेन्द्रः तस्य दानवेन्द्रस्य=शक्रस्य, धनुः= चापं 'धनुश्चापो धन्वशरासनकोदण्डकार्मुक'मित्यमरः, वर्षाकालिकमिन्द्रधनुरिति प्रसिद्धं शरासनमिति यावत्, नमतः च=नमयितुमभिलषतश्च, अन्तर्भावितो ण्यर्थोऽत्र णिज्विरहितो वार्षः प्रयोगः, अथो=अथ, तथा=तेनैव प्रकारेण, अग्राह्यान्=ग्रहीतुमशक्यान्, मरीचिनः= भानुमतः सूर्यस्येत्यर्थः, 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रिया'मित्यमरः, पादान्= रश्मीन् किरणानित्यर्थः, 'पादा रश्म्यङ्घ्रितुर्यांशा' इत्यमरः, गृह्णतः=धर्तुमिच्छतश्च, मूर्खानिति यावत्, अब्रवीत्=बभाषे। पाशहस्ताः पाशः=जालादिवद्बन्धनं, हस्ते=करे येषां ते पाशहस्ताः= गृहीतबन्धनाः यमस्य किङ्कराः, एतान्=अनुपदमेवोक्तान् सप्तदश, निरयं=नरकं 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रिया'मित्यमरः, नयन्ति=प्रापयन्ति इति च, अब्रवीत्=उक्तवान्।

**भावार्थः**—स्वायम्भुवेन मुनिना शून्यमुष्टिप्रहारकादयः सप्तदश पुरुषा मूर्खा, निरय-गामिनश्चोक्ताः ॥

**भाषा**—हे मनुष्यों के स्वामी, राजाओं में श्रेष्ठ, विचित्रवीर्य के पुत्र धृतराष्ट्र! स्वायम्भुव मनु ने अनधिकारी को उपदेश देनेवाले, (दुराचरण से) सन्तुष्ट होनेवाले, चिरकाल तक शत्रु की सेवा करनेवाले, वृत्ति के लोभ से स्त्रियों की रक्षाकर उसी से भला माननेवाले, न मांगने योग्य पुरुष से मांगनेवाले, डींग हाकनेवाले, कुलीन होकर भी निन्द्य कर्म करनेवाले, बलहीन होने पर भी बली के साथ नित्य वैर करनेवाले, श्रद्धाहीन से (शास्त्रादि को) कहने-वाले, न चाहने योग्य वस्तु को चाहनेवाले, ससुर होकर बहू से परिहास चाहनेवाले, बहू के द्वारा भय से छूट कर आदर चाहनेवाले, दूसरे के खेत में बीज बोनेवाले, मर्यादा को छोड़कर अथवा अधिक रूप से स्त्री की निन्दा करनेवाले, पाकर भी 'मुझे स्मरण नहीं' (कि मुझे मिला) इसप्रकार कहनेवाले, मांगे जाने पर देकर अपनी प्रशंसा करनेवाले तथा असिद्ध को सिद्ध ठहरानेवाले, इन सत्रह पुरुषों को आकाश को घूंसा मारनेवाले, न झुकाये जाने योग्य इन्द्रधनुष को झुकाने की इच्छा करनेवाले तथा न पकड़ने योग्य सूर्य की किरणों को पकड़ने की इच्छा करनेवाले, अर्थात् हर प्रकार से मूर्खता का काम करनेवाले, कहा है और इन सत्रह

मूर्खों को हाथ में फांस धारण करनेवाले (यमदूत) नरकमें ले जाते हैं—यह भी कहा है॥१-६॥

**यस्मिन् यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः ।**
**मायाचारो मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युपेयः॥७॥**

**अन्वयः—**यः मनुष्यः यस्मिन् यथा वर्तते ( तेनापि ) तस्मिन् तथा वर्तितव्यम् , सः धर्मः । मायाचारः मायया वर्तितव्यः, साध्वाचारः साधुना प्रत्युपेयः ।

**अर्थः—यस्मिन्निति** । यः, मनुष्यः=पुरुषः, यस्मिन्=पुंसि, यथा=येन प्रकारेण, वर्तते= आचरति, तेन पुरुषेणापि, तस्मिन्=पुंसि, तथा=तेन प्रकारेण, वर्तितव्यम्=आचरणीयम् , सः धर्मः=तत् कर्तव्यमस्ति । मायाचारः=मायावी, मायया=कपटेन, वर्तितव्यः=व्यवहार्यः, साध्वाचारः=सदाचारी, साधुना=सदाचरणेन, प्रत्युपेयः=आसाद्यः व्यवहर्तव्य इति यावत् ।

**भावार्थः—**जो यथा वर्तते तत्र तथा वर्तनीयमिति ॥

**भाषा**—जो मनुष्य जिस किसी ( दूसरे मनुष्य ) से जैसा वर्ताव करता है, उस ( दूसरे मनुष्य ) को भी उसके साथ वैसा ही वर्ताव करना चाहिए-यही धर्म है। कपटी के साथ कपट का व्यवहार करना चाहिए और सज्जन के साथ सज्जनता का वर्ताव करना चाहिए ॥ ७ ॥

**जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान् धर्मचर्यामसूया ।**
**कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥ ८ ॥**

**अन्वयः—**हि जरा रूपम् , आशा धैर्य, मृत्युः प्राणान् , असूया धर्मचर्या, कामः ह्रियम्, अनार्यसेवा वृत्तं, क्रोधः श्रियम्, अभिमानः सर्वम् एव हरति ।

**अर्थः—जरेति** । व्याख्यातमपीदं पद्यं स्पष्टावबोधार्थं पुनरपि पर्यायैर्भूष्यते-हि=निश्चयेन, जरा=वार्धक्यं, रूपम्=आकृतिम् , आशा=तृष्णा, धैर्य=धीरतां, मृत्युः=मरणं, प्राणान्=असून् , असूया=गुणे दोषारोपः, धर्मचर्या=धर्माचरणं, कामः=स्मरः, ह्रियं=लज्जाम् , अनार्यसेवा=दुष्टसेवनं, वृत्तं=चरित्रं, क्रोधः=कोपः, श्रियं=सम्पदम् , अभिमानः=गर्वः, सर्वम् एव=रूपादिकमन्यच्च सकलमपि, हरति=अपहरति विकारयतीत्यर्थः ।

**भावार्थः—**जरादयोऽष्टौ रूपादीनष्टौ नाशयन्तीति ॥

**भाषा**—बुढ़ापा सौन्दर्य को, आशा धैर्य को, मृत्यु प्राण को, गुणों मे दोष ढूंढ़ने की प्रवृत्ति धर्माचरण को, काम की इच्छा लज्जा को, नीच की सेवा चरित्र को, क्रोध लक्ष्मी को तथा अभिमान सभी विषयों को हर लेता है ॥ ८ ॥

**धृतराष्ट्र उवाच—**धृतराष्ट्रः=राजा, उवाच=अकथयत् ।

**शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।**
**नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ९ ॥**

**अन्वयः—**सर्ववेदेषु यदा पुरुषः शतायुः उक्तः वै, अथ इह ( सः ) केन हेतुना तत् सर्वम् आयुः न आप्नोति ?

**अर्थः—शतायुरिति** । सर्ववेदेषु = सर्वासु श्रुतिषु, यदा, पुरुषः = पुमान्, शतायुः शतमायुर्यस्य सः शतायुः = पूर्णायुः, उक्तः = कथितः, वै=निश्चयेन, अथ = अनन्तरम्, तदेत्यर्थः, इह = अस्मिंल्लोके, केन हेतुना=केन कारणेन 'हेतुर्ना कारणं बीज'मित्यमरः, तत्=वेदोक्तं, सर्वं=पूर्णम्, आयुः=जीवितकालम् 'आयुर्जीवितकालो ना' इत्यमरः, न आप्नोति=न प्राप्नोति ।

**भावार्थः**—वेदोक्तं शतमायुः कुतो न पुरुषो लभतेऽस्मिन् संसारे ? तद् ब्रूहीति ।

**भाषा**—धृतराष्ट्र बोले—जब सभी वेदों में पुरुष सौ बरस की आयुवाला कहा गया है तो किस कारण से वह संसार में उस पूरी आयु को नहीं पाता ॥ ९ ॥

**विदुर उवाच**—विदुरः = नीतिवित्, उवाच = उत्तरयामासाकथयत् ।

> **अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप ! ।**
> **क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ १० ॥**
> **एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।**
> **एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ११ ॥**

**अन्वयः**—हे नराधिप ! अतिमानः अतिवादः च तथा अत्यागः क्रोधः च आत्मविधित्सा च मित्रद्रोहः च–तानि षट्, एते एव तीक्ष्णाः असयः देहिनाम् आयूंषि कृन्तन्ति । एतानि मानवान् घ्नन्ति, मृत्युः न, ते भद्रम् अस्तु ।

**अर्थः**—आयुर्नाशकराणि गणयन्नाह—**अतिमान इत्यादि** । अतिमानः=अतिगर्वः, अतिवादः=बहुभाषणम्, अत्यागः अति=अतिशयेन आगः=अपराधः 'आगोऽपराधो मन्तुश्चे'त्यमरः, अथवा न त्यागः=दानं 'त्यागो विहापितं दान'मित्यमरः, अत्यागः=महापराधः दानाभावश्च, क्रोधः=कोपः, आत्मविधित्सा आत्मनः=स्वस्य विधित्सा=पोषणस्य चिकीर्षा, मित्रद्रोहः=सखिद्वेषश्च, तानि=एतानि, षट्, एतानीति सामान्ये नपुंसकत्वम्, कारणानि सन्तीति शेषः, एते एव=पूर्वोक्ता अमी षडेव, तीक्ष्णाः=निशिताः, असयः=खड्गाः, देहिनां=मनुष्याणाम्, आयूंषि, कृन्तन्ति=छिन्दन्ति, एतानि=एते, मानवान्=मनुष्यान्, घ्नन्ति=नाशयन्ति प्राणेभ्यो वियोजन्तीति यावत्, मृत्युः = मरणं, न=न हन्ति, ते = तव, भद्रं=कल्याणम्, अस्तु=भवतु ।

**भावार्थः**—अतिमानादयः षट् पदार्थाः पुरुषप्राणघातका न मृत्युरिति ज्ञेयम् ॥

**भाषा**—हे राजन् ! वे कारण छः हैं–अधिक अहङ्कार, बहुत बोलना, महान् अपराध अथवा दान न देना, क्रोध, अपना ही पोषण करने की इच्छा ( उदरपरायणता ) तथा मित्र से विरोध ये ( छः ) तेज तलवारें ही मनुष्यों की आयु को काटती हैं और ये ही मनुष्यों को मारती है, मृत्यु नहीं । ( हे राजन् ! ) आपका कल्याण हो ॥ १०–११ ॥

> **विश्वस्तस्यैति यो दारान् यश्चापि गुरुतल्पगः ।**
> **वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत । ॥ १२ ॥**

**आदेशकृद् वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।**
**शरणागतहा चैव सर्वे ब्रह्महणः समाः ।**
**एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ १३ ॥**

**अन्वयः**—हे भारत ! यः विश्वस्तस्य दारान् एति, अपि च यः गुरुतल्पगः, यः च द्विजः वृषलीपतिः, पानप एव च, आदेशकृत् , वृत्तिहन्ता, यः द्विजानां प्रेषकः, शरणागतहा एव च-सर्वे ब्रह्महणः समाः । एतैः समेत्य प्रायश्चित्तं कर्तव्यम्—इति श्रुतिः ।

**अर्थः**—कांश्चन महादोषान् पातकिनो दर्शयति सार्धपद्यद्वयेन—**विश्वस्तस्येत्यादि ।** हे भारत=हे भरतकुलोत्पन्न राजन्! यः, विश्वस्तस्य=जातविश्वासस्य पुंसः, दारान्=कुटुम्बिनीं 'दाराः स्यात्तु कुटुम्बिनी'त्यमरः, एति=गच्छति, अपि च, यः=पुमान् , गुरुतल्पगः गुरुतल्पं=गुरुस्त्री तद्गच्छतीति गुरुतल्पगः, गमेर्डः, यश्च द्विजः=ब्राह्मणः, वृषलीपतिः=शूद्रापतिः, पानपः एव च=मदिराद्यपेयपानकर्तापि, आदेशकृत् आदेशम्=व्यर्थां स्वमहत्त्वप्रख्यापिकाश्चाज्ञां करोति=कुरुते प्रवर्तयतीति यावत् , यः तादृशः, वृत्तिः=जीविका तस्याः=हन्ता=नाशकः, कर्मकरेभ्यः प्रभुदत्तां वृत्तिमप्रदाय स्वयं चोपभुज्य विना वेतनं तेभ्यः कार्यं कारयन्नित्यर्थः, यः द्विजानां=ब्राह्मणानां 'दन्तविप्राण्डजा द्विजा' इति कोषः, प्रेषकः=सेवार्थं प्रेरकः, शरणागतहा शरणम् आगताः=प्राप्ताः तान् हन्ति=हिनस्ति तथाभूत एव च, एते सर्वे=समस्ताः, ब्रह्महणः=ब्रह्महत्याकारिणः, तेनेत्यर्थः, समाः=तुल्याः, एतैः=एनैः, समेत्य=सङ्गत्य, प्रायश्चित्तं=पापापनोदकं कर्म, कर्तव्यं=विधेयम् , इति=एवं, श्रुतिः=वेदः 'श्रुतिः स्त्री वेद आम्नाय' इत्यमरः, कथयतीति शेषः ।

**भावार्थः**—विश्वस्तभार्योपसर्पकादयः सर्वेऽपि ब्रह्मघ्नतुल्याः, तत्सङ्गतिरपि पापकारिणीति॥

**भाषा**—हे भरतवंश के राजा ! विश्वास करनेवाले पुरुष की स्त्री तथा गुरुपत्नी से सहवास करनेवाला, शूद्रा का पति तथा शराब पीनेवाला ब्राह्मण, सभी लोगों पर व्यर्थ का हुकुम करनेवाला ( दूसरों की ) जीविका को नष्ट करनेवाला, ब्राह्मणों से सेवा करानेवाला तथा शरण में आये हुए लोगों को मारनेवाला, ये सब ब्राह्मणघाती के समान हैं । वेद कहते हैं कि इनका संसर्ग होने पर प्रायश्चित्त करना चाहिए ॥ १२–१३ ॥

**गृहीतवाक्यो नयविद्वदान्यः शेषान्नभोक्ता ह्यविहिंसकश्च ।**
**नानर्थकृत्याकुलितः कृतज्ञः सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ १४ ॥**

**अन्वयः**—गृहीतवाक्यः नयवित् वदान्यः शेषान्नभोक्ता अविहिंसकः नानर्थकृत्याकुलितः कृतज्ञः सत्यः मृदुः विद्वान् स्वर्गम् उपैति ।

**अर्थः**—**गृहीतवाक्य इति ।** गृहीतवाक्यः गृहीतानि=ज्ञातानि स्वीकृतानि वा वाक्यानि=वचांसि येन सः वेदशास्त्रयोर्ज्ञाता मन्ता च, नयवित् नयं वेत्तीति नयवित्=नीतिज्ञः, वदान्यः=दानशौण्डः 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः, शेषान्नभोक्ता शेषं=हुतदेवद्विजा-

तिथिभ्यो दानादुर्वरितं यत् अन्नं=भोज्यं तस्य भोक्ता=भक्षकः, अविहिंसकः=हिंसामकुर्वन्, नानर्थकृत्याकुलितः अनर्थं=निरर्थकं हानिकरं च यत् कृत्यं=कार्यं तेन आकुलितः=व्याकुलः तादृशो न भवतीति नानर्थकृत्याकुलितः, अत्र नञर्थेन नशब्देन सह समासः, कृतं=विहितं जानाति=वेत्तीति कृतज्ञः=उपकारस्मर्ता, सत्यः=सत्यपरायणः, मृदुः=कारुणिकः, विद्वान्=धीरः, स्वर्गं=नाकम्, उपैति=प्राप्नोति ।

**भावार्थः**—गृहीतवाक्यत्वादिगुणविशिष्टो बुधः स्वर्गगामी भवतीति ॥

**भाषा**—वेद और शास्त्र की बातों को मानने तथा जाननेवाला, नीति का जानकार, दाता, अग्नि, देवता तथा अतिथि को समर्पित करने के बाद भोजन करनेवाला, हिंसारहित, बिना काम के तथा बुरे कर्मों से दूर रहनेवाला, उपकार को माननेवाला, सत्यपरायण, दयालु तथा विद्वान् पुरुष स्वर्ग को प्राप्त होता है ॥ १४ ॥

**सुलभाः पुरुषा राजन् ! सततं प्रियवादिनः ।**
**अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १५ ॥**

**अन्वयः**—हे राजन् ! प्रियवादिनः पुरुषाः सततं सुलभाः, तु अप्रियस्य पथ्यस्य वक्ता श्रोता च दुर्लभः ( भवति ) ।

**अर्थः—सुलभ इति ।** हे राजन्=हे नृपते ! प्रियवादिनः=मिष्टभाषिणः, पुरुषाः=नराः, सततं=सन्ततं, सुलभाः=सुप्रापाः सन्ति, तु=किन्तु, अप्रियस्य=अनभीष्टस्य कठोरस्य, पथ्यस्य=हितस्य, वचनस्येति शेषः, वक्ता=कथयिता, श्रोता=आकर्णयिता च, जनः दुर्लभः=दुष्प्रापः, भवति ।

**भावार्थः**—अनुकूलप्रियवक्तारः पुरुषाः सदा सुखेन लभ्यन्ते, परम् अप्रियस्य हितकारिणश्च वचसः प्रयोक्ता श्रोता च सुतरां दुर्लभाविति ॥

**भाषा**—हे राजन् ! मीठे वचन बोलनेवाले पुरुष तो सदा आसानी से मिल जाते हैं, परन्तु कड़वे, हितकर वचन को कहने तथा सुननेवाला पुरुष कठिनाई से मिलता है ॥ १५ ॥

**यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।**
**अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १६ ॥**

**अन्वयः**—हि यः धर्मं समाश्रित्य भर्तुः प्रियाप्रिये हित्वा अप्रियाणि पथ्यानि आह, राजा तेन सहायवान् ( भवति ) ।

**अर्थः—यो हीति ।** यः=यः पुरुषः अमात्यो वा, धर्मं=वेदोदितमाचारं, समाश्रित्य=आलम्ब्य, भर्तुः=स्वामिनः, प्रियाप्रिये=इष्टानिष्टे, हित्वा=त्यक्त्वा, अप्रियाणि=कटूनि सन्त्यपि, पथ्यानि=हितकाराणि, वचांसीति शेषः, आह=कथयति, राजा=नृपः, तेन=नृणा सचिवेन वा, सहायवान् भवति=साहाय्यं लभत इति ।

**भावार्थः**—भर्तुरिदमिष्टमनिष्टं वेत्यनालोच्य धर्मपूर्वकं कटून्यनिष्टान्यपि परिणामसुखानि वचनानि यः कथयति, स एव तत्साहाय्यकर्ता भवतीति ॥

**भाषा**—जो पुरुष धर्म का आश्रय लेकर स्वामी को क्या अच्छा लगेगा और क्या नहीं अच्छा लगेगा इसकी चिन्ता छोड़ कर अच्छी न लगनेवाली भी हितकर बातों को कहता है, वह राजा का सहायक समझा जाता है ॥ १६ ॥

**त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।**
**ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १७ ॥**

**अन्वयः**—कुलार्थे पुरुषं त्यजेत् , ग्रामस्य अर्थे कुलं त्यजेत् , जनपदस्य अर्थे ग्रामं त्यजेत्, आत्मार्थे पृथिवीं त्यजेत् ।

**अर्थः—त्यजेदिति** । नरः, कुलार्थे कुलस्य=वंशस्य अर्थः=प्रयोजनं तस्मिन् , निष्कलङ्कत्वादिरक्षणार्थमित्यर्थः, पुरुषं=नरमेकं कलङ्कयितारं, त्यजेत्=मुञ्चेत् , ग्रामस्य=संवसथस्य 'समौ संवसथग्रामौ' इत्यमरः, अर्थे=उपकारार्थं, कुलं=वंशं, त्यजेत्=जह्यात् , जनपदस्य=देशस्य 'जनपदो देशविषयौ'वित्यमरः, अर्थे=कृते, ग्रामं=स्वल्पजनवसतिस्थानं, त्यजेत्=परिहरेत् , आत्मार्थे आत्मनः=स्वस्य अर्थे=श्रेष्ठनरत्वादिलाभाय, पृथिवीं=पृथ्वी 'गोत्रा कुः पृथिवी पृथ्वी'-त्यमरः, त्यजेत्=विसृजेत् ।

**भावार्थः**—बहुलोपकारविधानेच्छया स्वल्पस्य त्यागः श्रेयस्करः, अन्यथा 'अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्' इति कालिदासोक्त्यनुसारं मूढतापत्तिसम्भव इति ॥

**भाषा**—सारे कुल ( खानदान ) के हित के लिए एक व्यक्ति को छोड़ देना चाहिए, गांव-भर के हित के लिए कुल को छोड़ देना चाहिए, देश के हित के लिए गाँव को छोड़ देना चाहिए और आत्मा के कल्याण के लिए सारी वसुधा को छोड़ देना चाहिए ॥ १७ ॥

**आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि ।**
**आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १८ ॥**

**अन्वयः**—आपदर्थे धनं रक्षेत् , दारान् धनैः अपि रक्षेत्, आत्मानं दारैः अपि धनैः अपि सततं रक्षेत् ।

**अर्थः—आपदर्थ इति** । आपदर्थे=आगामिविपन्निवारणाय, धनं=द्रव्यं, रक्षेत्=सङ्गृह्य स्थापयेत् , दारान्=अबलां, धनैः अपि=द्रव्यं व्ययीकृत्यापि, रक्षेत्=पालयेत् , आत्मानं=स्वं, दारैः अपि=योषित्साहाय्येनापि, धनैः अपि=द्रव्यैरपि, सततं=सर्वदा, रक्षेत्=गोपायेत् 'आत्मानं गोपायेदिति श्रुतेः ।

**भावार्थः**—आपन्निवारणाय धनं सर्वथा धनेनापि स्त्रियं धनेन स्त्रियाप्यात्मानं रक्षेदिति ॥

**भाषा**—आपत्ति में काम आने के लिये धन की रक्षा ( सङ्ग्रह ) करनी चाहिए, धन का व्यय करके भी स्त्री की रक्षा करनी चाहिए और स्त्री तथा धन दोनों से ही सदा अपनी रक्षा करनी चाहिए ॥ १८ ॥

**द्यूतमेतत् पुराकल्पे दृष्टं वैरकरं नृणाम् ।**
**तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १९ ॥**

**अन्वयः**—पुराकल्पे एतत् द्यूतं नृणां वैरकरं दृष्टम्, तस्मात् बुद्धिमान् हास्यार्थम् अपि द्यूतं न सेवेत।

**अर्थः**—**द्यूतमिति**। पुराकल्पे=प्राचीनसमये, एतत् द्यूतम्=अक्षादिक्रीडा, नृणां=पुंसां, वैरकरं=विरोधकरं, दृष्टं=नयनगोचरतां गतम्, तस्मात्=हेतोः, बुद्धिमान्=मतिमान्, हास्यार्थम् अपि=मनोविनोदायापि, द्यूतं=पणं, न=नैव, सेवेत=भजेत् न क्रीडेदित्यर्थः।

**भावार्थः**—दृष्टदोषत्वात् द्यूतक्रीडनं सर्वथा हेयमेवास्ति सर्वैरिति॥

**भाषा**—प्राचीन कल्प (काल) मे जुआ मनुष्यों में वैर उत्पन्न करनेवाला देखा गया है, इसलिए बुद्धिमान् को हँसी के लिए भी जुए का सेवन नहीं करना चाहिए॥ १९॥

**उक्तं मया द्यूतकालेऽपि राजन्नेदं युक्तं वचनं प्रातिमेय!।**
**तदौषधं पथ्यमिवातुरस्य न रोचते तव वैचित्रवीर्य!॥ २०॥**

**अन्वयः**—हे प्रातिमेय राजन्! मया द्यूतकाले अपि 'इदं युक्तं न'—(इति) वचनम् उक्तम् (आसीत्), हे वैचित्रवीर्य! आतुरस्य पथ्यम् औषधम् इव तत् तव न रोचते।

**अर्थः**—**उक्तमिति**। हे प्रातिमेय=हे प्रतिमापुत्र, राजन्! मया, द्यूतकाले अपि=द्यूतक्रीडावसरेऽपि, इदं=द्यूतक्रीडनं, युक्तं=योग्यं, न=नास्ति,—इति वचनं=वाक्यम्, उक्तं=कथितमासीत्, हे वैचित्रवीर्य=हे विचित्रवीर्यसूनो धृतराष्ट्र! आतुरस्य=रोगिणः, पथ्यं=हितकरम्, औषधमिव=भेषजमिव, तत्=उक्तं, तव=ते तुभ्यमित्यर्थः, न रोचते=न स्वदते।

**भावार्थः**—पुरा द्यूतप्रसङ्गे निषेधरूपेणोक्तं मद्वचो न तेऽद्यापि रोचते॥

**भाषा**—हे प्रातिमेय (प्रतिमा की सन्तान) विचित्रवीर्य के पुत्र राजन् धृतराष्ट्र! जुआ खेलने के समय भी मैंने यह वचन कहा था कि यह (जुआ खेलना) उचित नहीं है, परन्तु वह (वचन) रोगी को हितकर औषध की भाँति आपको अच्छा नहीं लगा॥ २०॥

**काकैरिमांश्चित्रबर्हान् मयूरान् पराजयेथाः पाण्डवान् धार्तराष्ट्रैः।**
**हित्वा सिंहान् क्रोष्टुकान् गूहमानः प्राप्ते काले शोचिता त्वं नरेन्द्र!॥२१॥**

**अन्वयः**—हे नरेन्द्र! त्वं काकैः चित्रबर्हान् मयूरान् इव धार्तराष्ट्रैः इमान् पाण्डवान् पराजयेथाः, सिंहान् हित्वा क्रोष्टुकान् गूहमानः (सन्) काले प्राप्ते शोचिता।

**अर्थः**—**काकैरिति**। हे नरेन्द्र=हे राजन्! त्वं=भवान्, काकैः=वायसैः 'काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः। ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपी'त्यमरः, चित्रबर्हान् चित्राणि=कर्बुराणि 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे'इति कोषः, बर्हाणि=पिच्छानि 'पिच्छबर्हे नपुंसके' इत्यमरः, येषां तान्, मयूरान् इव=बर्हिण इव, धार्तराष्ट्रैः=धृतराष्ट्रपुत्रैः, इमान्=एतान्, पाण्डवान्=पाण्डुपुत्रान्, पराजयेथाः=परिभवितुमिच्छेः, सिंहान्=केसरिणः तत्प्रकृतीन् पाण्डवान् वा, हित्वा=त्यक्त्वा, क्रोष्टुकान्=क्रोष्टॄन् शृगालान् तत्सदृशान् स्वपुत्रान् वा 'शृगालवञ्चुकक्रोष्टुफेरुफेरवजम्बुकाः' इत्यमरः, गूहमानः=आवृण्वन् सन्, रक्षन्निति यावत्, काले=योग्येऽवसरे, प्राप्ते=अवाप्ते सति, शोचिता=शोकं करिष्यसि।

भावार्थः—काकैर्मयूरानिव धार्तराष्ट्रैः पाण्डवान् पराभूय सिंहान् विहाय शृगालानिव पाण्डवान् त्यक्त्वा धार्तराष्ट्रान् पालयन् दुःखमन्तेऽवाप्स्यसीति॥

भाषा—आप इन काकरूपी कौरवों से रंगबिरंगे पंखवाले मोररूपी पाण्डवों को पराजित करना चाहते हैं, तो हे राजन्! सिंहों को छोड़कर गीदड़ों की रक्षा कर के समय आने पर आप शोक करेंगे॥ २१॥

**यस्तात! न क्रुध्यति सार्वकालं भृत्यस्य भक्तस्य हिते रतस्य।**
**तस्मिन् भृत्या भर्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति॥२२॥**

**अन्वयः—**हे तात! यः हिते रतस्य भक्तस्य भृत्यस्य सार्वकालं न क्रुध्यति, भृत्याः तस्मिन् भर्तरि विश्वसन्ति, आपत्सु एनं न परित्यजन्ति च।

**अर्थः—यस्तातेति।** हे तात = हे विभो! यः=स्वामी, हिते=कल्याणे, रतस्य=लीनस्य, भक्तस्य = भक्तिनतः, भृत्यस्य = दासस्य भृत्यायेत्यर्थः, 'भृत्ये दासेरदासेयदासगोप्यकचेटकाः' इत्यमरः, 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इत्यनुशासनप्राप्तसम्प्रदानत्वस्याऽविवक्षया सम्बन्धसमान्येऽत्र षष्ठी, सार्वकालं सर्वकालमेव सार्वकालं=सदा, स्वार्थेऽण्, क्रियाविशेषणमिदम्, न क्रुध्यति=न कुप्यति, भृत्याः = सेवकाः, तस्मिन्=अक्रोधने, भर्तरि=स्वामिनि, विश्वसन्ति= विश्वासं कुर्वते, आपत्सु=विपत्सु, एनं=भर्तारं, न परित्यजन्ति=न मुञ्चन्ति एवेत्यर्थः।

**भावार्थः—**अक्रोधने भर्तरि भृत्यानामनुरागो विश्वासश्च जायते॥

**भाषा—**हे तात! जो भलाई करने में लगे हुए भक्त नौकर पर कभी भी क्रोध नहीं करता, ऐसे स्वामी में नौकर विश्वास रखते हैं और विपत्ति पड़ने पर उसका साथ नहीं छोड़ते॥२२॥

**न भृत्यानां वृत्तिसंरोधनेन राज्यं धनं सञ्जिघृक्षेदपूर्वम्।**
**त्यजन्ति ह्येनं वञ्चिता वै विरुद्धाः स्निग्धा ह्यमात्याः परिहीनभोगाः॥२३॥**

**अन्वयः—**भृत्यानां वृत्तिसंरोधनेन अपूर्वं राज्यं धनं न सञ्जिघृक्षेत्, हि वञ्चिता हि परिहीनभोगाः स्निग्धाः अमात्याः विरुद्धाः (सन्तः) एनं त्यजन्ति।

**अर्थः—न भृत्यानामिति।** भृत्यानां=दासानां, वृत्तिसंरोधनेन वृत्तेः=जीवनस्य वेतनादेः 'वृत्तिर्वर्तनजीवने' इत्यमरः, संरोधनेन = प्रतिरोधेन, अपूर्वं = नवीनं, राज्यं = राष्ट्रं, धनं = द्रव्यं वा, न सञ्जिघृक्षेत् = सङ्ग्रहीतुं नाभिलषेत्। हि = यस्मात्कारणात्, वञ्चिताः हि= प्रतारिता अपि, हिशब्दोऽप्यर्थे, परिहीनभोगाः परिहीनः = परीक्षिणः भोगः=सुखं भृतिर्वा येषां तादृशाः 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो'रित्यमरः, स्निग्धाः=स्नेहपूर्णाः, अमात्याः =मन्त्रिणः, विरुद्धाः=प्रतिकूलाः सन्तः, एनं=भर्तारं, त्यजन्ति=मुञ्चन्ति।

**भावार्थः—**सेवकानां वृत्तिनिरोधं कृत्वा राज्यान्तरादिप्राप्तये यतमानं स्वामिनं तद्वञ्चिताः परिक्षीणभोगाः पूर्वं स्निग्धा अपि ते सेवकास्तं परित्यजन्त्येवेति॥

**भाषा—**नौकरों की जीविका (वेतन आदि) को रोक कर नया राज्य तथा धन को लेने

की इच्छा न करे। क्योंकि ठगे गये हुए अनुरक्त मन्त्री भी भोग की सामग्री से रहित होने पर विरुद्ध होकर ऐसे ( राजा ) का साथ छोड़ देते हैं ॥ २३ ॥

**कृत्यानि पूर्वं परिसङ्ख्याय सर्वाण्यायव्यये चानुरूपां च वृत्तिम् ।**
**सङ्गृह्णीयादनुरूपान् सहायान् सहायसाध्यानि हि दुष्कराणि ॥२४॥**

**अन्वयः**—( नरः ) पूर्वं सर्वाणि कृत्यानि, आयव्यये अनुरूपां वृत्तिं च परिसङ्ख्याय अनुरूपान् सहायान् सङ्गृह्णीयात् , हि दुष्कराणि सहायसाध्यानि ।

**अर्थः—कृत्यानीति** । नरः, पूर्वं=प्रथमं, सर्वाणि=समस्तानि, कृत्यानि=कार्याणि, आयव्यये आयः=अर्थागमः व्ययश्च=अर्थापगमः 'अर्थस्यापगमे व्यय' इत्यमरः, आयश्च व्ययश्चेत्यायव्ययौ तयोः समाहार आयव्ययं तस्मिन् आयव्ययविषये, अनुरूपाम्=अनुकूलां, वृत्तिं=जीविकां च, परिसङ्ख्याय=साध्यासाध्यरूपेण निश्चित्य, अनुरूपान्=योग्यान् . सहायान्=सहायकारिणः, सङ्गृह्णीयात्=सङ्ग्रहं कुर्यात् , हि=यस्माद्धेतोः, दुष्कराणि= बहुप्रयत्नसाध्यानि कष्टकाराणि च कार्याणि, सहायसाध्यानि सहायैः=सहायकैः साध्यानि साधनीयानि भवन्ति ।

**भावार्थः**—कृत्यजातायव्ययवृत्तयः साध्या न वेति विचार्य पुरुषेण सहायकसङ्ग्रहो विधेयः. तदन्तरा दुष्करकार्यसम्पादनस्याशक्यत्वादिति ॥

**भाषा**—पहले करने योग्य सारे कामों तथा आयव्यय के अनुकूल जीविका का निश्चय करके तब अपने अनुकूल सहायकों का संग्रह करना चाहिए क्योंकि कठिनाई से होनेवाले काम सहायकों के सहारे सिद्ध हो जाते हैं ॥ २४ ॥

**अभिप्रायं यो विदित्वा तु भर्तुः सर्वाणि कर्याणि करोत्यतन्द्री ।**
**वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥२५॥**

**अन्वयः**—यः भर्तुः अभिप्रायं विदित्वा तु अतन्द्री ( सन् ) सर्वाणि कार्याणि करोति, हितानां वक्ता अनुरक्तः आर्यः शक्तिज्ञः सः आत्मा इव हि अनुकम्प्यः ( भवति ) ।

**अर्थः—अभिप्रायमिति** । यः=सेवकः, भर्तुः=स्वामिनः, अभिप्रायम्=आशयम् 'अभिप्रायश्छन्द आशय' इत्यमरः, विदित्वा=ज्ञात्वा तु, अतन्द्री=आलस्यशून्यः सन् , सर्वाणि=सकलानि, कार्याणि=कृत्यानि, करोति=विदधाति, हितानां=पथ्यानां वचनानां, वक्ता=कथयिता, अनुरक्तः=स्निग्धः, आर्यः=सभ्यः 'महाकुलकुलीनार्यसभ्यसज्जनसाधव' इत्यमरः, शक्तिज्ञः= प्रभावोत्साहमन्त्रजानां शक्तीनां वेदिता, सः=सेवकः, आत्मा इव=देह इव स्वमिव वा 'स्वो ज्ञातावात्मनि स्व'मित्यमरः, अनुकम्प्यः=दयनीयः अनुग्राह्य इत्यर्थः, 'कृपा दयाऽनुकम्पा स्या'- दिति कोशः ।

**भावार्थः**—अनलसो भर्त्रभिप्रायज्ञो हितवक्तृत्वादिगुणगणशाली सेवकः प्रभुणानुग्राह्य एवेति ॥

**भाषा**—जो ( नौकर ) स्वामी के अभिप्राय को जानकर आलस्य को छोड़ कर सारे

कामों को करता है, हित कर बातें कहता है, स्वामी पर अनुरक्त सज्जन तथा ( स्वामी के ) सामर्थ्य को जानता है, वह ( स्वामी के लिए ) अपनी ही भाँति दया के योग्य है ॥ २५ ॥

**वाक्यं तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः ।**
**प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ २६ ॥**

**अन्वयः**—अनुशिष्टः यः तु वाक्यं न आद्रियते, नियुज्यमानः च अपि यः प्रत्याह, प्रज्ञाभिमानी प्रतिकूलवादी तादृक् सः भृत्यः त्वरया एव त्याज्यः ।

**अर्थः—वाक्यमिति** । अनुशिष्टः=शिक्षितः, यः तु=यश्च भृत्यः, वाक्यं प्रभोराज्ञां, न आद्रियते=तिरस्करोति, नियुज्यमानः अपि=प्रेर्यमाणोऽपि, यः=भृत्यः, प्रत्याह=प्रत्युत्तरयति, प्रज्ञाभिमानी=स्वबुद्ध्यहङ्कारवान्, प्रतिकूलवादी=शासनविरुद्धभाषी, तादृक्=तादृशः, सः=भृत्यः, त्वरया एव=वेगेनैव, त्याज्यः=परिहरणीयः, भवति ।

**भावार्थः**—अभिमानी विरुद्धाचरणशीलश्च भृत्यः शीघ्रं परिहर्तव्य एव ॥

**भाषा**—जो आज्ञा पाने पर ( स्वामी के ) वचन का आदर नहीं करता, ( काम में ) नियुक्त किये जाने पर उत्तर देता है, बुद्धि का गर्व रखता है तथा स्वामी की इच्छा के विरुद्ध वचन बोलता है, ऐसे नौकर को शीघ्र ही हटा देना चाहिए ॥ २६ ॥

**अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।**
**अरोगजातीयमुदारवाक्यं दूतं वदन्त्यष्टगुणोपपन्नम् ॥ २७ ॥**

**अन्वयः**—( बुधाः ) दूतम् अस्तब्धम् अक्लीबम् अदीर्घसूत्रं सानुक्रोशं श्लक्ष्णम् अन्यैः अहार्यम् अरोगजातीयम् उदारवाक्यम्-अष्टगुणोपपन्नं वदन्ति ।

**अर्थः—अस्तब्धमिति** । बुधाः, दूत=सन्देशहरं 'स्यात्सन्देशहरो दूत' इत्यमरः, अस्तब्धं =दर्परहितम् विनीतमित्यर्थः, अक्लीबम्=अनपुंसकं सबलमित्यर्थः, अदीर्घसूत्रम्=अविलम्बिनं शीघ्रकारिणं, सानुक्रोशं=सदयं, श्लक्ष्णं=मञ्जुलम्, अन्यैः-शत्रुभिः, अहार्यम्=अजेयमभेद्यञ्च, अरोगजातीयं=रोगलेशशून्यम्, उदारवाक्यम् उदारं=महत् गम्भीरं युक्तियुक्तं च 'उदारो दातृमहतो'रित्यमरः, वाक्यं=वचनं यस्य तम्, अष्टगुणोपपन्नम् अष्टभिः=अनुपदमेवोक्तैः, गुणैः=सद्गुणैः, उपपन्नं=युक्तं, वदन्ति=कथयन्ति ।

**भावार्थः**—अस्तब्धत्वाद्यष्टगुणवन्तमेव पुरुषं वस्तुतो दूतं बुधाः कथयन्तीति ॥

**भाषा**—दर्पशून्य, सामर्थ्ययुक्त, शीघ्र काम कर लेनेवाला, दयायुक्त, मञ्जुल ( देखने में सुन्दर ) दूसरों ( शत्रुओं ) द्वारा न बहकाये जाने योग्य, नीरोग, तथा उदार ( युक्तियुक्त ) वचन बोलनेवाला, इस प्रकार आठ गुणों से युक्त पुरुष को ही दूत कहते हैं ॥ २७ ॥

**न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयानो विकाले ।**
**न चत्वरे निशि तिष्ठेन्निगूढो न राजकाम्यां योषितं प्रार्थयीत ॥२८॥**

**अन्वयः**—चेतयानः नरः जातु विकाले विश्वासात् परस्य गेहे न गच्छेत्, निशि चत्वरे निगूढः न तिष्ठेद्, राजकाम्यां योषितं न प्रार्थयीत ।

**अर्थः—न विश्वासादिति।** चेतयानः = जानन्, 'आर्षः प्रयोगोऽयम्, नरः=पुमान्, जातु=कदाचित्, विकाले=असमये सन्ध्याकाले इत्यर्थः, विश्वासात्=प्रत्ययात्, परस्य= आत्मनोयेतरस्य, गेहे=गृहे, न गच्छेत्=न यायात्, चौर्यादिकलङ्कापत्तिभयसम्भवात्, निशि= रात्रौ, चत्वरे=अङ्गणे 'अङ्गणं चत्वराजिरे' इत्यमरः, निगूढः=छन्नः सन्, न तिष्ठेत्=नाऽवस्थानं कुर्यात् दुर्वृत्तत्वादिशङ्कया राजपुरुषकर्तृकबन्धनादिसम्भवात्, राजकाम्यां राज्ञा=नृपेण काम्या= अभिलषणीया तां, योषितं=स्त्रियं, न प्रार्थयीत=भोक्तुं न प्रार्थयेत् न कामयेतेत्यर्थः, आर्षोऽयं प्रयोगः, राज्ञः सकाशाद्दण्डलाभसम्भवात्।

**भावार्थः—**सन्ध्यायां परगृहगमनं निशि चत्वरे प्रच्छन्नरूपेणावस्थानं राजेप्सितस्त्री- कामनां च न कुर्यादिति॥

**भाषा—**जानकार आदमी कभी भी कुवेला में दूसरे के घर में न जाय, रात को छिपकर आँगन में न खड़ा रहे और राजा की चाही स्त्री को न चाहे॥ २८॥

**न निह्नवं मन्त्रगतस्य गच्छेत्संसृष्टमन्त्रस्य कुसङ्गतस्य।**
**न च ब्रूयान्नाश्वसिमि त्वयीति सकारणं व्यपदेशं तु कुर्यात्॥ २९॥**

**अन्वयः—**( नरः ) संसृष्टमन्त्रस्य कुसङ्गतस्य मन्त्रगतस्य निह्नवं न गच्छेत्, त्वयि न आश्वसिमि-इति च न ब्रूयात्, तु सकारणं व्यपदेशं कुर्यात्।

**अर्थः—न निह्नवमिति।** नरः, संसृष्टमन्त्रस्य संसृष्टः=अनेककर्तृकत्वेन मिश्रः मन्त्रः= गुप्तभाषणं परामर्शरूपं यस्य तादृशस्य, कुसङ्गतस्य कुत्सितं=निन्दितं सङ्गतं=सहायो यस्य तथाभूतस्य च, मन्त्रगतस्य=परामर्शं कुर्वतः, राज्ञः इति विशेष्यमध्याहरणीयम्, निह्नवं=निह्नुति- मपहारम् अपलापं वा 'अपलापस्तु निह्नव' इत्यमरः, न गच्छेत्=न सविरोधदर्शनं प्रकाशये- दित्यर्थः, त्वयि=भवति, न आश्वसिमि=न विश्वसिमि-इति च=एवं तु, न ब्रूयात्=न वदेत्, तु=किन्तु, सकारणं=हेतूपन्यासपुरस्सरं, व्यपदेशं=व्याजं 'व्याजोऽपदेशो लक्ष्यं चे'त्य- मरः, कुर्यात्।

**भावार्थः—**यश्च नृपः स्वमन्त्रं बहुभिः सह विचार्य तत्संमत्या मिश्रणेन किमपि स्थिरी- करोति, परामर्शदातारश्च यस्य दुर्जना एव, स यदि नीतिविदः पुरुषान् मन्त्रणार्थमाह्वयेत्, तदा तैः पुरुषैर्न स मन्त्रः सङ्गोप्य एव, किन्तु स्वविरोधप्रदर्शनपूर्वकं प्रकाशतामेव नेयः। तत्समये 'त्वयि नाहं विश्वसिमी'त्येवं न कथनीयं, किमपि कारणं प्रदर्श्य व्याजः करणीय इति॥

**भाषा—**अनेक लोगों की संमति से मन्त्रणा करनेवाले तथा बुरे साथवाले पुरुष से सलाह करते समय मुकरना नहीं चाहिए ( अर्थात् यह नहीं कहना चाहिए कि तुम्हारे साथ सलाह करूंगा ) और न तो यही कहना चाहिए कि 'मैं तुम पर विश्वास नहीं करता।' बल्कि कारण के साथ बहाना कर देना चाहिए॥ २९॥

**घृणी राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा।**
**सेनाजीवी चोद्धृतभूतिरेव व्यवहारेषु वर्जनीयाः स्युरेते॥ ३०॥**

**अन्वयः—**घृणी राजा, पुंश्चली राजभृत्यः, पुत्रः, भ्राता, बालपुत्रा विधवा, सेनाजीवी, उद्धृतभूतिः च एव—एते व्यवहारेषु वर्जनीयाः स्युः।

**अर्थः—घृणीति।** घृणी=लज्जाशीलः, राजा=नृपः, पुंश्चली=स्वैरिणी 'पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी। स्वैरिणी पांसुला च स्या'दित्यमरः, राजभृत्यः=राज्ञः सेवकः, पुत्रः=सुतः, भ्राता=बन्धुः, बालपुत्रा बालाः=अल्पवयसः पुत्राः=सुताः यस्याः सा तादृशी, विधवा=गतपतिका स्त्री, सेनाजीवी=सैन्यवृत्तिः, उद्धृतभूतिः उद्धृता=अपहृता भूतिः=सम्पद् यस्य सः=दूरीकृताधिकारश्चैव,—एते=अमी, व्यवहारेषु=विवादेषु 'विवादो व्यवहारः स्या'दित्यमरः, ऋणादानादिनिमित्तविविधवादेष्वित्यर्थः, तथाच—'नानासन्देहहरणाद्व्यवहारः प्रकीर्तित' इति कात्यायनः, वर्जनीयाः=वर्ज्याः निषेध्या इति यावत्, स्युः=भवेयुः।

**भावार्थः—**लज्जाशीलनृपादयो धनादिव्यवहारेषु न ग्राह्या इति॥

**भाषा—**शरमानेवाला राजा, व्यभिचारिणी स्त्री, राजा का नौकर, बेटा, भाई, छोटे पुत्र वाली विधवा, सेना से जीविका चलानेवाला (सैनिक) तथा ऐश्वर्य (अधिकार) से हटाया हुआ पुरुष, ये व्यवहारों (लेन-देन वगैरह के बारे में होनेवाले मुकदमों) से दूर रखने योग्य है॥ ३०॥

**अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च श्रुतं दमश्च।**
**पराक्रमश्चाऽबहुभाषिता च दानं यथाशक्ति कृतज्ञता च॥३१॥**

**अन्वयः—**प्रज्ञा कौल्यं श्रुतं दमः पराक्रमः अबहुभाषिता यथाशक्ति दानं कृतज्ञता च (इति) अष्टौ गुणाः पुरुषं दीपयन्ति।

**अर्थः—अष्टाविति।** प्रज्ञा=बुद्धिः, कौल्यं=कुलीनता, श्रुतं=शास्त्रज्ञानं, दमः=इन्द्रियनिग्रहः, पराक्रमः=शूरता, अबहुभाषिता=मितभाषणशालित्वं, यथाशक्ति=शक्त्यनुसारं, दानं=त्यागः, धनादिवितरणं, कृतज्ञता च=उपकृतिस्मरणं च-इत्यष्टौ, गुणाः=सद्गुणाः, पुरुषं=नरं, दीपयन्ति=प्रकाशयन्ति।

**भावार्थः—**प्रज्ञादयो गुणाः पुरुषस्य शोभावर्धकाः सन्तीति॥

**भाषा—**बुद्धि, कुलीनता, विद्या, इन्द्रियों का दमन, वीरता, मितभाषिता, सामर्थ्य के अनुसार दान करना, तथा उपकार को मानना ये—आठ गुण पुरुष को प्रकाशित कर देते है॥३१॥

**एतान् गुणांस्तात! महानुभावानेको गुणः संश्रयते प्रसह्य।**
**राजा यदा सत्कुरुते मनुष्यं सर्वान् गुणानेष गुणो बिभर्ति॥ ३२॥**

**अन्वयः—**हे तात! एकः गुणः महानुभावान् एतान् प्रसह्य संश्रयते, यदा राजा मनुष्यं सत्कुरुते, यदा एषः गुणः सर्वान् गुणान् बिभर्ति।

**अर्थः—एतानिति।** हे तात=हे राजन्। एकः, गुणः=सद्गुणः, महानुभावान्=अधिकप्रभाववतः, एतान्=पूर्वोक्तान्, गुणान्=प्रज्ञादीन्, प्रसह्य=हठात्, संश्रयते=आश्रयति, यदा=यस्मिन् काले, राजा=नृपतिः, मनुष्यं=पुरुषं, सत्कुरुते=आद्रियते, तदा, एषः गुणः=

राजसंमनालक्षणो गुणः, सर्वान् गुणान्=इतरानखिलान् प्रज्ञादिगुणान्, बिभर्ति=धारयति स्वान्तर्गतानेव विदधातीत्यर्थः ।

**भावार्थः—**पुरुषप्रकाशकान् प्रज्ञादीनष्टौ गुणान् राजसम्मानप्राप्तिरूपो गुणः स्वात्मनि बिभर्ति, सोऽयं तदपेक्षयाप्युत्कृष्टो गुणः=एवं नव गुणा इति ॥

**भाषा—**हे तात ! जब राजा किसी का आदर करता है तो उसका यह ( आदर करने का गुण ) अकेला ही इन बड़े प्रभावशाली गुणों का हठात् आश्रय ले लेता है और यह इन नव गुणों को धारण कर लेता है। अर्थात् प्रज्ञा आदि गुण इस एक गुण के सामने छिप जाते हैं ॥ ३२ ॥

**गुणा दश स्नानशीलं भजन्ते बलं रूपं स्वरवर्णप्रशुद्धिः ।**
**स्पर्शश्च गन्धश्च विशुद्धता च श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥३३॥**

**अन्वयः—**बलं रूपं स्वरवर्णप्रशुद्धिः स्पर्शः गन्धः विशुद्धता श्रीः सौकुमार्यं प्रवराः नार्यः च—दश गुणाः स्नानशीलं भजन्ते ।

**अर्थः—गुणा इति ।** बलम्=ओजः, रूपं=सौन्दर्यं, स्वरवर्णप्रशुद्धिः स्वरश्च वर्णाश्च स्वरवर्णाः तेषां प्रशुद्धिः, स्वराः=निषादादयः वर्णाः=कादयो मातृका वर्णाः तेषां प्रशुद्धिः=स्पष्टता—इत्युभयं, स्पर्शः=त्वगिन्द्रियग्राह्यः शीतोष्णादिः, गन्धः=घ्राणेन्द्रियग्राह्यः सुरभ्यादिः, विशुद्धता=नैर्मल्यं, श्रीः=लक्ष्मीः, सौकुमार्यं=सुकुमारता, प्रवराः=श्रेष्ठाः, नार्यः=स्त्रियश्च,—दश=दशसङ्ख्याका एते, गुणाः, स्नानशीलं=नित्यस्नायिनं, पुरुषमिति शेषः, भजन्ते=आश्रयन्ति ।

**भावार्थः—**यो हि नित्यस्नायी, स एतान् बलादीन् दश गुणान् प्राप्नोतीति ॥

**भाषा—**नित्य स्नान करनेवाले पुरुष के पास ये दस गुण आ जाते हैं—बल, सौन्दर्य, स्वरों और वर्णों की शुद्धता ( शुद्ध उच्चारण करने की योग्यता ) स्पर्श, सुगन्ध, पवित्रता, शोभा अथवा लक्ष्मी, सुकुमारता तथा बढ़िया स्त्रियां ॥ ३३ ॥

**गुणाश्च षण्मितभुक्तं भजन्ते आरोग्यमायुश्च बलं सुखं च ।**
**अनाविलं चास्य भवत्यपत्यं न चैनमाद्यून इति क्षिपन्ति ॥३४॥**

**अन्वयः—**आरोग्यम्, आयुः, बलं, सुखम्, अस्य अपत्यम् अनाविलं भवति, एनम् आद्यूनः इति न क्षिपन्ति च—षट् गुणाः मितभुक्तं भजन्ते ।

**अर्थः—गुणाश्चेति ।** आरोग्यं=नीरोगता, आयुः=जीवितकालः, बलं=सामर्थ्यं, सुखं=शर्म, अस्य=पुंसः, अपत्यं=सन्ततिः, अनाविलं न आविलं=कलुषं, तत्=निर्दोषं सुन्दरं भवति, 'कलुषोऽनच्छ आविल' इत्यमरः, एनं=पुरुषम्, आद्यूनः=औदरिकः बहुभोजीत्यर्थः, 'आद्यूनः स्यादौदरिके' इत्यमरः, इति=एवं, न क्षिपन्ति=न निन्दन्ति च—अमी षट्=षट्सङ्ख्याकाः, गुणाः=उपर्युक्ता आरोग्यादयः, मितभुक्तं मितं=परिमितं भुक्तं=भोजनं यस्य तं मितभुक्तं=परिमिताहारं पुरुषं, भजन्ते=सेवन्ते ।

**भावार्थः**—आरोग्यमायुर्बलं सुखसुन्दरपुत्रावाप्तिर्बहुभोजनकर्तृत्वरूपनिन्दाभावश्चेत्यमी षड् गुणाः परिमिताहारं पुरुषमलङ्कुर्वन्तीति ॥

**भाषा**—परिमित ( न कम न अधिक ) आहार करनेवाले के पास छः गुण आ जाते हैं, उसे स्वास्थ्य, आयु, बल, सुख तथा निर्मल ( नीरोग तथा सुन्दर ) सन्तान की प्राप्ति होती है और 'यह पेटू है' ऐसा कहकर कोई उसकी निन्दा नहीं करता॥ ३४ ॥

**अकर्मशीलं च महाशनं च लोकद्विष्टं बहुमायं नृशंसम्।**
**अदेशकालज्ञमनिष्टवेषमेतान् गृहे न प्रतिवासयेत ॥ ३५ ॥**

**अन्वयः**—( नरः ) अकर्मशीलं महाशनं लोकविद्विष्टं बहुमायं नृशंसम् अदेशकालज्ञम् अनिष्टवेषम्-एतान् गृहे न प्रतिवासयेत।

**अर्थः—अकर्मशीलमिति।** नरः, अकर्मशीलम्=अकर्मठं निरुद्योगमिति यावत्, 'कर्मशीलस्तु कर्मठः' इत्यमरः, महाशनं=बहुभोक्तारं, लोकविद्विष्टं लोकेन=जनेन विद्विष्टः=द्वेषं प्रापितः तं लोकविद्विष्टं=लोकवैरिणं, बहुमायं=मायाविनं, नृशंसं=क्रूरं 'नृशंसो घातुकः क्रूर' इत्यमरः, अदेशकालज्ञं देशं कालं च न जानातीति तं=देशकालानभिज्ञम्, अनिष्टवेषम् अनिष्टः=सर्वैरनीप्सितः अमङ्गल इति यावत्, वेषः=नेपथ्यं यस्य 'आकल्पवेषौ नेपथ्य'मित्यमरः, तादृशम्-एतान्=सद्य उक्तान्, पुरुषानित्यध्याहार्यम्, गृहे=भवने, न प्रतिवासयेत=न वासं कारयेत् समावेशयेत्।

**भावार्थः**—अकर्मठादीन् सप्तविधान् पुरुषान् न कदाचिदपि गृहे स्थापयेदिति ॥

**भाषा**—अकर्मण्य, बहुत खानेवाले, जनता के वैरी, बहुत कपट करनेवाले, क्रूर, स्थान तथा समय के औचित्य को न जाननेवाले तथा बुरे वेशवाले को घर में नहीं टिकाना चाहिए॥३५॥

**कदर्यमाक्रोशकमश्रुतं च वनौकसं धूर्तममान्यमानिनम्।**
**निष्ठूरिणं कृतवैरं कृतघ्नमेतान् भृशार्तोऽपि न जातु याचेत् ॥३६॥**

**अन्वयः**—भृशार्तः अपि ( मनुष्यः ) कदर्यम् आक्रोशकम् अश्रुतं वनौकसं धूर्तम् अमान्यमानिनं निष्ठूरिणं कृतवैरं कृतघ्नम्-एतान् जातु न याचेत्।

**अर्थः—कदर्यमिति।** भृशार्तः भृशम्=अतिवेलम् 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भर'-मित्यमरः, आर्तः=पीडितोऽपि मनुष्यः, कदर्यं=कृपणं 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः' इत्यमरः, आक्रोशकम्=अनिष्टाशिष्टवचनप्रयोक्तारम्, अश्रुतं=शास्त्रज्ञानहीनं, वनौकसं वने=जलसमीपे 'जीवनं भुवनं वन'मिति कोषः, ओकः=सद्म 'ओकः सद्माश्रयश्चौका' इत्यमरः, यस्य तं वनौकसं=वनवासिनं कैवर्तकमिति यावत्, अथवा वने=अरण्ये ओकः यस्य तं भिल्लादिकमित्यर्थः, धूर्तं=कितवं 'धूर्तोऽक्षदेवी कितव' इति कोषः, अमान्यमानिनम् आत्मानं मान्यं न मन्यतेऽसौ अमान्यमानी तं=सत्कारे प्राप्तेऽपि स्वमसत्कृतमेव मन्वानम्, अथवा मान्यान्=पूज्यान् न मानयन्ति=न पूजयन्ति तान्, निष्ठूरिणं क्रूरं, कृतवैरं=कृतद्रोहं, कृतघ्नं=

परकृतानुपकारानमन्यमानम् ,–एतान्=प्रतिपादितान् कदर्यादीन् , जातु=कदाचिदपि, न याचेत् =याच्ञां न कुर्यात् ।

**भावार्थः—**अत्यन्तापद्यपि कदर्यादीनां पुरस्तात् याच्ञा कदापि न कार्या ॥

**भाषा—**कृपण, निन्दक, विद्याहीन, जंगल में रहनेवाले ( भिल्ल-आदि ) अथवा जलके समीप रहनेवाले ( धीवर ), धूर्त, पूज्य लोगों का आदर न करनेवाले, निर्दय, वैरी तथा उपकार को न माननेवाले इन (सब) से अत्यन्त कष्टयुक्त होने पर भी न माँगे ॥ ३६ ॥

**संक्लिष्टकर्माणमतिप्रमादं नित्यानृतं चादृढभक्तिकं च ।**
**विसृष्टरागं पटुमानिनं चाप्येतान्न सेवेत नराधमान् षट् ॥३७॥**

**अन्वयः**—( पुरुषः ) संक्लिष्टकर्माणम् अतिप्रमादं नित्यानृतम् अदृढभक्तिकं विसृष्टरागम् अपि च पटुमानिनम्–एतान् षट् नराधमान् न सेवेत ।

**अर्थः—संक्लिष्टकर्माणमिति** । पुरुषः, संक्लिष्टकर्माणं संक्लिष्टानि=अतिकठोराणि कर्माणि=विषप्रदानादीनि यस्य तं संक्लिष्टकर्माणम्=आततायिनम् , 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः' इत्युक्तेः, अतिप्रमादम् अति=अत्यन्तं प्रमादः=अनवधानता यस्मिन् तम्=अत्यन्तमसावधानं, नित्यानृतं नित्यम्=अनवरतम् अनृतम्=असत्यं यत्र तं=सर्वदाऽनृतभाषिणम्, अदृढभक्तिकं न दृढा=स्थिरा भक्तिः=श्रद्धा यस्य तम् अदृढभक्तिकं 'शेषाद्विभाषे'ति कप्प्रत्ययः, विसृष्टरागं विसृष्टः=त्यक्तः रागः=प्रेम येन तं=त्यक्तस्नेहं, पटुमानिनम् आत्मानं=स्वं पटुं=दक्षं मन्यते तं=चतुरमानिनं 'दक्षे तु चतुरपेशलपटवः' इत्यमरः, एतान् , षट्=षट्सङ्ख्याकान् , नराधमान्=अधमान् नरान् , नसेवेत=न भजेत् ।

**भावार्थः—**संक्लिष्टकर्मादीनां षण्णां नराधमानां सङ्गतिर्न कदाप्युचिता ॥

**भाषा—**आततायी, भारी लापरवाह, नित्य झूठ बोलनेवाले, अस्थिर भक्तिवाले, स्नेहहीन तथा अपने को चतुर समझनेवाले–इन छः निकृष्ट पुरुषों का सेवन मनुष्य को नहीं करना चाहिए ॥ ३७ ॥

**सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।**
**अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ॥ ३८ ॥**

**अन्वयः—**अर्थाः सहायबन्धनाः, सहायाः च अर्थबन्धनाः ( सन्ति ) । अन्योन्यबन्धनौ एतौ अन्योन्यं विना न सिध्यतः ।

**अर्थः—सहायबन्धना इति** । अर्थाः=द्रव्याणि, सहायाः=अनुचराः बन्धनं=बन्धः येषां ते तादृशाः सेवकसम्बद्धा इत्यर्थः, 'अनुप्लवः सहायश्चानुचरोऽभिचरः समा' इत्यमरः, सहायाः च=अनुचराश्च, अर्थबन्धनाः=द्रव्यसम्बद्धाः सन्ति, अन्योन्यबन्धनौ=परस्परसम्बद्धौ, एतौ=अर्थसहायौ, अन्योन्यं=परस्परं, विना=अन्तरेण, न सिध्यतः=सिद्धिं न गच्छतः ।

**भावार्थः—**द्रव्यं विना सेवका न भवन्ति, विना सेवकैर्न द्रव्यावाप्त्युपायो भवतीति द्वयो-रपि परस्परसम्बद्धत्वम् , कार्यसिद्धिश्च निखिलास्यानुभाभ्या भवतीति ।

**भाषा—**धन सहायकों के अधीन है और सहायक धन के अधीन है। ये दोनों एक दूसरे के अधीन हैं, एक के बिना दूसरा सिद्ध नहीं होता ॥ ३८ ॥

**उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिं च तेभ्योऽनुविधाय काञ्चित् ।**
**स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ ३९ ॥**

**अन्वयः—** मनुष्यः पुत्रान् उत्पाद्य अनृणान् कृत्वा च तेभ्यः काञ्चित् वृत्तिं च अनुविधाय सर्वाः कुमारीः स्थाने प्रतिपाद्य अथ अरण्यसंस्थः मुनिः बुभूषेत् ।

**अर्थः—उत्पाद्येति ।** मनुष्यः, पुत्रान् = सुतान् 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः, उत्पाद्य=उत्पन्नान् कृत्वा, अनृणान् = ऋणरहितान् , कृत्वा=विधाय च, तेभ्यः=पुत्रेभ्यः, काञ्चित्=कामपि, वृत्तिं = वर्तनं जीवननिर्वाहस्योपायं च 'वृत्तिर्वर्तनजीवने' इत्यमरः, अनु-विधाय = सम्पाद्य, सर्वाः = सकलाः, कुमारीः = कन्याः 'कन्या कुमारी'त्यमरः, स्थाने = योग्य-स्थाने सत्कुल इति यावत् , प्रतिपाद्य = वितीर्य विवाह्येत्यर्थः, अथ = अनन्तरम् , अरण्यसंस्थः अरण्ये=वने संस्था=स्थितिर्यस्य तादृशः वानप्रस्थाश्रमे निवसन् , मुनिः=तपस्वी, बुभूषेत् = भवितुमिच्छेत् ।

**भावार्थः—**मनुष्यो गृहस्थाश्रमे तिष्ठन् पुत्रानुत्पाद्य ताननृणान् सवृत्तिकांश्च विधाय कन्याश्च सत्कुलेषु समुचितैर्वरैः सह विवाह्य निश्चिन्तो वानप्रस्थाश्रममङ्गीकुर्वन् मुनित्वं तपसा सम्पा-दयेदिति ॥

**भाषा—**पुत्रों को उत्पन्न करके बाद उन्हें ऋण से मुक्त करके तथा उनके लिए किसी जीविका का उपाय करके और सभी कन्याओं को ठिकाने लगा कर वनवासी होने की इच्छा करे ॥ ३९ ॥

**हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।**
**तत्कुर्यादीश्वरे ह्येतन्मूलं सर्वार्थसिद्धये ॥ ४० ॥**

**अन्वयः—**यत् सर्वभूतानां हितम् आत्मनः च सुखावहं ( स्यात ), तत् ईश्वरे कुर्यात । हि एतत् सर्वार्थसिद्धये मूलम् ( अस्ति ) ।

**अर्थः—हितमिति ।** यत्=कार्यमाचरणं वा, सर्वभूतानां=सर्वप्राणिनां, हितं=पथ्यम् आत्मनः = स्वस्य च, सुखावहं=सुखप्रदं स्यात् , तत्=कार्यमाचरणं वा, ईश्वरे = परमात्मनि, कुर्यात्=समर्पयेत् , 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय ! तत्कु-रुष्व मदर्पण'मिति भगवदुक्तेः, हि=तथाहि, एतत्=इदं कर्मणामीश्वरार्पणं, सर्वार्थसिद्धये सर्वा-र्थानां=सर्वविषयाणां सिद्धये=प्राप्तये, मूलं = मुख्यकारणम् अस्ति ।

**भावार्थः—**सर्वभूतहितं स्वसुखावहं च कार्यं परमात्मनि समर्पणीयं, येन सर्वार्थसिद्धिः स्यादिति ॥

भाषा—जो काम सब प्राणियों के लिए हितकर तथा अपने को सुख देनेवाला हो उसी को ईश्वर को समर्पित करे, क्योंकि यह (ईश्वर को समर्पण करना) सब कार्यों की सिद्धि की जड़ है ॥ ४० ॥

**वृद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च ।**
**व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ॥ ४१ ॥**

**अन्वयः**—यस्य वृद्धिः प्रभावः तेजः सत्त्वम् उत्थानम् एव व्यवसायः च स्यात् तस्य अवृत्तिभयं कुतः ।

**अर्थः—वृद्धिरिति** । यस्य=पुरुषस्य, वृद्धिः=समृद्धिः, प्रभावः=प्रतापः, तेजः=महः, सत्त्वं=बलम्, उत्थानम् एव=उद्यम एव, व्यवसायः=निश्चयः दृढसङ्कल्पश्च, स्यात्=भवेत्, तस्य=पुरुषस्य, अवृत्तिभयम् अवृत्तेः=जीविकाया अभावात् भयं=भीतिः, कुतः=कस्मात् ।

**भावार्थः**—वृद्ध्यादिकं यस्य भवेत्, तस्यावृत्तिभयं न सम्भवतीति ॥

**भाषा**—जिस पुरुष के पास (धन आदि की) बढती, प्रभाव (रोबदाब), तेज, बल, उद्योग तथा निश्चय (दृढसङ्कल्प) हो उसे जीविकाविच्छेद का भय कहाँ से हो सकता है ? ॥ ४१ ॥

**पश्य दोषान् पाण्डवैर्विग्रहे त्वं यत्र व्यथेयुरपि देवाः सशक्राः ।**
**पुत्रैर्वैरं नित्यमुद्विग्नवासो यशःप्रणाशो द्विषतां च हर्षः ॥ ४२ ॥**
**भीष्मस्य कोपस्तव चैवेन्द्रकल्प ! द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।**
**उत्सादयेल्लोकमिमं प्रवृद्धः श्वेतो ग्रहस्तिर्यगिवापतन् खे ॥ ४३ ॥**

**अन्वयः**—त्वं पाण्डवैः (सह) विग्रहे दोषान् पश्य, यत्र सशक्राः देवाः अपि व्यथेयुः । पुत्रैः वैरं, नित्यम् उद्विग्नवासः, यशःप्रणाशः, द्विषतां हर्षः च, हे इन्द्रकल्प ! भीष्मस्य तव एव च द्रोणस्य राज्ञः युधिष्ठिरस्य च प्रवृद्धः कोपः खे तिर्यक् आपतन् श्वेतः ग्रहः इव इमं लोकम् उत्सादयेत् ।

**अर्थः**—पाण्डवैः सह विग्रहे दोषान् युग्मेन दर्शयति—**पश्येति, भीष्मस्येति च** । त्वं=भवान्, पाण्डवैः=युधिष्ठिरादिभिः, सह, विग्रहे=युद्धे, दोषान्=अवगुणान्, पश्य=अवलोकय, यत्र=विग्रहे, सशक्राः=सेन्द्राः, देवाः अपि=अमरा अपि, व्यथेयुः=दुःखमवाप्नुयुः परस्मैपदमार्षम्, पुत्रैः=कौरवैः पाण्डवैश्च सह परस्परं, वैरं=विरोधः, नित्यं=सदा, उद्विग्नवासः=व्याकुलितं यथा स्यात्तथा निवासः, यशःप्रणाशः यशः=अद्य यावदुपार्जितायाः कीर्तेः प्रणाशः=नाशः, द्विषतां=शत्रूणां, हर्षः च=प्रमोदश्च, हे इन्द्रकल्प=हे पुरन्दरोपम ! भीष्मस्य=गाङ्गेयस्य, तव एव च=भवतोऽपिच, द्रोणस्य=द्रोणाचार्यस्य, राज्ञः=नृपतेः, युधिष्ठिरस्य च, प्रवृद्धः=वृद्धिं गतः, कोपः=क्रोधः, खे=सुरवर्त्मनि आकाशे इत्यर्थः, 'अनन्तं सुरवर्त्म ख'मित्यमरः, तिर्यक्=तिरश्चीनं यथा स्यात्तथा, आपतन्=परितः पतित इव दृश्यमानः, श्वेतः ग्रहः इव=धूमकेतुरिव, इमम्=एतं लोकं=भुवनं मर्त्यलोकमित्यर्थः, उत्सादयेत्=नाशयेत् ।

**भावार्थः**—सेन्द्रदेवव्यथाकरे पाण्डवैः सह क्रियमाणे विग्रहेऽनेकेऽमी दोषा निश्चयेन स्युः, ते च यथा—पुत्रेषु परस्परं वैरं, स्थितिश्च चिन्तापूर्णा, यशसो नाशः, द्विषनां प्रहर्षः, भीष्मादीनां प्रवृद्धो भूमण्डलनाशकरः कोपश्चेति ॥

**भाषा**—पाण्डवों के साथ युद्ध करने से होने वाले दोषों को आप देख लें। इससे इन्द्र समेत सारे देवता दुखी होंगे। आपके पुत्रों से ( उनका ) वैर होगा, स्थिति चिन्ता की बेकली रहेगी, कीर्ति का नाश होगा और शत्रुओं को प्रसन्नता होगी। हे इन्द्र के तुल्य ( पराक्रमी ) धृतराष्ट्र ! भीष्म, आप, द्रोण तथा युधिष्ठिर का बढ़ा हुआ क्रोध इस लोक को उसी प्रकार पीडित (नष्ट) कर सकता है जिस प्रकार आकाश में तिरछा विचरता हुआ धूमकेतु ॥ ४२–४३ ॥

**तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।**
**पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ४४ ॥**

**अन्वयः**—तव पुत्रशतं कर्णः एव च पञ्च पाण्डवाः च अखिलां सागराम्बरां पृथिवीम् अनुशासेयुः ।

**अर्थः—तवेति** । तव=ते, पुत्रशतं=पुत्राणां शतं पुत्रा दुर्योधनादय इत्यर्थः, कर्णः एव च=अङ्गराजः कर्णोऽपि च, पञ्च पाण्डवाश्च=युधिष्ठिरप्रभृतयश्च, अखिलां=सम्पूर्णां, सागराम्बरां सागरः=समुद्र एव अम्बरं=वस्त्रं यस्यास्ताम् 'अम्बरं व्योम्नि वाससि' इत्यमरः, समुद्रपर्यन्तामित्यर्थः, पृथिवीं=वसुन्धराम्, अनुशासेयुः=शासनं कुर्युः पालयेयुरिति यावत्, आर्षोऽयं प्रयोगः ।

**भावार्थः**—धार्तराष्ट्राः पाण्डवाः कर्णश्चेति मिलित्वा सर्वे सहैव विस्तीर्णां सम्पूर्णां चतुःसागरगामिनीं पृथिवीं रक्षन्त्विति ॥

**भाषा**—आपके सौ पुत्र कर्ण तथा पाँचों पाण्डव ( मिलकर ) समुद्रवसना ( समुद्र पर्यन्त ) सारी पृथ्वी का शासन करें ॥ ४४ ॥

**धार्तराष्ट्रा वनं राजन् ! व्याघ्राः पाण्डुसुता मताः ।**
**मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन् वनात् ॥ ४५ ॥**

**अन्वयः**—हे राजन् ! धार्तराष्ट्राः वनम्, पाण्डुसुताः व्याघ्राः मताः, ( अतः ) सव्याघ्रं वनं मा छिन्धि, व्याघ्राः वनात् मा नीनशन् ।

**अर्थः—धार्तराष्ट्रा इति** । हे राजन्=हे भूप ! धार्तराष्ट्राः=दुर्योधनादयः, वनं=वनस्वरूपाः सन्ति, पाण्डुसुताः=पाण्डवाः, व्याघ्राः=द्वीपितुल्याः, 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः, मताः=सम्मताः, जनानामिति शेषः, अतः, सव्याघ्रं व्याघ्रैः=युधिष्ठिरादिभिः सहितं=युक्तं, वनं=धार्तराष्ट्ररूपमरण्यं, मा छिन्धि=न निकृन्त, पाण्डवान् धार्तराष्ट्रांश्च न नाशयेरित्यर्थः, व्याघ्राः=शार्दूलाः पाण्डवाः, वनात्=अरण्यात् धार्तराष्ट्रसमुदायात् कारणात्, मा=न, नीनशन्=नष्टा भवेयुः । स्वार्थिको णिच् । 'न माङ्योगे' इत्यडभावः ।

**भावार्थः**—धार्तराष्ट्राः पाण्डवाश्च सर्वदा जीवन्तु, तच्च त्वदधीनं तेषां कलहं दूरीकृत्य सर्वेषां रक्षणं त्वयाऽवश्यं कर्त्तव्यमिति ॥

**भाषा**—हे राजन्! आप के पुत्र वन और पाण्डु के पुत्र बाघों के समान हैं। आप न तो बाघों समेत वन को ही नष्ट कीजिए और वन के कारण बाघ भी नष्ट न हों॥ ४५॥

**न स्याद्वनमृते व्याघ्रान् व्याघ्रा न स्युर्ऋते वनम्।**
**वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान् रक्षति काननम्॥ ४६॥**

**अन्वयः**—व्याघ्रान् ऋते वनं न स्यात्, वनम् ऋते व्याघ्राः न स्युः, हि वनं व्याघ्रैः रक्ष्यते, काननं व्याघ्रान् रक्षति।

**अर्थः**—**न स्यादिति।** व्याघ्रान्=शार्दूलान्, ऋते=विना, वनं=विपिनम् 'अटव्यरण्यं विपिनं गहनं काननं वन'मित्यमरः, न स्यात्=न भवेत्, वनम्=अरण्यम्, ऋते=विना, व्याघ्राः=द्वीपिनः 'शार्दूलद्वीपिनौ व्याघ्र' इत्यमरः, न स्युः=न भवेयुः, हि=निश्चयेन, वनं=काननं, व्याघ्रैः=शार्दूलैः, रक्ष्यते=पाल्यते, काननं=वनं, व्याघ्रान्=द्वीपिनः, रक्षति=पालयति।

**भावार्थः**—विना व्याघ्रं वनं, विना वनं व्याघ्रो न तिष्ठति, तस्माद्वनव्याघ्रौ परस्परं साहाय्यं सम्पादयत इति लोकस्थितिः। पाण्डवधातराष्ट्रयोर्व्याघ्रवनयोः पर्यायेणारोपात् तावप्युभावन्योन्यसाहाय्येनैव स्थातुं शक्नुत इति॥

**भाषा**—बाघों के बिना वन नहीं रह सकता और वन के बिना बाघ नहीं रह सकते। (क्योंकि) वन बाघों द्वारा रक्षित होता है और बाघों की रक्षा वन करता है॥ ४६॥

**न तथेच्छन्ति कल्याणान् परेषां वेदितुं गुणान्।**
**यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः॥ ४७॥**

**अन्वयः**—पापचेतसः परेषां कल्याणान् गुणान् वेदितुं तथा न इच्छन्ति, यथा एषां नैर्गुण्यं ज्ञातुम् इच्छन्ति।

**अर्थः**—**न तथेति।** पापचेतसः पापे=असत्कर्मणि पापं=दुष्टं वा चेतः=चित्तं येषां ते तादृशाः दुर्जनाः दुर्योधनादयः, परेषाम्=अन्येषां, कल्याणान्=कल्याणकारिणः शुभान् वा, गुणान्=शौर्यौदार्यदयादाक्षिण्यादीन्, वेदितुं=ज्ञातुं, तथा=तेन प्रकारेण, न इच्छन्ति=नाभिलषन्ति, यथा=येन प्रकारेण, एषां=युधिष्ठिरादीनां, नैर्गुण्यं=गुणराहित्यं, ज्ञातुं=बोद्धुम्, इच्छन्ति=समीहन्ते।

**भावार्थः**—दुर्योधनादीनां युधिष्ठिरादिषु वर्तमानस्य गुणराशेर्ज्ञाने न प्रवृत्तिरपितु तदवगुणनिर्गुणत्वादिज्ञाने॥

**भाषा**—पापात्मा लोग दूसरों के हितकर गुणों को जानने की उतनी इच्छा नहीं करते जितनी कि उनकी गुणहीनता जानने की करते हैं॥ ४७॥

**अर्थसिद्धिं परामिच्छन् धर्ममेवादितश्चरेत्।**
**न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम्॥ ४८॥**

**अन्वयः**—परान् अर्थसिद्धिम् इच्छन् ( पुरुषः ) आदितः एव धर्मं चरेत्, हि स्वर्गलोकात् अमृतम् इव धर्मात् अर्थः न अपैति ।

**अर्थः—अर्थसिद्धिमिति** । परां = विशिष्टाम्, अर्थसिद्धिम् अर्थस्य = प्रयोजनस्य कार्यस्येत्यर्थः, सिद्धिः = लाभः ताम्, इच्छन् = वाञ्छन्, पुरुषः आदितः एव = प्रथमत एव, धर्मं, चरेत् = कुर्यात्, हि = यस्मात्कारणात्, स्वर्गलोकात्=नाकलोकात्, अमृतम् इव = पीयूषमिव, पीयूषममृतं सुधेत्यमरः, धर्मात्, अर्थः, न अपैति=नापगच्छति ।

**भावार्थः**—अर्थसिद्ध्यर्थं पूर्वत एव धर्माचरणं कार्यं, यतो धर्मादर्थो न दूरीभवति, प्रायः धर्मार्थौ सहैव तिष्ठत इति ॥

**भाषा**—( प्रयोजन ) की उत्कृष्ट सिद्धि चाहनेवाला ( मनुष्य ) पहले ही से धर्म को करना है, क्योंकि जैसे स्वर्गलोक से अमृत अलग नहीं होता वैसे ही अर्थ धर्म से अलग नहीं होता॥४८॥

**यस्यात्मा विरतः पापात् कल्याणे च निवेशितः ।**
**तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४९ ॥**

**अन्वयः**—यस्य आत्मा पापात् विरतः कल्याणे निवेशितः च, तेन या प्रकृतिः विकृतिः च—इदं सर्वं बुद्धम् ।

**अर्थः—यस्येति** । यस्य = पुरुषस्य, आत्मा = बुद्धिः 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म चे'त्यमरः, पापात् = दुष्कृतात्, विरतः = निवृत्तः, कल्याणे = शुभे, निवेशितः = नियोजितश्च, तेन=पुरुषेण, या प्रकृतिः = प्रधानं, विकृतिः = विकारः च-इदम् = एतत्, सर्वं = सकलं, बुद्धं = ज्ञातम् ।

**भावार्थः**—पापान्निवृत्तः शुभे नियोजितश्च यस्यात्मा, स प्रकृतिविकृत्यादिकं सर्वमेवावगतवानिति ॥

**भाषा**—जिसका चित्त पाप से अलग है तथा शुभ कृत्य में लगाया गया है उसे प्रकृति ( जगत् का करणभूत मूलतत्त्व अव्यक्त ) और विकृति ( महत्, अहङ्कार, पञ्चतन्मात्रादि ) स्वरूप सारे संसार का रहस्य मालूम हो जाता है ॥ ४९ ॥

**यो धर्ममर्थं कामं च यथाकालं निषेवते ।**
**धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ५० ॥**

**अन्वयः**—यः यथाकालं धर्मम् अर्थं कामं च निषेवते, सः इह अमुत्र च धर्मार्थकामसंयोगं विन्दति ।

**अर्थः—य इति** । यः = पुरुषः, यथाकालं कालमनतिक्रम्येति यथाकालं = यथावसरं, धर्मम्=आचारम्, अर्थं=प्रयोजनं, कामं च=इच्छां च, निषेवते = सततं भजते, सः=नरः, इह= अस्मिल्लोके, अमुत्र=परलोके च, धर्मार्थकामसंयोगं धर्मार्थकामानां=पुरुषार्थत्रिवर्गस्य, संयोगः= सम्बन्धः तं, विन्दति = लभते ।

**भावार्थः**—समयानुसारं धर्मार्थकामसेवी नरः संसारे परत्र च तत्संयोगमवाप्नोतीति ॥

**भाषा**—जो पुरुष यथासमय धर्म, अर्थ तथा काम का सेवन करता है, वह इस लोक तथा परलोक में धर्म, अर्थ तथा काम के संयोग को प्राप्त करता है ॥ ५० ॥

**सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।**
**स श्रिया भाजनं राजन्! यश्चापत्सु न मुह्यति ॥ ५१ ॥**

**अन्वयः**—हे राजन्! यः क्रोधहर्षयोः उत्थितं वेगं न सन्नियच्छति, यः आपत्सु च न मुह्यति, सः श्रियः भाजनम् (अस्ति)।

**अर्थः—सन्नियच्छतीति** । हे राजन् = हे नृप! यः=पुरुषः, क्रोधहर्षयोः क्रोधश्च=कोपश्च हर्षश्च = प्रमोदश्च तयोः उत्थितम्=उत्पन्नं, वेगं = जवं, न सन्नियच्छति=न अवरुणद्धि, यः = पुरुषः, आपत्सु च = विपत्सु च, न, मुह्यति=मोहं गच्छति, सः, श्रियः=सम्पदः, भाजनं=पात्रम् आधार इत्यर्थः, अस्ति ।

**भावार्थः**—यः किल हर्षोत्पन्नं कोपोत्पन्नं च वेगं श्लथयति, विपदि च न मोहमधिगच्छति, तस्मिन् श्रीर्निवसति ॥

**भाषा**—हे राजन्! जो क्रोध तथा हर्ष के उठे हुए वेग को रोकता है तथा विपत्तियों मे मोह को नहीं प्राप्त होता उसे लक्ष्मी की प्राप्ति होती है ॥ ५१ ॥

**बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।**
**यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ५२ ॥**
**अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।**
**तृतीयं धनलाभं तु बलमाहुर्मनीषिणः ॥ ५३ ॥**
**यत्त्वस्य सहजं राजन्! पितृपैतामहं बलम् ।**
**अभिजातबलं नामतच्चतुर्थं बलं स्मृतम् ॥ ५४ ॥**
**येन त्वेतानि सर्वाणि सङ्गृहीतानि भारत ।**
**यद्बलानां बलं श्रेष्ठं तत् प्रज्ञाबलमुच्यते ॥ ५५ ॥**

**अन्वयः**—हे भारत! हे राजन्! पुरुषाणां नित्यं पञ्चविधं बलं मे निबोध—यत् तु बाहुबलं नाम (तत्) कनिष्ठं बलम् उच्यते, भद्रं ते (अस्तु), अमात्यलाभः द्वितीयं बलम् उच्यते, मनीषिणः धनलाभं तु तृतीयं बलम् आहुः, यत् तु अस्य सहजं पितृपैतामहं बलम् अस्ति; तत् अभिजातबलं नाम चतुर्थं बलं स्मृतम्, येन तु सर्वाणि एतानि सङ्गृहीतानि; यत् बलानां श्रेष्ठं बलं तत् प्रज्ञाबलम् उच्यते ।

**अर्थः**—सर्वदा पुरुषेषु वर्तमानस्य बलस्य पाञ्चविध्यं दर्शयति चतुर्भिः पद्यैः—**बलं पञ्चविधमित्यादि** । हे भारत=हे भरतवंशोत्पन्न, हे राजन् = हे नृप, पुरुषाणां = नराणां, नित्यं= सदा वर्तमानं, पञ्चविधं = पञ्चप्रकारकं, बलं = शक्तिम्, मे = मत्सकाशात्, निबोध = जानीहि । कानि कानि तानीत्याह-यत्तु, बाहुबलं = भुजबलं, तत्, कनिष्ठं बलम् = अवरं बलम्

उच्यते=कथ्यते, भद्रं=कल्याणं, ते=तव, अस्तु=भवतु, अमात्यलाभः=सचिवप्राप्तिः, द्वितीयं==द्वैतीयीकं, बलम्, उच्यते=अभिधीयते, मनीषिणः=धीराः पुरुषाः 'धीरो मनीषी ज्ञः प्राज्ञ' इत्यमरः, धनलाभं तु=धनावाप्ति तु, तृतीयं=तार्तीयीकं, बलम्, आहुः=कथयन्ति, यत्तु अस्य=पुरुषस्य, सहजं=सहोत्पन्नं, पितृपैतामहं=पितृपितामहसम्बन्धि, बलम् अस्ति, तत् अभिजात·बलं नाम=कुलीनबलनाम्ना प्रसिद्धं, चतुर्थं=तुरीयं, बलं, स्मृतं=कथितम्, येन=बलेन, तु, सर्वाणि=सकलानि, एतानि=पूर्वोक्तानि चतुर्विधानि बलानि, सङ्गृहीतानि=सङ्कलितानि, भवन्ति, यच्च, बलानां मध्ये, श्रेष्ठं=सर्वोत्तमं बलमस्ति, तत्, प्रज्ञाबलं=बुद्धिबलम्, उच्यते=अभिधीयते।

**भावार्थः**—मनुष्येषु बाहुबलममात्यलाभबलं धनलाभबलमभिजातबलं प्रज्ञाबलं चेति पञ्च·विधं बलं क्रमेणोत्तरोत्तरमुपचीयमानं तिष्ठति। बाहुबलं सर्वेभ्यः कनिष्ठं, प्रज्ञाबलं तु सर्वेत उत्कृष्टतममिति॥

**भाषा**—हे भरतवंशी राजन्! आपका कल्याण हो। नित्यरूप से वर्तमान रहनेवाले पुरुषों के पाँच प्रकार के बल को आप मुझसे समझ लीजिए! जिसका बाहुबल नाम है वह सब से छोटा बल है। (उससे बड़ा) (सच्चे) मन्त्रियों की प्राप्तिस्वरूप दूसरा बल कहा जाता है, बुद्धिमान् लोगों ने धन लाभ को तीसरा (अमात्यलाभ से बड़ा) बल बताया है। मनुष्य का जन्मसिद्ध बापदादों से मिला हुआ अभिजातबल (कुलीनत्वबल) नामक चौथा (धन लाभ से बडा) बल कहा गया है, जिस बल के द्वारा इन सब बलों का संग्रह हो जाता है तथा जो सब बलों में श्रेष्ठ है वह बुद्धिबल कहलाता है॥ ५२–५५॥

**महते योऽपकाराय नरस्य प्रभवेन्नरः।**
**तेन वैरं समासज्ज्य दूरस्थोस्मीति नाश्वसेत्॥ ५६॥**

**अन्वयः**—यः नरः नरस्य महते अपकाराय प्रभवेत्, तेन वैरं समासज्ज्य 'दूरस्थः अस्मि' इति न आश्वसेत्।

**अर्थः—महत इति**। यः, नरः=पुरुषः, नरस्य=मनुष्यस्य, महते=बृहते भूयस इत्यर्थः, अपकाराय=अहिताय अहितं कर्तुमिति यावत्, प्रभवेत्=शक्नुयात्, तेन=नरेण, वैरं=विद्वेषं, समासज्ज्य=प्रकल्प्य, दूरस्थः दूरे तिष्ठतीति दूरस्थः=दूरवर्ती, अस्मीति, न आश्वसेत्=न विश्वसेत्।

**भावार्थः**—महापकारकरणप्रभुणा नरेण सह वैरमासज्ज्य यत्र क्वापि स्थितः पुरुषस्ततो भयं सम्भावयन्नात्मानं ततो दूरवर्तिनं कलयेदिति॥

**भाषा**—जो मनुष्य दूसरे का भारी अपकार (नुकसान) कर सकता है उससे वैर ठानने पर यह सोच कर निश्चिन्त न हो जाय कि मैं उससे दूर हूँ॥ ५६॥

**स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु।**
**भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति॥ ५७॥**

**अन्वयः**—कः प्राज्ञः स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु भोगेषु आयुषि च विश्वासं कर्तुम् अर्हति ।

**अर्थः—स्त्रीष्विति।।** कः, प्राज्ञः=मनीषी, स्त्रीषु=योषित्सु, राजसु=नृपेषु, सर्पेषु=भुजङ्गेषु 'सर्पः पृदाकुर्भुजग' इत्यमरः, स्वाध्यायप्रभुशत्रुषु स्वाध्यायः=वेदाध्ययनं प्रभुः=अधिपः 'प्रभुः परिवृढोऽधिप' इत्यमरः, शत्रवः=रिपवः, तेषु, भोगेषु=सुखेषु 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो'रित्यमरः, आयुषि=जीवितकाले 'आयुर्जीवितकालो ना' इत्यमरः, विश्वासं=विस्रम्भं 'समौ विस्रम्भविश्वासा'वित्यमरः, कर्तुं=विधातुम्, अर्हति=उचितोऽस्ति ।

**भावार्थः**—प्राज्ञो मनुष्यः स्त्रीप्रभृतिषु नैव विश्वसेदिति ॥

**भाषा**—कौन बुद्धिमान् पुरुष स्त्रियों, राजाओं, सांपों, अपने पठित पाठ, स्वामी, शत्रु, भोगों तथा आयु में विश्वास कर सकता है ॥ ५७ ॥

**प्रज्ञाशरेणाभिहतस्य जन्तोश्चिकित्सकाः सन्ति न चौषधानि ।**
**न होममन्त्रा न च मङ्गलानि नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५८ ॥**

**अन्वयः**—प्रज्ञाशरेण अभिहतस्य जन्तोः औषधानि च न, होममन्त्राः न, मङ्गलानि च न, आथर्वणाः न, सुसिद्धाः अगदाः अपि न, चिकित्सकाः सन्ति ।

**अर्थः—प्रज्ञाशरेणेति ।** प्रज्ञाशरेण प्रज्ञा=बुद्धिरेव शरः=बाणः तेन, अभिहतस्य=विद्धस्य, जन्तोः=प्राणिनः 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इत्यमरः, औषधानि=वनस्पतयः, न, होममन्त्राः=रोगशान्तिकरा हवनमन्त्राः, न, मङ्गलानि=मङ्गलकराणि कार्याणि, न, आथर्वणाः=अथर्ववेदोक्ता मन्त्रा उपायाश्च, न, सुसिद्धाः=सम्यक् संशोध्य सम्पादिताः, अगदाः=पारदाद्य ओषधिविशेषाश्च, न, चिकित्सकाः=चिकित्साकर्तारः आरोग्यप्रापका इति यावत्, सन्ति=भवन्ति ।

**भावार्थः**—वाग्बाणैर्मर्मणि हतो जन्तुश्चिकित्सकैरौषधादिद्वारा न नीरोगः कर्तुं शक्यते ॥

**भाषा**—बुद्धिरूपी बाण से मारे गये पुरुष के चिकित्सक ( अच्छा करनेवाले ) न जड़ी बूटियां, न होम के मन्त्र, न माङ्गलिक कृत्य, न अथर्वणवेद में कहे गये ( झाड़–फूक के ) मन्त्र तथा उपाय और न सिद्ध औषधियां ( पारद भस्म ) ही हैं ॥ ५८ ॥

**सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ! ।**
**नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५९ ॥**

**अन्वयः**—हे भारत ! सर्पः च अग्निः च सिंहः च कुलपुत्रः च मनुष्येण न अवज्ञेयाः, हि एते सर्वे अतितेजसः ( भवन्ति ) ।

**अर्थः—सर्प इति ।** हे भारत=हे भरतकुलोत्पन्न राजन् ! सर्पः च=भुजङ्गश्च, अग्निः च=वह्निश्च, सिंहः च=केसरी च 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरि'रित्यमरः, कुलपुत्रः कुलस्य=वंशस्य पुत्रः=सन्ततिः कुलपुत्रश्च=ज्ञातिरिति यावत्, मनुष्येण=मानवेन, न अवज्ञेयाः=नापमाननीयाः, हि=यतः, एते=पूर्वोक्ताः, सर्वे=सकलाः, अतितेजसः अति=अत्यन्तं, तेजः=शक्तिः येषां ते अतितेजसः, भवन्ति ।

**भावार्थः**—अतितेजस्विनां सर्पाग्निसिंहकुलपुत्राणां कदाप्यवज्ञा नरेण न कर्तव्येति ॥

**भाषा**—हे भरतवंशी ! मनुष्य को साँप, आग, सिंह तथा खानदानी आदमी का अनादर नहीं करना चाहिए, क्योंकि ये सभी बड़े तेजस्वी होते हैं ॥ ५९ ॥

**अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।**
**न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥ ६० ॥**

**अन्वयः**—लोके अग्निः महत् तेजः (अस्ति), सः दारुषु गूढः (सन्) तिष्ठति, यावत् परैः न उद्दीप्यते, (तावत्) तत् दारु च न उपयुङ्क्ते ।

**अर्थः—अग्निरिति ।** लोके=भुवने, अग्निः=वह्निः, महत् तेजः=अतिप्रकाशमयः पदार्थः अस्ति, सः, दारुषु=काष्ठेषु, 'काष्ठं दारु' इत्यमरः, गूढः सन्=अप्रकटितः सन्, तिष्ठति =वर्तते, यावत्=यावत्कालपर्यन्तं, परैः=अन्यैः, न उद्दीप्यते=न प्रज्वाल्यते, तावत्=तावत्कालपर्यन्तं, तत्=अग्निगर्भं, दारु=काष्ठं च, न उपयुङ्क्ते=स्वोपयोगं कुरुते न ज्वलयतीति यावत् ।

**भावार्थः**—महातेजा अप्यग्निर्दारुण्यन्तर्हितः सन् तिष्ठति, आश्रयीभूतं दारु च न दीपयति यावदन्यैर्नोद्दीप्यते ॥

**भाषा**—अग्नि इस लोक में बड़ा भारी तेज (तेजयुक्त पदार्थ) है, वह काठों में छिपा रहता है । जब तक दूसरों द्वारा वह उद्दीप्त नहीं किया जाता तब तक काठ को उपयोग में नहीं लाता अर्थात् नहीं जलाता ॥ ६० ॥

**स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।**
**तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ६१ ॥**

**अन्वयः**—(नरेण) यदा सः एव खलु दारुभ्यः निर्मथ्य दीप्यते, (तदा) तत् दारु अन्यत् वनं च तेजसा आशु निर्दहति ।

**अर्थः—स एवेति ।** नरेण, यदा=यस्मिन् काले, सः एव=अग्निरेव, खलु=निश्चयेन, दारुभ्यः=काष्ठेभ्यः, निर्मथ्य=मन्थनं विधाय सङ्घृष्येत्यर्थः, दीप्यते=प्रज्वल्यते, तदा, तत्= स्वाधारभूतं, दारु=काष्ठम् , अन्यत्=इतरत् , वनं च=काननं च, तेजसा=दाहकशक्त्या, आशु=शीघ्रं, निर्दहति=भस्मीकरोति ।

**भावार्थः**—स्वाश्रयान्तर्हितं तेजो यावन्न परैरुद्भाव्यते तावत्तत्तथैव तिष्ठति, उद्भाव्यमानं पुनः स्वाधिकरणमन्यच्च सकलं विनाश्यैव विरमति ॥

**भाषा**—वही जब काठों से मथकर (रगड़कर) प्रज्वलित किया जाता है, तब वह अपने तेज (जलाने की शक्ति) से शीघ्र ही उस काठ तथा और दूसरे वन को जला डालता है ॥६१॥

**एवमेव कुले जाताः पावकोपमतेजसः ।**
**क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ६२ ॥**

**अन्वयः**—एवम् एव कुले जाताः पावकोपमतेजसः ( पुरुषाः ) क्षमावन्तः निराकाराः ( च सन्तः ) काष्ठे अग्निः इव शेरते ।

**अर्थः—एवमेवेति** । एवम् एव = ईदृगेव, कुले = वंशे, जाताः = उत्पन्नाः, पावकोपमतेजसः पावकः = अग्निः उपमा=सादृश्यं यस्य तत्तादृशं=वह्नितुल्यं, तेजः=प्रभावः येषां ते तादृशाः पुरुषाः, क्षमावन्तः=क्षमाशीलाः, निराकाराः=गुप्तरूपाश्च सन्तः, काष्ठे=दारुणि, अग्निरिव = ज्वलन इव, शेरते = स्वपन्ति तिष्ठन्तीत्यर्थः ।

**भावार्थः**—एवमेव काष्ठेऽग्निरिव कुले जातास्तेजस्विनस्ते क्षमां धारयन्तः स्वाकारं निगृह्य तिष्ठन्तीति ॥

**भाषा**—इसी भाँति अग्नि के समान तेजवाले कुलीन मनुष्य क्षमा धारण किये हुए काठ में अग्नि की भाँति अलक्ष्य रूप से ( इस पृथ्वी में ) पड़े रहते हैं ॥ ६२ ॥

**लताधर्मा त्वं सपुत्रः शालाः पाण्डुसुता मताः ।**
**न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ६३ ॥**

**अन्वयः**—सपुत्रः त्वं लताधर्मा मतः, पाण्डुसुताः शालाः मताः, लता महाद्रुमम् अनाश्रिता ( सती ) जातु न वर्धते ।

**अर्थः—लताधर्मेति** । सपुत्रः = पुत्रैरन्वितः, त्वं = भवान्, लताधर्मा लतायाः=व्रततेः धर्मः=गुणः अस्मिन्नस्तीति तादृशः 'धर्मादनिच् केवला'दित्यनिच्, मतः = सम्मतः, पाण्डुसुताः = पाण्डवाः, शालाः=वृक्षाः 'अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः' इत्यमरः, मताः= सम्मताः, जनैरिति शेषः, लता = वल्ली, महाद्रुमं=महावृक्षम्, अनाश्रिता = अनालम्बिता सती, जातु = कदाचित्, न वर्धते=वृद्धिं विशालतां न प्राप्नोतीत्यर्थः ।

**भावार्थः**—जनैः पाण्डवेषु वृक्षत्वं सपुत्रे धृतराष्ट्रे लतात्वं च सम्भाव्यते, तस्मात् लतारूपाणां युष्माकं समृद्धिर्महावृक्षरूपं पाण्डुपुत्रसमूहमाश्रित्यैव स्यादिति ॥

**भाषा**—आप पुत्रों समेत लता के समान हैं और पाण्डु के पुत्र वृक्ष के समान हैं । किसी बड़े वृक्ष का आश्रय लिये बिना लता कभी नहीं बढ़ती ॥ ६३ ॥

**वनं राजंस्तव पुत्रोऽम्बिकेय सिंहान् वने पाण्डवांस्तात ! विद्धि ।**
**सिंहैर्विहीनं हि वनं विनश्येत् सिंहा विनश्येयुर्ऋते वनेन ॥ ६४ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि पञ्चमोऽध्यायः ।

**अन्वयः**—हे राजन् आम्बिकेय ! तव पुत्रः वनम्, हे तात ! वने पाण्डवान् सिंहान् विद्धि, हि सिंहैः विहीनं वनं विनश्येत्, वनेन ऋते सिंहाः विनश्येयुः ।

**अर्थः—वनमिति** । हे राजन्=हे भूप ! हे आम्बिकेय = अम्बिकायाः अपत्यं पुमन् ! धृतराष्ट्र ! 'पुत्रोऽम्बिकेये'त्यत्र वृद्धयभावपूर्वरूपसन्धी आर्षौ, तव = ते, पुत्रः=सुतः दुर्योधनः पुत्रत्वजात्यभिप्रायेणैकवचनम्, दुर्योधनमुखाः सर्वे पुत्रा इत्यर्थः, वनं = काननस्वरूपं, वृक्षाणा-

मिवानेकेषां त्वत्पुत्राणामाधारभूतत्वादिति भावः, अस्तीति शेषः, हे तात = हे प्रभो ! वने= त्वत्पुत्रलक्षणे कानने, पाण्डवान्=युधिष्ठिरप्रभृतीन् पञ्च, सिंहान्=केसरिणः, विद्धि=जानीहि, हि = निश्चयेन, सिंहैः=केसरिभिः, विहीनं=रहितं, वनं = काननं, विनश्येत्=नाशमाप्नुयात् वनेन=विपिनेन, ऋते=विना, ऋतेशब्दयोगे तृतीयाविधिरार्षः, 'अन्यारादितरर्ते' इति पञ्चमी-विधानात् , सिंहाः = मृगेन्द्राः 'सिंहो मृगेन्द्रः पञ्चास्य' इत्यमरः, विनश्येयुः=नष्टा भवेयुः।

**भावार्थः**—भूप ! त्वत्पुत्रा अनेकत्वाद्वनसधर्माणः, तेजस्वित्वाच्च पाण्डवाः सिंहरूपाः। सिंहैर्विना वनस्य वनत्वमेव नास्ति तस्मात्तन्नाशः, रक्ष्यमन्तरा न रक्षकस्यावश्यकतेति वना-भावे सिंहनाशसम्भव इति ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिविनिर्मितायां तत्त्वार्थदर्शिनी-व्याख्यायां-
विदुरनीतिव्याख्यायां पञ्चमोऽध्यायः समाप्तः ।

**भाषा**—हे अम्बिका के पुत्र, तात धृतराष्ट्र ! अपने पुत्रों को वन और पाण्डवों को वनमें रहनेवाले सिंह समझिए । सिंह के बिना वन और वन के बिना सिंह नष्ट हो जाते हैं ॥६४॥

श्री अनन्तरामशास्त्री वेताल कृत विदुरनीति की हिन्दी भाषा टीका
सरलार्थबोधिनी का पाँचवां अध्याय समाप्त ।

## अथ षष्ठोऽध्यायः ।

**विदुर उवाच**–विदुरः=नयज्ञः, उवाच=राजानं धृतराष्ट्रं प्रति पुनर्नीत्युपदेशवचनं जगाद ।

**ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।**
**प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ १ ॥**

**अन्वयः**—स्थविरे आयति ( सति ) यूनः प्राणाः ऊर्ध्वम् उत्क्रामन्ति हि, ( सः ) प्रत्यु-त्थानाभिवादाभ्यां तान् पुनः प्रतिपद्यते ।

**अर्थः—ऊर्ध्वमिति** । स्थविरे = वृद्धे पुरुषे, 'प्रवयाः स्थविरो वृद्ध' इत्यमरः, आयति = आगच्छति सति, आङ्पूर्वादिण्धातोः शतृप्रत्ययान्तात् सप्तमीयम् , यूनः=तरुणस्य पुरुषस्य, प्राणाः = पञ्चसङ्ख्याका असवः 'पुंसि भून्म्यसवः प्राणा' इत्यमरः, ऊर्ध्वम् = उपरि शरीराद्बहि-रित्यर्थः, उत्क्रामन्ति,=निर्गच्छन्ति, हीति निश्चये, सः = युवा पुरुषः, प्रत्युत्थानाभिवादाभ्यां प्रत्युत्थानम् = उत्थानपूर्वकसत्कारकरणम् अभिवादः = प्रणामश्चेति ताभ्यां, तान् = बहिर्नि-र्गतान् प्राणान् , पुनः=भूयः, प्रतिपद्यते=प्राप्नोति ।

**भावार्थः**—वृद्धपुरुषमुद्दिश्याभ्युत्थानं प्रणामश्चेति दीर्घायुष्करं यूनः पुरुषस्य कर्तव्यमिति।

**भाषा**—विदुर बोले—बुड्ढा जब जवान के पास आता है तो उस जवान के प्राण ऊपर निकल आते हैं, परन्तु खड़े होने तथा नमस्कार करने पर वह जवान उन्हें (प्राणों को) फिर पाता है ॥ १ ॥

**पीठं दत्त्वा साधवेऽभ्यागताय आनीयापः परिनिर्णिज्य पादौ ।**
**सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां ततो दद्यादन्नमवेक्ष्य धीरः ॥ २ ॥**

**अन्वयः**—धीरः अभ्यागताय साधवे पीठं दत्त्वा अपः आनीय पादौ परिनिर्णिज्य सुखं पृष्ट्वा आत्मसंस्थां प्रतिवेद्य ततः अवेक्ष्य अन्नं दद्यात् ।

**अर्थः—पीठमिति ।** धीरः=गम्भीरो बुद्धिमान् पुरुषः, अभ्यागताय=गृहमागतायातिथिरूपाय, साधवे=सज्जनाय, पीठम्=उपवेशनयोग्यमासनं, दत्त्वा=वितीर्य, अपः=वारि जलमिति यावत्, 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः आनीय=उपस्थाप्य, पादौ=अभ्यागतस्य चरणौ, परिनिर्णिज्य=संशोध्य प्रक्षाल्येत्यर्थः, सुखम्=अनामयं तदीयकुशलप्रश्नमित्यर्थः, पृष्ट्वा=सम्पृच्छ्य, आत्मसंस्थां=स्वस्य स्थितिं स्वीयं वृत्तान्तमिति यावत्, प्रतिवेद्य=निवेद्य, ततः=तदुपचारप्रदर्शनानन्तरम्, अवेक्ष्य=सम्यग्यथोचितं विलोक्य, अन्नं=भोजनं, दद्यात्=वितरेत् ।

**भावार्थः**—आसनप्रदानपादप्रक्षालनकुशलप्रश्नस्वीयवृत्तान्तनिवेदनपूर्वं धीरेण पुरुषेण गृहमागतः सत्पुरुषः सादरं भोजयितव्य इति ॥

**भाषा**—धीर पुरुष सज्जन अतिथि को पीढ़ा ( आसन ) देकर, फिर पानी लाकर उसके चरणों को धोने के बाद कुशल पूछ कर अपनी स्थिति को बतावे और तब देख भाल करके उसे भोजन देवे ॥ २ ॥

**यस्योदकं मधुपर्कं च गां च न मन्त्रवित्प्रतिगृह्णाति गेहे ।**
**लोभाद्भयादथ कार्पण्यतो वा तस्यानर्थं जीवितमाहुरार्याः ॥ ३ ॥**

**अन्वयः**—मन्त्रवित् यस्य गेहे लोभात् भयात् अथवा कार्पण्यतः उदकं मधुपर्कं च गां च न गृह्णाति, आर्याः तस्य जीवितम् अनर्थम् आहुः ।

**अर्थः—यस्येति ।** मन्त्रवित्=श्रोत्रियः, यस्य=यस्य पुरुषस्य, गेहे=गृहे, लोभात्=तृष्णायाः, भयात्=साध्वसात्, 'भीतिर्भीः साध्वसं भय'मित्यमरः, अथवा=किंवा, कार्पण्यतः=कृपणतायाः, उदकं=जलं, मधुपर्कं=दधिमधुघृतमिश्रं भक्षणीयं वस्तु च, गां च=आदराय दक्षिणार्थं प्रदत्तां धेनुं च, न गृह्णाति=नोपादत्ते न स्वीकरोति, आर्याः=सन्तः, तस्य=पुरुषस्य, जीवितं=जीवनम्, अनर्थं=व्यर्थं निष्फलमिति यावत्, आहुः=कथयन्ति ।

**भावार्थः**—लोभादिकारणवशात् समर्पितमपि जलादिकं श्रोत्रियेण यद्गृहे नोपादीयते तज्जीवनं व्यर्थमेवेति ॥

**भाषा**—वेद-मन्त्र जाननेवाला पुरुष जिस पुरुष के घर में लोभ, भय अथवा कृपणता के कारण जल, मधुपर्क अथवा गाय को ग्रहण नहीं करता उसके जीवन को श्रेष्ठ पुरुषों ने व्यर्थ कहा है ॥ ३ ॥

**चिकित्सकः शल्यकर्तावकीर्णी स्तेनः क्रूरो मद्यपो भ्रूणहा च ।**
**सेनाजीवी श्रुतिविक्रायकश्च भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ४ ॥**

**अन्वयः**—चिकित्सकः शस्त्रकर्ता अवकीर्णी स्तेनः क्रूरः मद्यपः भ्रूणहा च सेनाजीवी श्रुति-विक्रायकः च अतिथिः भृशं प्रियः अपि उदकार्हः न ( अस्ति )।

**अर्थः—चिकित्सक इति ।** चिकित्सकः=वैद्यः 'रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके' इत्यमरः, शस्त्रकर्ता=शस्त्रकर्ता, अवकीर्णी=क्षतव्रतः नाशितब्रह्मचर्यानुष्ठान इति यावत्, 'अव-कीर्णी क्षतव्रत' इत्यमरः, स्तेनः=चौरः, क्रूरः=घातुकः 'नृशंसो घातुकः क्रूर' इत्यमरः, मद्यपः मद्यं=मदिरां 'मदिरा कश्यमद्ये चे'त्यमरः, पिबतीति मद्यपः=मदिरापः 'आतोऽनुपसर्गे कः' इति कः, भ्रूणहा भ्रूणं=गर्भं हन्ति=नाशयतीति भ्रूणहा=गर्भनाशकरः 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः, सेनाजीवी=सैन्यवृत्तिः, श्रुतिविक्रायकः श्रुतिं=वेदं 'श्रुतिः स्त्री वेद आम्नायस्त्रयी'त्य-मरः, विक्रीणातीति तच्छीलः च=वेतनं गृहीत्वा वेदान् पाठयिता, अतिथिः=गृहागतः सत्पुरुषः, 'अतिथिर्ना गृहागते' इत्यमरः, भृशम्=अत्यन्तं, प्रियः अपि=इष्टोऽपि प्रियतमोऽपीत्यर्थः, उद-कार्हः उदकस्य=जलादिप्रदानस्य, अर्हः=योग्यः, न=नास्ति ।

**भावार्थः**—प्रियतमा अपि गृहागताश्चिकित्सकादयो नोदकादिप्रदानेन सत्कारार्हाः ॥

**भाषा**—वैद्य, हथियार बनानेवाला, ब्रह्मचर्य से भ्रष्ट, चोर, क्रूर, शराबी, भ्रूणहत्या करनेवाला, सेना से जीविका चलानेवाला तथा वेद बेचनेवाला अर्थात् वेतन पाकर वेदों को पढ़ानेवाला अतिथि अत्यन्त प्रिय होने पर भी पानी (स्वागतोपचार) के योग्य नहीं है ॥ ४ ॥

**अविक्रेयं लवणं पक्वमन्नं दधि क्षीरं मधु तैलं घृतं च ।**
**तिला मांसं फलमूलानि शाकं रक्तं वासः सर्वगन्धा गुडाश्च ॥५॥**

**अन्वयः**—लवणं पक्वम् अन्नं दधि क्षीरं मधु तैलं घृतं च तिलाः मांसं फलमूलानि शाकं रक्तं वासः सर्वगन्धाः गुडाः च—( इति एतत् सर्वम् ) अविक्रेयम् ( अस्ति )।

**अर्थः—अविक्रेयमिति ।** लवणं, 'मधु क्षौद्रं पक्वम् अन्नं=पाचितं भोज्यान्नं, दधि, क्षीरं=दुग्धं क्षीरं पयः समम्' इत्यमरः, मधु=क्षौद्रं 'दुग्धं माक्षिकादी'त्यमरः, तैलं, घृतम्=आज्यं 'घृतमाज्यं हविः सर्पि'रित्यमरः, तिलाः, मांसम्=आमिषं 'मांसं पललं क्रव्यमामिष'मित्यमरः, फलानि च मूलानि च फलमूलानि, शाकं, रक्तं=लोहितवर्णं, वासः=वस्त्रं 'वस्त्रमाच्छादनं वास' इत्यमरः, सर्वगन्धाः सर्वे च=सम्पूर्णाश्च ते गन्धाः=गन्धयुक्ताः पदार्थाः, गुडाः=इक्षु-विकाराश्च—इत्येतत्सर्वम्, अविक्रेयम्=अविक्रेतव्यम् विक्रयानर्हम् अस्ति ।

**भावार्थः**—श्रुतिविक्रायकप्रसङ्गेनाविक्रेयाणि लवणादीनि पञ्चदश वस्तूनि प्रतिपादि-तानि, तेषां विक्रेतारश्च पुरुषा अपि यद्यपि प्रियतमा अतिथयः स्युस्तथापि ते नोदकादिना सत्कारार्हा इति ॥

**भाषा**—नमक, पकाया अन्न, दही, दूध, शहद, तेल, घी, तिल, मांस, फल, मूल, साग, लाल कपड़ा, हर प्रकार के सुगन्धित द्रव्य तथा गुड़ इन्हें बेंचना नहीं चाहिए ॥ ५ ॥

**अरोषणो यः समलोष्टाश्मकाञ्चनः प्रहीणशोको गतसन्धिविग्रहः ।**
**निन्दाप्रशंसोपरतः प्रियाप्रिये त्यजन्नुदासीनवदेष भिक्षुकः ॥ ६ ॥**

**अन्वयः**—अरोषणः समलोष्टाश्मकाञ्चनः प्रहीणशोकः गतसन्धिविग्रहः निन्दाप्रशंसोपरतः उदासीनवत् प्रियाप्रिये त्यजन् यः ( अस्ति ) एषः भिक्षुकः ।

**अर्थः—अरोषण इति** । अरोषणः=अक्रोधनः, समलोष्टाश्मकाञ्चनः लोष्टानि च=लेष्टवश्च 'लोष्टानि लेष्टवः पुंसी'त्यमरः, अश्मानश्च =पाषाणाश्च 'पाषाणप्रस्तरग्रावोपलाश्मानः' इत्यमरः, काञ्चनं च = महारजतं च सुवर्णमिति यावत्, 'महारजतकाञ्चने' इत्यमरः, समानि= तुल्यानि लोष्टाश्मकाञ्चनानि यस्य तादृशः, प्रहीणशोकः प्रहीणः=नष्टः शोकः = शुक् यस्य यः शोकाभावेन सदानन्द इत्यर्थः, गतसन्धिविग्रहः = सन्धिः सन्धानकरणं विग्रहः = युद्धं च तौ गतौ=दूरीभूतौ नष्टाविति यावत्, यस्य तादृशः, निन्दाप्रशंसोपरतः निन्दा = गर्हणा 'कुत्सा निन्दा च गर्हणे' त्यमरः, प्रशंसा = स्तुतिः ताभ्याम् उपरतः = पृथग्भूतः, उदासीनवत्=तटस्थ इव, प्रियाप्रिये = इष्टानिष्टे, त्यजन्=मुञ्चन्, योऽस्ति, एषः=एतादृशः नरः, भिक्षुकः भिक्षतीति भिक्षुः भिक्षुरेव भिक्षुकः=अतिथिः, स्वार्थे कः, अस्तीति शेषः ।

**भावार्थः**—यः किल क्रोधं विहाय लोष्टाश्मकाञ्चनेषु समदृष्टिः गतशोकः सन्धिविग्रहनिन्दाप्रशंसाविमुखश्च तटस्थ इव प्रियाप्रियत्यागी वर्तते, स एव वस्तुतोऽतिथिरिति ॥

**भाषा**—जो पुरुष क्रोधरहित, मिट्टी, पत्थर तथा सोने को एक समझनेवाला, शोकरहित, सन्धि ( स्नेह ) तथा विग्रह ( वैर ) से रहित, निन्दा और प्रशंसा दोनों से अलग तथा प्रिय और अप्रिय दोनों को तटस्थ की भाँति छोड़ देनेवाला हो, वही ( वास्तविक ) अतिथि है ॥६॥

**नीवारमूलेङ्गुदशाकवृत्तिः सुसंयतात्माग्निकार्येषु चोद्यः ।**
**वने वसन्नतिथिष्वप्रमत्तो धुरन्धरः पुण्यकृदेष तापसः ॥ ७ ॥**

**अन्वयः**—नीवारमूलेङ्गुदशाकवृत्तिः सुसयतात्मा अग्निकार्येषु चोद्यः वने ( अपि ) वसन् अतिथिषु अप्रमत्तः पुण्यकृत् एषः धुरन्धरः तापसः ।

**अर्थः—नीवारमूलेत्यादि** । नीवारमूलेङ्गुदशाकवृत्तिः नीवाराः=तृणधान्यानि मुन्यन्नानि. 'तृणधान्यानि नीवारा' इत्यमरः, मूलानि = मूलकादीनि, इङ्गुदानि=इङ्गुदीफलानि 'इङ्गुदी तापसतरु'रित्यमरः, शाकानि भोजनसाधनानि पत्रपुष्पादीनि च वृत्तिः=वर्तनं यस्य तादृशः 'शाकाख्यं पत्रपुष्पादि', 'वृत्तिर्वर्तनजीवने' इत्यमरौ:, सुसंयतात्मा = जितेन्द्रियः, अग्निकार्येषु= अग्निहोत्रादिकर्मसु, चोद्यः=विधेयः सावधान इत्यर्थः, वने=अरण्येऽपि, वसन् = निवसन्, अतिथिषु=अभ्यागतेषु, अप्रमत्तः=सत्कारविधौ जागरूकः, पुण्यकृत्=पुण्यकर्मा, एषः=नरः, धुरन्धरः=श्रेष्ठः, तापसः=तपस्वी, अस्तीति ।

**भावार्थः**—नीवारादिसाधारणभोजी जितेन्द्रियोऽग्निहोत्री वनवासपरोऽतिथिपूजकः पुण्यकर्मा तापसश्च श्रेष्ठोऽतिथिरिति ॥

**भाषा**—नीवार ( तिन्नी ), कन्दमूल, हिंगोट तथा साग से जीवन निर्वाह करनेवाला, संयमी, अग्निहोत्र आदि का सेवन करनेवाला तथा वन में रहते हुए भी अतिथियों के विषय में असावधान न रहनेवाला पुण्यवान् पुरुष ही श्रेष्ठ तपस्वी है ॥ ७ ॥

**अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।**
**दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ८ ॥**

**अन्वयः**—( नरः ) बुद्धिमतः अपकृत्य दूरस्थः अस्मि इति न आश्वसेत् , ( यतः ) बुद्धिमतः बाहू दीर्घौ ( भवतः ), हिंसितः ( सः ) याभ्यां हिंसति ।

**अर्थः—अपकृत्येति ।** नरः, बुद्धिमतः=मनिमतः पुरुषस्य, अपकृत्य=अपकारं कृत्वा, दूरस्थः अस्मि=दूरे तिष्ठामीति, न आश्वसेत्=निश्चिन्तो न स्यात् , यतः, बुद्धिमतः=धीधनस्य, बाहू=भुजौ, दीर्घौ=आयतौ, भवतः, हिंसितः=प्रताडितः सः बुद्धिमान् , याभ्यां=बाहुभ्यां, हिंसति=हिनस्ति मारयतीत्यर्थः, आर्षोऽयं प्रयोगः ।

**भावार्थः**—बुद्धिमतोऽपकारः कदापि न विधेयः, स हि बुद्धया तत्प्रतीकारं कुर्वन्नपकर्तुर्नाशाय प्रभवति ॥

**भाषा**—बुद्धिमान् पुरुष का अपकार करने पर यह सोच कर कि 'मैं तो उससे दूर हूँ' निश्चिन्त नहीं हो जाना चाहिए। क्योंकि बुद्धिमान् पुरुष की बाहें लम्बी होती हैं, जिनसे कि वह, मारे जाने पर, मारता है ॥ ८ ॥

**न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।**
**विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ९ ॥**

**अन्वयः**—( पुरुषः ) अविश्वस्ते न विश्वसेत् , विश्वस्ते न अतिविश्वसेत् , विश्वासात् उत्पन्नं भयं मूलानि अपि निकृन्तति ।

**अर्थः—न विश्वसेदिति ।** पुरुषः, अविश्वस्ते=विश्वासानर्हे पुंसि, न विश्वसेत्=विश्वासं न कुर्यात् , विश्वस्ते=विश्वासार्हे च, न अतिविश्वसेत्=नाधिकं विश्वासं कुर्यात् , विश्वासात्=विस्रम्भात् 'समौ विस्रम्भविश्वासा'वित्यमरः, उत्पन्नं=जातं, भयं=साध्वसं, मूलानि अपि=स्थितिकारणभूतमायुरपि, निकृन्तति=छिनत्ति, नाशयतीत्यर्थः ।

**भावार्थः**—यस्मिन् कस्मिन्नपि पुंसि न विश्वासः कर्तव्यः, विश्वस्ते च नाधिकः सः कार्यः। विश्वासोत्तरमुत्पन्नं भयं विश्वासकर्तारं समूलमुन्मूलयतीति ॥

**भाषा**—विश्वास के अयोग्य पुरुष में विश्वास नहीं करना चाहिए और विश्वास के योग्य पुरुष में भी अधिक विश्वास नहीं करना चाहिए, क्योंकि विश्वासके कारण उत्पन्न हुआ भय ( प्रवञ्चन ) जड़ को भी काट डालता है ॥ ९ ॥

**अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः ।**
**श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् ॥ १० ॥**

**अन्वयः**—( पुमान् ) स्त्रीणां अनीर्षुः गुप्तदारः च संविभागी प्रियंवदः श्लक्ष्णः मधुरवाक् च भवेत् , आसां वशगः न भवेत् ।

**अर्थः—अनीर्षुरिति ।** पुमान् , स्त्रीणां=योषिताम् , अनीर्षुः=ईर्ष्यारहितः, गुप्तदारः

गुप्ताः=रक्षिताः दाराः=स्त्री येन सः 'दाराः स्यात्तु कुटुम्बिनी'त्यमरः, संविभागी=सम्पदः सम्यग्विभागकर्ता, प्रियंवदः प्रियं वदतीति प्रियंवदः=प्रियभाषणशीलः 'प्रियवशे वदः खच्' इति खच् प्रत्ययः, खित्वान्मुमागमः, श्लक्ष्णः=सुन्दरः, मधुरवाक्=मधुरभाषी च, भवेत्=स्यात्, आसां=स्त्रीणां, वशगः=वशङ्गतः तासामधीन इति यावत्, न भवेत्=न स्यात्।

**भावार्थः**—मनुष्यः स्त्रियं रक्षेत्, तया सह कोमलं मधुरं च भाषेत, परं न तदधीनः स्यात्, अपि च विहायेर्ष्यां प्रियं वदन् सम्पदः सम्यग् विभजेच्च॥

**भाषा**—मनुष्य को ईर्ष्यारहित, स्त्री की रक्षा करनेवाला, सम्पत्ति का बँटवारा करनेवाला, प्रिय वचन बोलनेवाला तथा स्त्रियों के प्रति कोमल और मीठे वचन बोलनेवाला होना चाहिये, परन्तु उसे उनका ( स्त्रियों का ) वशवर्ती नहीं होना चाहिए ॥ १० ॥

**पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।**
**स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ११ ॥**

**अन्वयः**—पूजनीयाः महाभागाः पुण्याः गृहदीप्तयः च स्त्रियः गृहस्य श्रियः उक्ताः, तस्मात् विशेषतः रक्ष्याः च ( सन्ति )।

**अर्थः—पूजनीया इति** । पूजनीयाः=अर्चनीयाः सम्मान्या इत्यर्थः, महाभागाः= सौभाग्यशालिन्यः, पुण्याः=पवित्राः,गृहदीप्तयः गृहस्य=भवनस्य दीप्तयः=द्युतयः 'भाश्छविद्युतिदीप्तयः' इत्यमरः, स्त्रियः=योषितः, गृहस्य=गेहस्य, श्रियः=सम्पत्तयः, उक्ताः=कथिताः, तस्मात्=गृहश्रीकथनात्, विशेषेण=विशेषतः, रक्ष्याः=रक्षणीयाः सन्ति ।

**भावार्थः**—पुण्याः सौभाग्यशालिन्यश्च स्त्रियो गृहस्य शोभासम्पादिकाः श्रिय एव, तस्मात्तत्सम्माननं तद्रक्षणं च प्रयत्नेन पुम्भिः कर्तव्यमिति ॥

**भाषा**—स्त्रियाँ पूज्य, महाभाग्यशालिनी, पवित्र घर की कान्ति और लक्ष्मी कही गई हैं, इसलिए उनकी विशेष रूप से रक्षा करनी चाहिए ॥ ११ ॥

**पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।**
**गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ।**
**भृत्यैर्वाणिज्यचारं च पुत्रैः सेवेत च द्विजान् ॥ १२ ॥**

**अन्वयः**—( पुरुषः ) अन्तःपुरं पितुः दद्यात्, महानसं मातुः दद्यात्, गोषु च आत्मसमं दद्यात्, कृषिं स्वयम् एव व्रजेत्, भृत्यैः वाणिज्यचारं पुत्रैः द्विजान् च सेवेत ।

**अर्थः—पितुरिति** । पुरुषः, अन्तःपुरं=शुद्धान्तं तत्संरक्षणाधिकारमित्यर्थः, 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्चे'त्यमरः, पितुः=पित्रे, दाधातुयोगे सम्प्रदानत्वाच्चतुर्थीविधानमावश्यकम्, सम्प्रदानत्वाविवक्षायां षष्ठी, दद्यात्=वितरेत् समर्पयेत्, पितुरधीनं कुर्यादिति यावत्, एवमेवोत्तरवाक्येऽपि, महानसं=पाकस्थानं 'रसवत्यां तु पाकस्थानमहानसे' इत्यमरः, तत्सम्बद्धमखिलं कार्यं, मातुः=मात्रे, दद्यात्=अर्पयेत्, गोषु=गोप्रभृतिषु पशुषु

च तद्रक्षणादिकार्ये इत्यर्थः, आत्मसमं = स्वतुल्यं, दद्यात्=नियोजयेत्, कृषिं=क्षेत्रे कर्षणादिकं कार्यं प्रति, स्वयम् एव = आत्मनैव, व्रजेत् = गच्छेत्, भृत्यैः = सेवकैः तद्द्वारा, वाणिज्यचारं= व्यापारकरणं, पुत्रैः=सुतैः सुतद्वारेत्यर्थः, द्विजान्=विप्रान्, सेवेत = सेवां कुर्यात्। षट्पादोऽयं श्लोको ज्ञेयः।

**भावार्थः**—स्वयं संसारकार्यभारवहने शक्तिमान् नरः शुद्धान्तमहानसगोविषयेषु क्रमेण पितरं मातरं वाऽऽत्मसमं नियोज्य कृषिकार्यं तु स्वेनैव, व्यापारं च भृत्यद्वारा, ब्राह्मणसेवां च पुत्रद्वारा सम्पादयेत्।

**भाषा**—पिता को अन्तःपुर, माता को रसोई घर तथा अपने ही समान किसी व्यक्ति को गायों को सौंप देना चाहिए और अपने खेती की देख भाल कर नौकरों द्वारा व्यापार तथा पुत्रों द्वारा ब्राह्मणों की सेवा करनी चाहिए॥ १२॥

**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति॥ १३॥**

**अन्वयः**—अद्भ्यः अग्निः, ब्रह्मतः क्षत्रम्, अश्मनः लोहम् उत्थितम्, सर्वत्रगं तेषां तेजः स्वासु योनिषु शाम्यति।

**अर्थः**—**अद्भ्य इति।** अद्भ्यः=जलात्, अग्निः = वैश्वानरः, ब्रह्मतः=ब्राह्मणात्, क्षत्रं= क्षत्रियजातिः, अश्मनः = पाषाणात्, लोहं = कालायसं 'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी' इत्यमरः, उत्थितम्=उत्पन्नम्, लिङ्गविपरिणामेनाग्नौ, मूलस्वरूपेण च क्षत्रेऽप्यन्वयोऽस्य 'उत्थित'शब्दस्य, सर्वत्रगं सर्वत्र गच्छतीति सर्वत्रगं=सर्वगामि, गमेर्डः, तेषां = जलब्राह्मणपाषाणानां, तेजः = दीप्तिः, स्वासु=स्वकीयासु, योनिषु=उत्पत्तिस्थानेषु, शाम्यति=शान्तं लीनं च भवति।

**भावार्थः**—जलादिभ्योऽग्न्यादिकमुत्पद्यते, सर्वत्र च विसृत्यान्ते तत्रैव लीयत-इत्युत्पत्तिविनाशयोरेकमेव स्थानमग्न्यादीनामिति॥

**भाषा**—जल से आग, ब्राह्मण से क्षत्रिय तथा पत्थर से लोहा उत्पन्न होता है इनका सब जगह जानेवाला तेज अपने अपने उत्पत्तिस्थान में शान्त हो जाता है॥ १३॥

**नित्यं सन्तः कुले जाताः पावकोपमतेजसः।**
**क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते॥ १४॥**

**अन्वयः**—कुले जाताः पावकोपमतेजसः क्षमावन्तः सन्तः काष्ठे अग्निः इव निराकाराः नित्यं शेरते।

**अर्थः**—**नित्यमिति।** पञ्चमाध्याये किञ्चिद्भेदेन व्याख्यातमपीदं पद्यं पुनः प्रसङ्गानुसारं पर्यायैर्विभूष्य स्पष्टीक्रियते। कुले=सत्कुले, जाताः=उत्पन्नाः, पावकोपमतेजसः=अग्नितुल्यप्रभावाः 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु' इत्यमरः, क्षमावन्तः = क्षमाशीलाः, सन्तः =

सज्जनाः, काष्ठे = दारुणि, अग्निः इव = वैश्वानर इव, निराकाराः = गूहिताकृतयः, नित्यं = सदा, शेरते=तिष्ठन्ति ।

**भावार्थः**—यथाग्निर्दारुणि गूढस्तिष्ठति तथा साधवो बहुगुणा अपि स्वाकारगोपनपुरस्सरं यत्र क्वचिदुत्पद्यन्ते तत्रैव स्थिताः कालं नयन्तीति ॥

**भाषा**—सत्कुल में उत्पन्न अग्नि के समान तेजवाले क्षमाशील सज्जन काठ में अग्नि की भाँति छिपे तौर से पड़े रहते हैं ॥ १४ ॥

**यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।**
**स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥ १५ ॥**

**अन्वयः**—बाह्याः च आभ्यन्तराः च ये यस्य मन्त्रं न जानन्ति, सर्वतश्चक्षुः सः राजा ऐश्वर्यं चिरम् अश्नुते ।

**अर्थः—यस्येति** । बाह्याः=बहिर्भूताः प्रकृतयः, च=अपिच, आभ्यन्तराः च=सचिवादयश्च प्रकृतयः, ये=पुरुषाः, यस्य=राज्ञः, मन्त्रं=रहस्यं, न जानन्ति=न विदन्ति, सर्वतश्चक्षुः सर्वतः= सर्वस्थलेषु चक्षुः=ईक्षणम् 'ईक्षणं चक्षुरक्षिणी' इत्यमरः, यस्य तादृशः, सः=गूढमन्त्रः, राजा= भूपः, ऐश्वर्यं=सम्पत्तिं, चिरं=चिराय, अश्नुते=प्राप्नोति ।

**भावार्थः**—यदीयं मन्त्रं वेदितुं नान्तरङ्गो नच बाह्यः कोऽपि प्रभवति, स भूपः ससुखं चिरायैश्वर्यं भजते नात्र सन्देहलेशोऽपीति ॥

**भाषा**—जिसके गुप्त विचार बाहरी तथा भीतरी (अन्तरङ्ग) लोग नहीं जानते, वह सब तरफ दृष्टि रखनेवाला राजा स्थायी ऐश्वर्य का उपभोग करता है ॥ १५ ॥

**करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ।**
**धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥ १६ ॥**

**अन्वयः**—( यः ) धर्मकामार्थकार्याणि करिष्यन् न प्रभाषेत, तु कृतानि एव दर्शयेत्, तथा मन्त्रः न भिद्यते ।

**अर्थः—करिष्यन्निति** । यः, धर्मकामार्थकार्याणि = धर्मश्च, कामश्च अर्थश्च, धर्मकामार्थानां कार्याणि 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते' इति न्यायानुसारेण कार्यशब्दस्य प्रत्येकं सम्बन्धात् धर्मकार्याणि कामकार्याणि अर्थकार्याणि-इति, करिष्यन् = विधास्यन्, न प्रभाषेत = नेतस्ततः प्रकाशयेत्, तु = किन्तु, कृतानि एव = विहितान्येव, दर्शयेत्=प्रकाशयेत्, तथा=तेन प्रकारेण, अनुष्ठानेनेति शेषः, मन्त्रः=गुप्तविचारः, न=नैव, भिद्यते=भेदं गच्छति ।

**भावार्थः**—यस्य धर्म्याणि काम्यान्यर्थ्यान्यपि कार्याणि पूर्वमप्रकाशितानि कार्यसिद्ध्यनन्तरं स्फुटीभवन्ति, तस्य मन्त्रभेदः कदापि न भवतीति ॥

**भाषा**—धर्म, अर्थ तथा काम के कार्यों के करने की इच्छा करता हुआ उनके बारे में कहे नहीं, जब वे पूरे हो जाँय तभी उन्हें प्रकट करे। ऐसा करने से मन्त्र (गुप्त विचार) फूटता नहीं १६

**गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः।**
**अरण्ये निःशलाके वा तत्र मन्त्रोऽभिधीयते ॥ १७॥**

**अन्वयः**—गिरिपृष्ठं प्रासादं वा उपारुह्य निःशलाके अरण्ये वा तत्र रहोगतः मन्त्रः अभिधीयते।

**अर्थः—गिरिपृष्ठमिति।** गिरिपृष्ठं = पर्वतशिखरं, प्रासादं = राजनिवासस्थानं वा 'प्रसादो देवभूभुजा'मित्यमरः, निःशलाके = तृणाद्यावरणरहिते विजने इत्यर्थः 'विविक्तविजन-च्छन्ननिःशलाकास्तथा रह'इत्यमरः, अरण्ये=वने वा, तत्र=पूर्वोक्तेषु, रहोगतः रहसि गतःरहो-गतः=उपांशु यथा स्यात्तथा मन्त्रिनः,'रहश्चोपांशु'इत्यमरः, मन्त्रः=मन्त्रणा, अभिधीयते=कथ्यते।

**भावार्थः**—साधारणजनदुर्लभेषु स्थानेषु गत्वा मन्दस्वरेण विचारं कुर्वीत ॥

**भाषा**—पहाड़ की चोटी अथवा महल के ऊपर चढ़कर निर्जन वन में, और तृणरहित गुप्त स्थान मे सलाह करनी चाहिए ॥ १७॥

**नाऽसुहृत्परमं मन्त्रं भारताऽर्हति वेदितुम्।**
**अपण्डितो वापि सुहृत् पण्डितो वाप्यनात्मवान् ॥ १८ ॥**

**अन्वयः**—हे भारत! असुहृत् वा सुहृत् अपि अपण्डितः वा पण्डितः अपि अनात्मवान् परमं मन्त्रं वेदितुं न अर्हति।

**अर्थः—नासुहृदिति।** हे भारत=हे भरतकुलोत्पन्न राजन्! असुहृत् = अमित्रः, वा = अथवा, सुहृत् अपि=मित्रमपि, अपण्डितः=सदसद्विवेकिबुद्धिरहितः, विचारशून्यः मूर्ख इति यावत्, वा=किंवा, पण्डितः अपि=विवेक्यपि, अनात्मवान्=आत्माभिमानरहितः चपलवागित्यर्थः, परमं=श्रेष्ठं मुख्यं वा, मन्त्रं=परस्परविचारं, वेदितुं=ज्ञातुं, न अर्हति=न शक्नोति।

**भावार्थः**—सुहृद्भिन्नः, मूर्खः सुहृद्वा पण्डितोऽपि चञ्चलो वा नैव परमरहस्यभूतं मन्त्रं वेदितुमर्ह इति ॥

**भाषा**—हे भरतवंशी! जो अपना मित्र न हो, जो मित्र होता हुआ भी मूर्ख हो अथवा जो बुद्धिमान् होता हुआ भी अपने वश में न हो (जो जी में आवे वही बक डाले) ऐसा पुरुष मुख्य गुप्त विचार जानने के योग्य नहीं है ॥ १८॥

**नापरीक्ष्य महीपालः कुर्यात् सचिवमात्मनः।**
**अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥ १९॥**

**अन्वयः**—महीपालः अपरीक्ष्य आत्मनः सचिवं न कुर्यात्, हि अमात्ये अर्थलिप्सा मन्त्र-रक्षणं च एव तिष्ठतः।

**अर्थः—नापरीक्ष्येति।** महीपालः=पृथ्वीपालकः, अपरीक्ष्य=सम्यगनालोच्य, आत्मनः= स्वस्य, सचिवं=मन्त्रिणं, न कुर्यात्=न विदध्यात्, परीक्ष्यैव मन्त्री कार्य इति भावः, हि= यस्मात् कारणात्, अमात्ये=मन्त्रिणि, तदाश्रयेणेत्यर्थः, अर्थलिप्सा अर्थस्य = द्रव्यस्य लिप्सा= प्राप्तीच्छा, मन्त्ररक्षणं=मन्त्रगुप्तिश्चैव, तिष्ठतः।

**भावार्थः**—राजा सम्यक्परीक्ष्यैव पुरुषं मन्त्रिपदे नियोजयेत् , यतस्तस्मादेव सम्भाव्यते यदयं प्रजाभ्यो ग्राह्यं करादिकं द्रव्यं सङ्ग्रहीष्यति, राज्यसम्बन्धिनं मन्त्रं प्रच्छन्नं स्थापयिष्यतीति ॥

**भाषा**—राजा बिना जाँचे बूझे किसी को अपना मन्त्री न बनावे, क्योंकि धनप्राप्ति की इच्छा तथा मन्त्र का गुप्त रखना मन्त्री पर ही निर्भर है ॥ १९ ॥

**कृतानि सर्वकार्याणि यस्य पारिषदा विदुः ।**
**धर्मे चार्थे च कामे च स राजा राजसत्तमः ॥ २० ॥**

**अन्वयः**—पारिषदाः धर्मे च अर्थे च कामे च यस्य सर्वकार्याणि कृतानि विदुः, सः राजा राजसत्तमः ( अस्ति ) !

**अर्थः—कृतानीति** । पारिषदाः=सभासदः धर्मे च=आचारे च, अर्थे च=द्रव्यविषये च, कामे च=कामसम्बन्धिन्यामिच्छायां च, एवं त्रिवर्गे 'त्रिवर्गो धर्मकामार्थैः'रित्यमरः, यस्य=राज्ञः, सर्वकार्याणि=सकलकृत्यानि, कृतानि=विहितानि सन्त्येव, विदुः=जानन्ति, सः=पूर्वोक्तगुणयुक्तः, राजा=भूपः, राजसत्तमः=राजश्रेष्ठः, अस्ति ।

**भावार्थः**—धर्मार्थकामविषयेष्वन्यतरस्य यदारब्धस्य कार्यस्य समनुष्ठानोत्तरं सर्वेषां ज्ञानं भवति, स किल राजसु सर्वश्रेष्ठो ज्ञेय इति ॥

**भाषा**—जिस राजा के धर्म, अर्थ तथा काम को लक्ष्य करके किये गये कामों को उसके सभासद भी समाप्त होने पर ही जानते हैं, वह राजा राजाओं में श्रेष्ठ है ॥ २० ॥

**गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥ २१ ॥**

**अन्वयः**—गूढमन्त्रस्य तस्य नृपतेः असंशयं सिद्धिः ( भवति ) ।

**अर्थः—गूढमन्त्रस्येति** । गूढमन्त्रस्य गूढः=प्रच्छन्नः मन्त्रः=विचारः यस्य तथाभूतस्य, तस्य, नृपतेः=राज्ञः, असंशयं=निःसन्देहं, सिद्धिः=विजयादिलक्षणा कार्यसिद्धिः, भवति। द्विपादयं श्लोकः ।

**भावार्थः**—यो हि राजा स्वराजमन्त्रं निगूहति सोऽवश्यं सिद्धिमाप्नोतीति ॥

**भाषा**—मन्त्र को गुप्त रखने वाले उस राजा को निःसन्देह सिद्धि प्राप्त होती है ॥२१॥

**अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति ।**
**स तेषां विपरिभ्रंशाद् भ्रश्यते जीवितादपि ॥ २२ ॥**

**अन्वयः**—यः मोहात् अप्रशस्तानि कार्याणि अनुतिष्ठति, सः तेषां विपरिभ्रंशात् जीवितात् अपि भ्रश्यते ।

**अर्थः—अप्रशस्तानीति** । यः=पुरुषः, मोहात्=अज्ञानात् , अप्रशस्तानि=निन्द्यानि, कार्याणि=कृत्यानि, अनुतिष्ठति=विदधाति, सः, तेषां=निन्द्यकर्मणां विपरिभ्रंशात्=नाशात् , जीवितात् अपि=जीवनादपि, भ्रश्यते=अधःपतति जीवितमपि नाशयतीत्यर्थः, आत्मनेपदमार्षम्।

**भावार्थः**—निन्द्यकर्मकर्ता तन्नाशाज्जीवितमपि जहातीति हेयं निन्द्यकर्मानुष्ठानमिति ॥

**भाषा—**जो पुरुष मोह ( अज्ञान ) वश निन्द्य कर्मों को करता है, वह उन (निन्द्यकर्मों) के नष्ट हो जाने से जीवन से भी हाथ धो बैठता है ॥ २२ ॥

**कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम् ।**
**तेषामेवाननुष्ठानं पश्चात्तापकरं मतम् ॥ २३ ॥**

**अन्वयः—**प्रशस्तानां कर्मणां तु अनुष्ठानं सुखावहं ( भवति ), तेषाम् एव अननुष्ठानं पश्चात्तापकरं मतम् ।

**अर्थः—कर्मणामिति ।** प्रशस्तानां=स्तुत्यानां, कर्मणां=कार्याणां तु, अनुष्ठानं=सम्पादनं, सुखावहं=सुखोत्पादकं भवति, तेषाम् एव=प्रशस्तकर्मणामेव, अननुष्ठानम्=अकरणं, पश्चात्तापकरम्=अनुतापकरं 'पश्चात्तापोऽनुतापश्चे'त्यमरः, मतं=सम्मतम् ।

**भावार्थः—**प्रशस्तकर्मानुष्ठानेन सुखं तदननुष्ठानेन च पश्चात्तापजनितं दुःखं लभ्यत इति ।

**भाषा—**शुभकर्मों का करना सुख देनेवाला और उन्हीं का न करना पछतावे में डालने वाला माना गया है ॥ २३ ॥

**अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।**
**एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥ २४ ॥**

**अन्वयः—**विप्रः वेदान् अनधीत्य यथा श्राद्धं न अर्हति, एवम् अश्रुतषाड्गुण्यः ( नरः ) मन्त्रं श्रोतुं न अर्हति ।

**अर्थः—अनधीत्येति ।** विप्रः=ब्राह्मणः, वेदान्=श्रुतीः, अनधीत्य=अपठित्वा, यथा=येन प्रकारेण, श्राद्धं=पितुद्देशेन क्रियमाणं कर्म, कार्यमिति शेषः, न अर्हति=योग्यो नास्ति, एवम्=ईदृगेव, अश्रुतषाड्गुण्यः षड्गुणाः=सन्धिविग्रहादयः षट्सङ्ख्याकगुणाः त एव षाड्गुण्यं, स्वार्थे ष्यञ् प्रत्ययः, न श्रुतं=नाकर्णितं षाड्गुण्यं येन सः, नरः, मन्त्रं=गुप्तविचारं, श्रोतुम्=आकर्णयितुं, नार्हति=नोचितोऽस्ति ।

**भावार्थः—**ब्राह्मणोऽप्यनधीतवेदो यथा न श्राद्धाधिकारी तथाऽनभिज्ञातषड्गुणरहस्यो न मन्त्रश्रवणाधिकारीति ॥

**भाषा—**जैसे वेदों को पढ़े बिना ब्राह्मण श्राद्ध का अधिकारी नहीं होता, वैसे ही नीति के छः गुणों ( सन्धि, विग्रह, यान, आसन, द्वैधीभाव तथा समाश्रय ) को न जाननेवाला पुरुष सलाह को सुनने का अधिकारी नही है ॥ २४ ॥

**स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।**
**अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ! ॥ २५ ॥**

**अन्वयः—**हे नृप ! स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः अनवज्ञातशीलस्य ( पुंसः ) पृथिवी स्वाधीना ।

**अर्थः—स्थानवृद्धिक्षयज्ञस्येति ।** हे नृप=हे राजन् ! स्थानवृद्धिक्षयज्ञस्य स्थानं च=उपचयापचयराहित्यं च वृद्धिश्च=उपचयश्च क्षयश्च=अपचयश्च तान् त्रिवर्गरूपान् जानाति-

=वेत्तीति तस्य, षाड्गुण्यविदितात्मनः षाड्गुण्येन=षड्गुणप्रवीणत्वेन विदितः=प्रसिद्धः आत्मा=शरीरं यस्य तस्य, अनवज्ञातशीलस्य न अवज्ञातम्=अपमानितं शीलं=स्वभावः यस्य तादृशस्य, पुंसः=पुरुषस्य राज्ञः इत्यर्थः, पृथिवी=पृथ्वी, स्वाधीना=स्वायत्ता, भवति ।

**भावार्थः**—यः क्षितिपतिरुपचयापचयौ तदुभयाभावं चेति त्रिवर्गं सन्धिविग्रहादिषड्गुणप्रयोगावसरं च जानाति, यस्य च स्वभावो लोके जनेन सत्क्रियते, स समग्रां पृथ्वीं स्वाधीनां कर्तुं शक्नोतीति ॥

**भाषा**—हे राजन् ! बढ़ती, घटती तथा इन दोनों का अभाव—इस त्रिवर्ग को जाननेवाले, छः हों गुणों के ( जानने के ) कारण विख्यात स्वरूपवाले तथा अनिन्दित स्वभाववाले पुरुष के वश में ( सारी ) पृथ्वी रहती है ॥ २५ ॥

**अमोघक्रोधहर्षस्य स्वयं कृत्वान्ववेक्षिणः ।**
**आत्मप्रत्ययकोशस्य वसुदैव वसुन्धरा ॥ २६ ॥**

**अन्वयः**—अमोघक्रोधहर्षस्य स्वयं कृत्वा अन्ववेक्षिणः आत्मप्रत्ययकोशस्य ( राज्ञः ) वसुन्धरा वसुदा एव ( भवति ) ।

**अर्थः—अमोघक्रोधहर्षस्येति** । अमोघक्रोधहर्षस्य क्रोधश्च=कोपश्च हर्षश्च=प्रीतिश्च क्रोधहर्षौ 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः, अमोघौ=न निरर्थकौ सफलावित्यर्थः, 'मोघं निरर्थक'मित्यमरः, क्रोधहर्षौ यस्य तादृशस्य निग्रहानुग्रहसमर्थस्येत्यर्थः, स्वयं=स्वेन, कृत्वा=कार्यं सम्पाद्य, अन्ववेक्षिणः=पश्चात् पर्यालोचकस्य, आत्मप्रत्ययकोशस्य आत्मनः=स्वस्य प्रत्ययः=विश्वासः तस्मिन् तदाश्रयेण वर्तमानः कोशः=अर्थौघगृहं यस्य तस्य=स्वप्रत्ययनिर्व्यूढकोशागारव्यवहारस्य, राज्ञः, वसुन्धरा=वसुधा 'वसुधोर्वी वसुन्धरे'त्यमरः, वसुदा एव=धनदैव भवति ।

**भावार्थः**—यो राजा स्वयं कार्याणि वीक्षते, कोशागारं स्वाधीनमेव सर्वदा स्थापयति, क्रोधहर्षाभ्यां निग्रहानुग्रहौ च कर्तुं पारयति, स पृथिव्याः सर्वदैव धनमाप्नोतीति ॥

**भाषा**—जिसका क्रोध तथा हर्ष विफल नहीं होता, जो कार्यों की देख भाल स्वयं करता है तथा जो अपने खजाने का स्वयं ज्ञान रखता है, उसके लिए ( सारी ) पृथ्वी ही धन देनेवाली है ॥ २६ ॥

**नाममात्रेण तुष्येत छत्रेण च महीपतिः ।**
**भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २७ ॥**

**अन्वयः**—महीपतिः नाममात्रेण छत्रेण च तुष्येत, अर्थान् भृत्येभ्यः विसृजेत् , एकः सर्वहरः नः भवेत् ।

**अर्थः—नाममात्रेणेति** । महीपतिः=राजा, नाममात्रेण=राजा—इत्येव केवलं नाम्नैव, छत्रेण=राजचिन्हत्वेन ध्रियमाणेनातपत्रेण च 'छत्रं त्वातपत्र'मित्यमरः, तुष्येत=प्रसीदेत् , तुष्येतेत्यात्मनेपदमार्षम् , अर्थान्=द्रव्याणि, भृत्येभ्यः=सेवकेभ्यः, विसृजेत्=दद्यात्, एकः=

एकाकी 'एकाकी त्वेक एककः' इत्यमरः, सर्वहरः सर्वस्य=करादिरूपेण प्राप्तस्य सकलस्य धनादिकस्य हरः=अपहर्ता, न भवेत्=न स्यात् ।

**भावार्थः**—राजा नाम्ना छत्रेण च सन्तोषं धारयेत्, एकाकी न सर्वमपहरेत् किन्तु भृत्येभ्योऽपि दद्यात् ॥

**भाषा**—राजा केवल नाम तथा राजत्व चिह्न से सन्तुष्ट रहे धन आदि को नौकरों के लिए छोड़ दे, अकेले ही सब कुछ न हड़प ले ॥ २७ ॥

**ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा ।**
**अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २८ ॥**

**अन्वयः**—ब्राह्मणः ब्राह्मणं वेद, भर्ता स्त्रियं वेद, नृपतिः अमात्यं वेद तथा राजा एव राजानं च वेद ।

**अर्थः—ब्राह्मणमिति ।** ब्राह्मणः=विप्रः, ब्राह्मणं=विप्रं, वेद=जानाति, भर्ता=पतिः, 'धवः प्रियः पतिर्भर्ता' इत्यमरः, स्त्रियं=भार्यां, वेद=जानाति, नृपतिः=राजा, अमात्यं=सचिवं 'मन्त्री धीसचिवोऽमात्य' इत्यमरः, वेद=जानाति, तथा=तेनैव प्रकारेण, राजा एव=नृपतिरेव, राजानं=नृपतिं च, वेद=जानाति ।

**भावार्थः**—यथा ब्राह्मणो ब्राह्मणं वेत्ति, तथा भर्ता स्त्रियं, नृपतिरमात्यं, राजा च राजानं वेत्ति ॥

**भाषा**—ब्राह्मण को ब्राह्मण, स्त्री को पति, मन्त्री को राजा तथा राजा को भी राजा ही ( भलीभाँति ) जानता है ॥ २८ ॥

**न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः ।**
**न्यग्भूत्वा पर्युपासीत वध्यं हन्याद्बले सति ।**
**अहताद्धि भयं तस्माज्जायते न चिरादिव ॥ २९ ॥**

**अन्वयः**—वशम् आपन्नः वध्यतां गतः शत्रुः न मोक्तव्यः, वध्यं न्यक् भूत्वा पर्युपासीत, बले सति हन्यात्, हि अहतात् तस्मात् न चिरात् इव भयं जायते ।

**अर्थः—न शत्रुरिति ।** वशम्=अधीनताम्, आपन्नः=प्राप्तः, वध्यतां=वधार्हत्वं, गतः=प्राप्तः, शत्रुः=रिपुः, न मोक्तव्यः=न मोक्तुमुचितः, वध्यं=हन्तुं योग्यं शत्रुं, बलिष्ठं मत्वेति शेषः, न्यग्भूत्वा=नम्रीभूय, पर्युपासीत=सेवेत, बले सति=आत्मनि शक्तौ सत्यां तु, हन्यात्=वधं कुर्यात्, हि=यस्मात्कारणात्, अहतात्=अनाशितात्, तस्मात्=शत्रोः, न चिरात् इव=शीघ्रमेव, एवार्थेऽत्र इवशब्दः, भयं=भीः, जायते=उत्पद्यते । षट्पादोऽयं श्लोकः ।

**भावार्थः**—वध्यः शत्रुर्यदि कथमपि वशमागतस्तर्हि तं न मुञ्चेत्, आत्मनोऽपेक्षया स बलवांश्चेत्तदा नतः सन् रिपुं तं सेवेतैव, स्वयं ततो बलवान् यदि तर्हि हन्यादेव । यतो हि वधार्हः शत्रुर्न हतश्चेत्तर्हि तस्माच्छीघ्रमेव भयमापद्यते ॥

**भाषा**—वश में आये हुए वध के योग्य शत्रु को छोड़ना नहीं चाहिए। (यदि शत्रु प्रवल हो तव तो) नम्रता के साथ उसकी सेवा करे, नहीं तो यदि अपने में वल हो तो उस मारने योग्य शत्रु को मार ही डाले, क्योंकि न मारने पर उससे शीघ्र ही भय (खतरा) पैदा हो जाता है ॥ २९ ॥

**दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च।**
**नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ ३० ॥**

**अन्वयः**—दैवतेपु राजसु ब्राह्मणेषु वृद्धबालातुरेषु च क्रोधः सदा प्रयत्नेन नियन्तव्यः।

**अर्थः—दैवतेष्विति।** दैवतेषु=वृन्दारकेषु देवेष्विति यावत्, 'वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्'मित्यमरः, राजसु=नृपेषु, ब्राह्मणेषु=विप्रेषु, वृद्धबालातुरेषु वृद्धाश्च=स्थविराश्च बालाश्च=बालकाश्च आतुराश्च=रोगिणश्च तेषु च, सर्वैरिति कर्त्राक्षेपः, क्रोधः=कोपः, सदा=सर्वदा, प्रयत्नेन=महतोद्योगेन, नियन्तव्यः, नियमनीयः रोद्धव्य इत्यर्थः।

**भावार्थः**—कश्चिदपि देवनाराजब्राह्मणबालवृद्धातुरेषु कोपं न कुर्वीतेति ॥

**भाषा**—देवताओं, राजाओं, ब्राह्मणों, बूढ़ों, बच्चों तथा रोगियों के प्रति क्रोध को यत्न पूर्वक रोकना चाहिये ॥ ३० ॥

**निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम्।**
**कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ३१ ॥**

**अन्वयः**—प्राज्ञः मूढसेवितं निरर्थं कलहं वर्जयेत् (तेन) लोके कीर्तिं लभते, अनर्थेन च न युज्यते।

**अर्थः—निरर्थमिति।** प्राज्ञः=विद्वान्, मूर्खसेवितं मूर्खैः=अज्ञैः सेवितः=आश्रितः तं, निरर्थं=व्यर्थं, कलहं=विग्रहं, वर्जयेत्=त्यजेत्, तेन, लोके=जगति, कीर्तिं=यशः, लभते=विन्दति, अनर्थेन=कष्टेन च, न युज्यते=युक्तो न भवति।

**भावार्थः**—बुद्धिमान् व्यर्थं कलहं न कुर्यात्, स च मूर्खैः क्रियते। कलह-त्यागेन न कष्टमाप्नोति सः, अपितु कीर्तिं लभते ॥

**भाषा**—मूर्खों द्वारा सेवित व्यर्थ झगड़े को बुद्धिमान् मनुष्य छोड़ दे (ऐसा करने से) वह संसार में यश पाता है तथा अनिष्ट से युक्त नहीं होता ॥ ३१ ॥

**प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः।**
**न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ३२ ॥**

**अन्वयः**—यस्य प्रसादः निष्फलः, अपि च क्रोधः निरर्थकः (अस्ति), (प्रजाः) स्त्रियः षण्ढं पतिम् इव तं भर्तारं न इच्छन्ति।

**अर्थः—प्रसाद इति।** यस्य=प्रभोः, प्रसादः=प्रसन्नता 'प्रसादस्तु प्रसन्नते'त्यमरः, अपि च=किञ्च, क्रोधः=कोपः निरर्थकः=व्यर्थोऽस्ति, प्रजाः=जनाः, स्त्रियः=योषितः, षण्ढं=नपुंसकं, पतिम् इव=दयितमिव, तं=व्यर्थप्रसादक्रोधं, भर्तारं=स्वामिनं, न इच्छन्ति=नाभिलषन्ति।

**भावार्थः**-निष्फलप्रसादं निरर्थकक्रोधं च नृपं प्रजास्तथा त्यजन्ति यथा स्त्रियः षण्ढं पतिम्।

**भाषा**—जिसकी प्रसन्नता तथा क्रोध ( दोनों ही ) बेकार होते हैं ऐसे स्वामी को लोग नहीं चाहते, जैसे कि नपुंसक पति को स्त्री नहीं चाहती ॥ ३२ ॥

**न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।**
**लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३३ ॥**

**अन्वयः**—बुद्धिः धनलाभाय न, जाड्यम् असमृद्धये न ( अस्ति ), प्राज्ञः लोकपर्याय-वृत्तान्तं जानाति, इतरः न ।

**अर्थः—नेति** । बुद्धिः = मतिः, धनलाभाय = धनप्राप्त्यै, न=कल्पते-इति न, जाड्यं = मूर्खता, असमृद्धये = दारिद्र्याय भवतीति न । प्राज्ञः=धीरः, लोकपर्यायवृत्तान्तं लोकस्य=भुवन-स्य पर्यायः = अनुक्रमः, इह लोके कृतस्य कर्मणः परलोके फलप्राप्तिः, तथा परलोके कृतस्य कर्मण इह लोके फलप्राप्तिः, तस्य वृत्तान्तः = वार्ता तं, जानाति = वेत्ति, इतरः = अन्यः मूर्ख इति यावत्, न=न जानाति ।

**भावार्थः**—बुद्ध्यैव धनप्राप्तिमूर्खतया च दारिद्र्यमिति नास्ति नियमः । प्राज्ञस्तु इहलोक-परलोककथादिकं जानाति, मूर्खो नेति ॥

**भाषा**—( सदा ही ) बुद्धि से धन की प्राप्ति तथा मूर्खता से समृद्धिहीनता ( दरिद्रता ) नहीं होती । विद्वान् ही इस लोक से परलोक तथा परलोक से इस लोक में आने जाने की बात जानता है, दूसरा ( मूर्ख ) नहीं ॥ ३३ ॥

**विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत ! ।**
**धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ३४ ॥**

**अन्वयः**—हे भारत ! मूढः विद्याशीलवयोवृद्धान् बुद्धिवृद्धान् धनाभिजातवृद्धान् च नित्यम् अवमन्यते ।

**अर्थः—विद्याशीलेत्यादि** । हे भारत = हे भरतकुलोत्पन्न ! मूढः=मूर्खः, विद्याशीलवयो-वृद्धान् विद्या च शीलं च वयश्च तैः वृद्धाः तान्=विद्यावृद्धान् शीलवृद्धान् वयोवृद्धान् , बुद्धि-वृद्धान् = मतिवृद्धान् , धनाभिजातवृद्धांश्च धनं च = द्रव्यं च तेन अभिजातश्च = कुलीनश्च तत्र वृद्धाः तान् = धनवृद्धान् , कुलवृद्धान् च, नित्यं = सदा, अवमन्यते = अवजानाति तिर-स्कुरुत इत्यर्थः ।

**भावार्थः**—मूर्खो विद्याशीलवयोबुद्धिधनाभिजातवृद्धान् सर्वदाऽवमन्यते ॥

**भाषा**—हे भरतवंशी ! विद्या, सदाचार, आयु, बुद्धि, धन तथा कुल में के बड़े लोगों का मूर्ख सदा अनादर किया करता है ॥ ३४ ॥

**अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।**
**अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ३५ ॥**

**अन्वयः**—अनर्थाः अनार्यवृत्तम् अप्राज्ञम् असूयकम् अधार्मिकं वाग्दुष्टं तथा क्रोधनं क्षिप्रम् आयान्ति ।

**अर्थः—अनार्यमिति ।** अनर्थाः=विपदः, अनार्यवृत्तम् अनार्यं =दुष्टं वृत्तं=चरित्रं यस्य तम् , अप्राज्ञ =मूर्खम् , असूयकं=गुणेषु दोषाविष्कर्तारम् , अधार्मिकम्=अधर्मात्मानं, वाग्दुष्ट=दुष्टवाच, तथा, क्रोधनं=क्रोधिनम् , एतादृशं पुरुषं, क्षिप्रं=शीघ्रम् , आयान्ति=उपगच्छन्ति ।

**भावार्थः**—अनार्यवृत्तत्वादिदुर्गुणविशिष्टः पुरुषः शीघ्रमापद्भिरभिभूयत इति ॥

**भाषा**—नीच आचरण करनेवाले, मूर्ख, गुणों में दोष निकालनेवाले, धर्मरहित, कठोर वचन बोलनेवाले तथा क्रोधशील मनुष्य को शीघ्र ही विपत्तियां घेर लेती हैं ॥ ३५ ॥

**अविसंवादनं दानं समयस्याव्यतिक्रमः ।**
**आवर्तयन्ति भूतानि सम्यक् प्रणिहिता च वाक् ॥ ३६ ॥**

**अन्वयः**—अविसंवादनं दानं समयस्य अव्यतिक्रमः सम्यक् प्रणिहिता वाक् च भूतानि आवर्तयन्ति ।

**अर्थः—अविसंवादनमिति ।** अविसंवादनं =वञ्चनाशून्यं प्रियवचनसहितं, दानं=वितरणं, समयस्य=संविदः स्वकृतप्रतिज्ञायाः 'समयाः शपथाचारकालसिद्धान्तसंविद' इत्यमरः अव्यतिक्रमः=अनुल्लङ्घनं परिपालनमिति यावत् , सम्यक्=साधु, प्रणिहिता=प्रयुक्ता, वाक्=वाणी च, भूतानि=प्राणिनः, आवर्तयन्ति=परिवर्तयन्ति शत्रूनपि मित्रत्वेन परिणमयन्तीत्यर्थः ।

**भावार्थः**-निर्वञ्चनं दानं प्रतिज्ञापालनं सुप्रयुक्ता वाक् च मनुष्यविचारान् परिवर्तयन्तीति

**भाषा**—प्रिय वचन कहकर दान देना, अपनी प्रतिज्ञा का पालन करना तथा अच्छी तरह प्रयुक्त किया गया वचन ये ( सब ) प्राणियों को वश में कर लेते है ॥ ३६ ॥

**अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।**
**अपि सङ्क्षीणकोशोऽपि लभते परिवारणम् ॥ ३७ ॥**

**अन्वयः**—अविसंवादकः दक्षः कृतज्ञः मतिमान् ऋजुः अपि सङ्क्षीणकोशः अपि परिवारणं लभते ।

**अर्थः—अविसंवादक इति ।** अविसंवादकः=वञ्चनाशून्यभाषणकर्ता, दक्षः=चतुरः, कृतज्ञः=उपकारवित् , मतिमान्=बुद्धिमान् , ऋजुः=सरलोऽपि, सङ्क्षीणकोशः सङ्क्षीणः=परिक्षीणः कोशो यस्य तथाभूतोऽपि, मनुष्य इति शेषः, परिवारणं=भृत्यमित्रादिकं परिवारं, लभते=प्राप्नोति ।

**भावार्थः**—दक्षत्वादिगुणविशिष्टः पुमान् क्षीणकोशोऽपि भृत्यमित्रादीनवाप्नोतीति ॥

**भाषा**—अप्रिय वचन न कहनेवाला, कुशल, उपकार को माननेवाला, बुद्धिमान् तथा सरल राजा अल्पकोश (धन) वाला होने पर भी भृत्यमित्र आदि सहायकों को पा जाता है ३७

**धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।**
**मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ३८ ॥**

**अन्वयः**—धृतिः शमः दमः शौचं कारुण्यम् अनिष्ठुरा वाक् मित्राणाम् अनभिद्रोहः च—एताः सप्त श्रियः समिधः ( सन्ति ) ।

**अर्थः—धृतिरिति** । धृतिः=धैर्यं, शमः=शान्तिः, दमः=इन्द्रियदमनं, शौचं=पवित्रता, कारुण्यं=करुणा, 'कारुण्यं करुणे'त्यमरः अनिष्ठुरा=कोमला सदया, वाक्=वाणी, मित्राणां=सुहृदाम्, अनभिद्रोहः=द्रोहाभावः च, एताः=अमूः, सप्त=सप्तसङ्ख्याकाः, श्रियः=लक्ष्म्याः, समिधः=उद्दीपिकाः सन्ति ।

**भावार्थः**—धृत्यादयः सप्त पदार्थाः श्रिय उत्तेजका इति श्रीकामैस्तेऽवश्यमर्जनीया इति ॥

**भाषा**—धैर्य, चित्त की शान्ति, इन्द्रियों को वश में करना, शुद्धता, दयालुता, प्रियवचन तथा मित्रों से विरोध न रखना—ये सात लक्ष्मी को बढ़ानेवाले हैं ॥ ३८ ॥

**असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ।**
**तादृङ् नराधिपो लोके वर्जनीयो नराधिप ! ॥ ३९ ॥**

**अन्वयः**—हे नराधिप ! असंविभागी दुष्टात्मा कृतघ्नः निरपत्रपः तादृक् नराधिपः लोके वर्जनीयः ( भवति ) ।

**अर्थः—असंविभागीति** । हे नराधिप=हे राजन् ! असंविभागी=आश्रितेभ्यः सम्यग्विभज्याऽप्रदाता, दुष्टात्मा=दुर्जनः, कृतघ्नः=उपकारं ज्ञात्वापि तदवमन्ता, निरपत्रपः अपत्रपायाः=लज्जायाः निर्गतः=दूरीभूतः निरपत्रपः=निर्लज्जः 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः' इत्यमरः, तादृक्=तथाभूतदुर्गुणपूर्णः, नराधिपः=राजा, लोके=संसारे, वर्जनीयः=त्याज्यः, भवति ।

**भावार्थः**—असंविभागित्वादिदुर्गुणदुष्टो राजा संसारे हेय एव भवतीति ॥

**भाषा**—हे राजन् ! नौकरों चाकरों को न देकर स्वयं भोग्यवस्तुओं का उपभोग करनेवाले, दुष्टचित्तवाले, उपकार को भूलजानेवाले, तथा निर्लज्ज राजा को संसार में त्याग देना चाहिए ॥ ३९ ॥

**नच रात्रौ सुखं शेते ससर्प इव वेश्मनि ।**
**यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ ४० ॥**

**अन्वयः**—सदोषः यः निर्दोषम् अभ्यन्तरं जनं कोपयति, ( सः ) ससर्पे वेश्मनि इव रात्रौ सुखं न च शेते ।

**अर्थः—नचेति** । सदोषः=दोषपूर्णः, यः=नरः, निर्दोषं=दोषरहितम्, अभ्यन्तरम्=आत्मीयं, जनं=मनुष्यं, कोपयति=कुपितं करोति, सः, ससर्पे=सर्पपूर्णे, वेश्मनि इव=गृह इव 'गृहं गेहोदवसितं वेश्म सद्म निकेतन'मित्यमरः, रात्रौ=निशि, सुखं=सुखपूर्वं यथा स्यात्तथा, न च शेते=न निद्राति । सोऽपि वर्ज्य इति पूर्वतोऽनुवृत्तिः ।

**भावार्थः**—स्वयं सदोषोऽपि यो नरो निर्दोषं स्वं जनं कोपयति, स रात्रौ सुखेन न शेते, यथा-यत्र गृहे सर्पस्य वासोऽस्ति तत्र जनो रात्रौ सुखेन निद्रां न लभत इति ॥

**भाषा**—जैसे साँपवाले घर में कोई सुख से नहीं रह पाता वैसे ही वह रात में चैन से नहीं सो सकता, जो अपने अपराधी होता हुआ भी निरपराध स्वजन को ( दोषारोपण आदि द्वारा ) कुपित कर देता है। ( ऐसे पुरुष को त्याग देना चाहिए ) ॥ ४० ॥

**येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ! ।**
**सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ४१ ॥**

**अन्वयः**—हे भारत ! येषु दुष्टेषु ( सत्सु ) योगक्षेमस्य दोषः स्यात्, तेषां देवतानाम् इव सदा प्रसादनम् आचरेत्।

**अर्थ**—**येष्विति**। हे भारत=हे भरतवंशीय राजन् ! येषु=पुरुषेषु, दुष्टेषु=दोषपूर्णेषु विद्यमानेषु, योगक्षेमस्य योगः=अप्राप्तवस्तुनः प्राप्तिः क्षेमं च=प्राप्तवस्तुरक्षा च तयोः समाहारः तस्य, दोषः=हानिः, स्यात्=भवेत्, तेषां=पुरुषाणां, देवतानाम् इव=देवानामिव, सदा=सर्वदा, प्रसादनं=प्रीणनम्, आचरेत्=कुर्यात्।

**भावार्थः**—येषां दुष्टानां प्रभावेण योगक्षेमविषये हानिः सम्भवति तान् सदा प्रसादयेदिति॥

**भाषा**—हे भरतवंशी ! जिनके बिगड़ने से योग ( अप्राप्त वस्तु की प्राप्ति ) तथा क्षेम ( प्राप्त वस्तु की रक्षा ) में गड़बड़ी हो जाती है, ऐसे पुरुषों को देवता की भाँति सदा प्रसन्न रखना चाहिए ॥ ४१ ॥

**येऽर्थाः स्त्रीषु समायुक्ताः प्रमत्तपतितेषु च ।**
**ये चानार्ये समासक्ताः सर्वे ते संशयं गताः ॥ ४२ ॥**

**अन्वयः**—ये अर्थाः स्त्रीषु प्रमत्तपतितेषु च समायुक्ताः, ये च अनार्ये समासक्ताः, ते सर्वे संशयं गताः।

**अर्थः**—**येऽर्था इति**। ये, अर्थाः=विषयाः, स्त्रीषु=योषित्सु, प्रमत्तपतितेषु प्रमत्ताश्च=अनवहिताश्च पतिताश्च=भ्रष्टाश्च तेषु च, समायुक्ताः=समर्पिताः, ये च=पदार्थाः, अनार्ये=असभ्ये, समासक्ताः=सङ्गताः सन्ति, ते सर्वे=समग्रास्ते पदार्थाः, संशयं=सन्देहं, गताः=प्राप्ताः, कदाचिदेव पुनः प्राप्या भवन्तीति।

**भावार्थः**—स्त्रीप्रमत्तपतितानार्याणां वशङ्गतानि वस्तूनि न पुनर्लब्धुं शक्यन्त इति॥

**भाषा**—जो पदार्थ स्त्रियों, लापरवाहों, पतितों तथा नीचों को सौंप दिये जाते हैं उनके मिलने में सन्देह रहता है ॥ ४२ ॥

**यत्र स्त्री यत्र कितवो बाला यत्रानुशासिता ।**
**मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव ॥ ४३ ॥**

**अन्वयः**—यत्र स्त्री, यत्र कितवः, यत्र बालः अनुशासिता, हे राजन् ! नद्याम् अश्मप्लवाः इव ते अवशाः ( सन्तः ) मज्जन्ति।

**अर्थः**—**यत्रेति**। यत्र=यस्मिन् लोकसमूहे, स्त्री=योषित्, यत्र, कितवः=अक्षदेवी

'धूर्तोऽक्षदेवी कितव' इत्यमरः, यत्र, बालः=बालकः, अनुशासिता=शास्ता शासकोऽस्ति, इडागम आर्षः, हे राजन्=हे नृप ! नद्या=सरिति, अश्मप्लवाः इव=प्रस्तरोडुपानीव, 'उडुपं तु प्लवः' इत्यमरः, ते=तत्रत्या लोकाः, अवशा=निरुपायाः सन्तः, मज्जन्ति=ब्रुडन्ति विपत्समुद्र इति शेषः।

**भावार्थः**—यत्र समाजे स्त्रीकितवबालकाः शासकाः सन्ति, स समाजो निरुपायः सन् सरिति पाषाणमयान्युडुपानीव मज्जति॥

**भाषा**—हे राजन्! जहाँ पर स्त्री, जुआरी अथवा बालक शासन करनेवाला हो वहाँ के लोग असहाय हो कर इस प्रकार डूब जाते ( नष्ट हो जाते ) हैं जैसे पत्थर की नाव नदी मे डूब जाती है॥ ४३॥

**प्रयोजनेषु ये सक्ता न विशेषेषु भारत !।**
**तानहं पण्डितान् मन्ये विशेषा हि प्रसङ्गिनः॥ ४४॥**

**अन्वयः**—हे भारत ! ये प्रयोजनेषु सक्ताः विशेषेषु न ( सन्ति ), अहं तान् पण्डितान् मन्ये। हि विशेषाः प्रसङ्गिनः।

**अर्थः—प्रयोजनेष्विति**। हे भारत=हे भरतवंशीय राजन्! ये=जनाः, प्रयोजनेषु=कार्येषु, सक्ताः=आसक्ताः, विशेषेषु=अपेक्षितादधिकेषु, सक्ता न सन्ति, अहं, तान्=जनान्, पण्डितान्=बुद्धिमतः, मन्ये=जानामि। हि=यतः, विशेषाः=अपेक्षितादधिकाः विषयाः, प्रसङ्गिनः=प्रसङ्गवशात् प्राप्ताः सन्ति।

**भावार्थः**—ये जना विशेषकार्येष्वनासक्तास्ते किल विद्वांस इति॥

**भाषा**—जो पुरुष आवश्यक कार्य को ही करने में लगे रहते हैं, अधिक कार्य के करने में नहीं, उन्हीं को मैं बुद्धिमान् समझता हूँ क्योंकि अधिक कार्य तो प्रासङ्गिक ( गौण अथवा व्यर्थ ) होते हैं॥ ४४॥

**यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः।**
**यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः॥ ४५॥**

**अन्वयः**—कितवाः यं प्रशंसन्ति, चारणाः यं प्रशंसन्ति, बन्धक्यः यं प्रशंसन्ति, स मानवः न जीवति।

**अर्थः—यमिति**। कितवाः=द्यूतकृतः, यं=यं मानवं, प्रशंसन्ति=वर्णयन्ति, चारणाः=कुशीलवाः 'चारणास्तु कुशीलवा' इत्यमरः, यं, प्रशंसन्ति=स्तुवन्ति, बन्धक्यः=कुलटाः 'बन्धक्यसती कुलटेत्वरी'त्यमरः, यं प्रशंसन्ति, सः=कितवादिस्तुतः, मानवः=मनुष्यः, न जीवति=न प्राणिति।

**भावार्थः**—द्यूतकृच्चारणबन्धक्यो यं स्तुवन्ति, स किल भिन्नमर्यादः सन् न चिरञ्जीवतीति॥

**भाषा**—जुआरी, भाँट तथा कुलटाएँ जिसकी तारीफ करते हैं, वह मनुष्य जीवित नहीं रहता॥ ४५॥

**हित्वा तान् परमेष्वासान् पाण्डवानमितौजसः ।**
**आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ४६ ॥**

**अन्वयः—**हे भारत ! परमेष्वासान् अमितौजसः तान् पाण्डवान् हित्वा त्वया दुर्योधने महत् ऐश्वर्यम् आहितम् ।

**अर्थः—हित्वेति** । हे भारत = हे भरतकुलोत्पन्न ?, परमेष्वासान्=महाकार्मुकान् 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽपी'त्यमरः, अमितौजसः=महाप्रभावान्, तान् = प्रसिद्धान्, पाण्डवान् = पाण्डुपुत्रान् युधिष्ठिरादीन्, हित्वा = त्यक्त्वा, त्वया = भवता, दुर्योधने=स्वज्येष्ठपुत्रे, महत् = विशालम्, ऐश्वर्यं = राज्यप्रभुत्वम्, आहितं=स्थापितं न्यस्तमिति यावत् ।

**भावार्थः—**शूरान् प्रतापिनश्च पाण्डवानपहाय दुर्योधने राज्यभारमाहितवान् भवानिति ॥

**भाषा—**हे भरतवंशी ! उन परम धनुर्धर अत्यन्त तेजस्वी पाण्डवों को छोड़ कर आपने दुर्योधन को बहुत बड़ा ऐश्वर्य सौंप दिया है ॥ ४६ ॥

**तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वमचिरादिव ।**
**ऐश्वर्यमदसम्मूढं बलिं लोकत्रयादिव ॥ ४७ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि षष्ठोऽध्यायः ।

**अन्वयः—**त्वम् ऐश्वर्यमदसम्मूढं लोकत्रयात् परिभ्रष्टम् बलिम् इव तं तस्मात् परिभ्रष्टम् अचिरात् इव द्रक्ष्यसि ।

**अर्थः—तं द्रक्ष्यसीति** । त्वं=भवान्, ऐश्वर्यमदसम्मूढम् ऐश्वर्यस्य = प्रभुत्वस्य मदः= गर्वः तेन सम्मूढः=विवेकशून्यः तं, लोकत्रयात्=त्रिलोकीराज्यात्, परिभ्रष्टं=च्युतम्, बलिम् इव=बलिनामानं दैत्येन्द्रमिव, तं = दुर्योधनं, तस्मात्=राज्यात्, परिभ्रष्टं=च्युतम्, अचिरात् इव=शीघ्रमिव, द्रक्ष्यसि = अवलोकयिष्यसि ।

**भावार्थः—**यथा राजा बलिरैश्वर्यमदमत्तः संस्त्रैलोक्यराज्यं प्रभ्रंशयामास तथैवायं दुर्योधनोऽपि शीघ्रमेव राज्यं भ्रंशयिष्यति—तच्च त्वं द्रक्ष्यस्यपीति ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिनिर्मितायां तत्त्वार्थदर्शिन्याख्यायां विदुरनीति-व्याख्यायां षष्ठोऽध्यायः ।

**भाषा—**ऐश्वर्य ( प्रभुत्व ) के गर्व से मोह में पड़े हुए दुर्योधन को आप शीघ्र ही तीनों लोकों के प्रभुत्व से च्युत बलि की भाँति इस राज्य के प्रभुत्व से च्युत देखेंगे ॥ ४७ ॥

श्री अनन्तरामशास्त्री वेताल कृत सरलार्थबोधिनी नामक हिन्दी भाषा टीका का षष्ठ अध्याय समाप्त ।

## सप्तमोऽध्यायः।

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=विदुरस्य वचनं श्रुत्वा पुनर्विदुरं वक्तुं प्रेरयन् कुरुराजः, उवाच=अब्रवीत्।

**अनीश्वरोऽयं पुरुषो भवाभवे सूत्रप्रोता दारुमयीव योषा।**
**धात्रा तु दिष्टस्य वशे कृतोऽयं तस्माद्वद त्वं श्रवणे धृतोऽहम्॥ १॥**

**अन्वयः**—अयं पुरुषः अनीश्वरः ( अस्ति ), भवाभवे सूत्रप्रोता दारुमयी योषा इव अयं तु धात्रा दिष्टस्य वशे कृतः, तस्मात् ( हे विदुर ! ) त्वं वद, अहं श्रवणे धृतः ( अस्मि )।

**अर्थः—अनीश्वर इति।** अयम्=एषः मृत्युलोकगतः, पुरुषः=मनुष्यः, अनीश्वरः=स्वतन्त्रतया किमपि कर्तुमसमर्थोऽस्ति, भवाभवे भवश्चाभवश्चेति तयोः समाहारो भवाभवं तस्मिन् भवाभवे=ऐश्वर्यानैश्वर्यविषये अथवा जन्ममरणविषये, सूत्रप्रोता=सूत्रेण बद्धा, दारुमयी=काष्ठनिर्मिता, योषेव=पुत्तलिकारूपा स्त्री यथा, 'काष्ठं दार्विन्धनं, स्त्री योषि'दित्यमरौ, अयम्=एष जनस्तु, धात्रा=ब्रह्मणा, दिष्टस्य=भाग्यस्य 'दैवं दिष्टं भागधेयं भाग्य'मित्यमरः, वशे=अधीने, कृतः=विहितः, तस्मात्=तेन कारणेन, हे विदुर ! त्वं, वद=ब्रूहि नीतितत्त्वं कथयेत्यर्थः, अहं=धृतराष्ट्रः, श्रवणे=त्वद्वचनाकर्णनविषये, धृतः=सावधानोऽस्मि।

**भावार्थः**—'सूत्राधीना काष्ठपुत्तलिकेव सम्पदापदोर्दैवाधीनोऽयं जन' इत्यतस्त्वदीयं वचः श्रोतुमहमुद्यतोऽस्मीति॥

**भाषा**—धृतराष्ट्र बोले—मनुष्य ( सर्वथा ) असमर्थ है, उसे ब्रह्मा ने ऐश्वर्य और अनैश्वर्य अथवा जन्म और मृत्यु के विषय में सूत में बँधी हुई कठपुतली की भाँति दैव के अधीन कर रखा है। इसलिए आप कहिए, मैं ध्यानपूर्वक सुनने के लिए तैयार हूँ॥ १॥

**विदुर उवाच**—विदुर उवाच=धृतराष्ट्रं श्रवणे सावधानं श्रुत्वा पुनर्विदुरो वक्तुमारभतेत्यर्थः।

**अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन्।**
**लभते बुद्ध्यवज्ञानमवमानं च भारत !॥ २॥**

**अन्वयः**—हे भारत ! बृहस्पतिः अपि अप्राप्तकालं वचनं ब्रुवन् बुद्ध्यवज्ञानम् अवमानं च लभते।

**अर्थः—अप्राप्तकालमिति।** हे भारत !=हे भरतवंशीय राजन् ! बृहस्पतिरपि=देवाचार्यो गुरुरपि, अप्राप्तकालं नास्ति प्राप्तः=उपस्थितः कालः=समयो यस्य तत्, समयाऽनुचितमिति यावत्, वचनं=वाक्यं, ब्रुवन्=कथयन्, बुद्ध्यवज्ञानं बुद्धेः=धियः अवज्ञानम्=अवहेलनं तत्, अवमानं च=तिरस्क्रियां च, 'तिरस्क्रिया। व्रीडावमानानाऽवज्ञावहेलन'मित्यमरः, लभते=प्राप्नोति।

**भावार्थः**—समयोचितं वक्तैव पुरुष आदरणीयो भवतीति॥

**भाषा**—विदुर बोले—'हे भरतवंशी ! विना अवसर के बात कहनेवाले बृहस्पति की भी बुद्धि की अवहेलना की जाती है तथा उनका अपमान होता है॥ २॥

प्रियो।भवति दानेन प्रियवादेन चापरः ।
मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ३ ॥

**अन्वयः**—( कश्चित् मनुष्यः ) दानेन, अपरः प्रियवादेन, अन्यः च मन्त्रमूलबलेन प्रियः भवति, ( किन्तु ) यः प्रियः सः प्रियः एव ( अस्ति ) ।

**अर्थः—प्रिय इति** । कश्चिन्मनुष्यः, दानेन=कस्यापि वस्तुनो वितरणेन, अपरः=द्वितीयः, प्रियवादेन=मधुरवचनेन, अन्यश्च=इतरश्च, मन्त्रमूलबलेन मन्त्रः=वशीकरणादिको मनुः मूलं=धनं तयोः बलं=शक्तिः तेन, 'मूलमाद्य शिफार्थयो'रित्यमरः, प्रियः=प्रीतिपात्रं, भवति=जायते, किन्तु यः=यो मनुष्यः, प्रियः=स्वभावेनैव प्रीतिपात्रं, सः=स मनुष्यः, प्रिय एव=प्रीतिपात्रमेव वर्तते ।

**भावार्थः**—अप्रियास्तावद्दानादिभिः प्रिया भवन्ति, प्रियाः पुनर्दानादीनि नापेक्षन्त इति ॥

**भाषा**—दान देने से, प्रिय वचन बोलने से तथा मन्त्र और धन के प्रभाव से मनुष्य प्यारा होता है, और जो मनुष्य ( वास्तव में ) प्यारा है वह तो प्यारा ही है॥ ३ ॥

द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।
प्रिये शुभानि कार्याणि द्वेष्ये पापानि चैव ह ॥ ४ ॥

**अन्वयः**—द्वेष्यः ( पुरुषः ) न साधुः न मेधावी न ( च ) पण्डितः भवति, प्रिये (सर्वाणि) कार्याणि शुभानि, अप्रिये च ( सर्वाणि कार्याणि ) पापानि एव ( सन्ति ) ह ।

**अर्थः—द्वेष्य इति** । द्वेष्यः=अप्रियः पुरुषः, न साधुः=न श्रेष्ठः, न मेधावी=न बुद्धिमान्, 'अस्मायामेधास्रजो विनि'रित्यनेन विनिप्रत्ययः, न च पण्डितः=नापि विद्वान्, भवति=जायते मन्यत इति यावत्, प्रिये, षष्ठ्यर्थे सप्तमी, प्रीतिपात्रस्येत्यर्थः, सर्वाणि, कार्याणि=कर्माणि, शुभानि=शोभनानि, द्वेष्ये च=द्वेषास्पदस्याप्रियस्य चेति यावत्, सर्वाणि कार्याणि, पापान्येव=निन्दनीयान्येव सन्ति । 'ह' इति पादपूरणे ।

**भावार्थः**—शत्रोः सर्वमप्रियं मित्रस्य तु सर्वं प्रियमेव भवतीति ॥

**भाषा**—शत्रु ( गुणवान् होने पर भी ) सज्जन, बुद्धिमान् अथवा विद्वान् नहीं माना जाता । ( ठीक है ), जो आदमी अपने को अच्छा लगता है उसमें अच्छी ही बातें और जो अपने को अच्छा नहीं लगता उसमें बुरी ही बातें ( दिखाई देती ) हैं ॥ ४ ॥

उक्तं मया जातमात्रेऽपि राजन्! दुर्योधनं त्यज पुत्रं त्वमेकम् ।
तस्य त्यागात् पुत्रशतस्य वृद्धिरस्यात्यागात् पुत्रशतस्य नाशः ॥५॥

**अन्वयः**—हे राजन्! जातमात्रे अपि मया उक्तम् ( यत् ) त्वम् एकं दुर्योधनं पुत्रं त्यज, तस्य त्यागात् पुत्रशतस्य वृद्धिः, अस्य अत्यागात् पुत्रशतस्य नाशः ( भवेत् ) ।

**अर्थः—उक्तमिति** । हे राजन्!=हे नृप! जातमात्रेऽपि=उत्पन्नमात्र एव, दुर्योधन इति, शेषः, अपिशब्द एवार्थे, मया=विदुरेण, उक्तं=कथितम्, यत्, त्वम्=भवान्, एकम्=केवलम्

'एके मुख्यान्यकेवला' इत्यमरः, दुर्योधनं=तन्नामकं, पुत्रं=सुतं, त्यज=दूरीकुरु, तस्य=दुर्योधनस्य, त्यागात्=दूरीकरणात्, पुत्रशतस्य पुत्राणा=दुःशासनादीनां शतं=शतसङ्ख्या तस्य, एकन्यूनशतसङ्ख्याकपुत्राणामिति यावत्, वृद्धिः=उन्नतिः, अस्य=दुर्योधनस्य, अत्यागात्=सङ्ग्रहात्, पुत्रशतस्य=शतसङ्ख्याकानां सर्वेषां पुत्राणां, नाशः=क्षयः, भवेत् ।

**भावार्थः**—दुर्योधनस्य त्याग एव सर्वथा वंशवृद्धिकरोऽस्तीति ॥

**भाषा**—हे राजन् ! मैंने ( दुर्योधन के ) जन्म लेते ही यह कह दिया था कि 'आप एक पुत्र-दुर्योधन-को छोड़ दीजिए, ( क्योंकि ) इसके छोड़ने से सौ पुत्रों की बढ़ती होगी और न छोड़ने से सौओं पुत्रों का नाश होगा ॥ ५ ॥

**न वृद्धिर्बहु मन्तव्या या वृद्धिः क्षयमावहेत् ।**
**क्षयोऽपि बहु मन्तव्यो यः क्षयो वृद्धिमावहेत् ॥ ६ ॥**

**अन्वयः**—या वृद्धिः क्षयम् आवहेत् (सा) वृद्धिः बहु न मन्तव्या, यः क्षयः वृद्धिम् आवहेत् ( सः ) क्षयः अपि बहु मन्तव्यः ( भवति ) ।

**अर्थः—नेति** । या, वृद्धिः=तात्कालिकी वंशोन्नतिः, क्षयं=भविष्यत्कालिकं नाशम्, आवहेत्=कुर्यात्, सा, वृद्धिः=वंशोन्नतिः, बहु=बहुलं यथा स्यात्तथा, न मन्तव्या=नादरणीया, यः, क्षयः=तात्कालिको नाशः, वृद्धिं=भविष्यत्कालिकीमुन्नतिम्, आवहेत्, स क्षयोऽपि=नाशोऽपि, बहु मन्तव्यः=बहुलमादरणीयो भवति ।

**भावार्थः**—उन्नतिरपि परिणामे क्षयावहा न श्रेष्ठा, नाशोऽपि परिणामे वृद्धिकरः श्रेष्ठ एवेति॥

**भाषा**—जो बढ़ती ( परिणाम में ) नाश को प्राप्त करावे उसको बहुत नहीं मानना चाहिए ( अर्थात् उस पर बहुत भरोसा नहीं रखना चाहिए ), बल्कि उस घटती को ही बहुत मानना चाहिए जो ( अन्त में ) बढ़ती लावे ॥ ६ ॥

**न स क्षयो महाराज ! यः क्षयो वृद्धिमावहेत् ।**
**क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ७ ॥**

**अन्वयः**—हे महाराज ! यः क्षयः वृद्धिम् आवहेत् सः क्षयः न, ( मनुष्यः ) यं लब्ध्वा बहु नाशयेत् इह सः तु क्षयः मन्तव्यः ।

**अर्थः—न स इति** । हे महाराज !=हे राजेन्द्र ! यः क्षयः=नाशः, वृद्धिम् आवहेत्=भविष्यत्कालिकीमुन्नतिं कुर्यात्, सः, क्षयः=नाशः, न मन्तव्यः, मनुष्यः यं=नाशं, लब्ध्वा=प्राप्य, बहु=अत्यधिकं कार्यं, नाशयेत्=विघातयेत्, इह=अस्मिल्लोके, स तु=स नाशस्तु, क्षयः=नाशः, मन्तव्यः=ज्ञातव्यः ।

**भावार्थः**—नाशो हि परिणतौ सुखप्रदो न नाशः, किन्तु परिणतौ दुःखप्रद एव सोऽयं नाशः कथ्यत इति ॥

**भाषा**—हे महाराज ! जो घटती ( अन्त में ) बढ़ती लावे वह ( वास्तव में ) घटती नहीं

है, घटती तो इस संसार में उसीको समझना चाहिए जिसे पाकर मनुष्य बहुत कुछ नष्ट कर डाले ॥ ७ ॥

**समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे ।**
**धनवृद्धान् गुणैर्हीनान् धृतराष्ट्र ! विवर्जय ॥ ८ ॥**

**अन्वयः**—हे धृतराष्ट्र ! केचित् गुणतः अपरे धनतः समृद्धाः भवन्ति, धनवृद्धान् ( अपि ) गुणैः हीनान् विवर्जय ।

**अर्थः—समृद्धा इति** । हे धृतराष्ट्र !=तन्नामक हे राजन् !, केचित्=एके पुरुषाः, गुणतः =सौजन्यादिगुणैः, अपरे=अन्ये, धनतः=धनेन, सार्वविभक्तिकस्तसिः, समृद्धाः=समृद्धिमन्तः, पूर्णा उन्नतिशीला इति यावत्, भवन्ति=जायन्ते, धनवृद्धान्=अत्यधिकधनशालिनोऽपि, गुणहीनान्=सौजन्यादिगुणरहितान्, स्वीयानित्यर्थः, विवर्जय=त्यज ।

**भावार्थः**—गुणवन्त एव ग्राह्या न निर्गुणा इति ॥

**भाषा**—हे धृतराष्ट्र ! कुछ लोग तो गुण से और कुछ लोग धन से बढ़तीवाले होते हैं। आप (उनमें से) जो लोग धन में बढ़े किन्तु गुण से हीन हों, उनसे दूर रहिए ॥ ८ ॥

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=धृतराष्ट्रो नाम कौरवो राजा, उवाच='दुर्योधनं त्यजे'ति विदुरोक्तं श्रुत्वा तदस्वीकुर्वन्नब्रवीत् ।

**सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसम्मतम् ।**
**न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ९ ॥**

**अन्वयः**—( हे विदुर ! ) त्वं सर्वं प्राज्ञसम्मतम् आयतीयुक्तं ( वचनं ) भाषसे, यतः धर्मः, ततः जयः ( भवति ), च सुतं त्यक्तुं न उत्सहे ।

**अर्थः—सर्वमिति** । हे विदुर ! त्वं, सर्वं=सकलं, प्राज्ञसम्मतं प्राज्ञानां=विदुषां सम्मतम् =आदृतम्, आयतीयुक्तम्=उत्तरकाले हितावहम्, 'उत्तरः काल आयति'रित्यमरः, क्तिन्-प्रत्ययान्तस्यायतिशब्दस्य दीर्घान्तत्वमार्षम्, वचनमिति शेषः, भाषसे=ब्रवीषि, यतः=यत्र, धर्मः, ततः=तत्र, जयः=विजयप्राप्तिः भवति, च=किन्तु, चशब्दस्त्वर्थे, सुतं=पुत्रं दुर्योधनं, त्यक्तुं= दूरीकर्तुं, नोत्सहे=नेच्छामि ।

**भावार्थः**—विद्वदादृतं परिणामसुखं च ते वचनं शृण्वतोऽपि मे मनसि पुत्रत्यागेच्छा कथमपि नोदेतीति ॥

**भाषा**—धृतराष्ट्र बोले—आप सब कुछ भविष्यत् के लिए हितकर तथा बुद्धिमानों द्वारा माना गया कह रहे हैं, और ( यह भी ठीक है कि ) जहाँ धर्म होता है वहीं जय होती है, ( फिर भी ) मैं अपने पुत्र ( दुर्योधन ) को छोड़ना नहीं चाहता ॥ ९ ॥

**विदुर उवाच**—विदुरः=श्रुतधृतराष्ट्रवचनः स विदुरः, उवाच=बोधयन्नकथयत् ।

**अतीव गुणसम्पन्नो न जातु विनयान्वितः ।**
**सुसूक्ष्ममपि भूतानामुपमर्दमुपेक्षते ॥ १० ॥**

**अन्वयः**—अतीव गुणसम्पन्नः विनयान्वितः ( पुरुषः ) सुसूक्ष्मम् अपि भूतानाम् उपमर्दं जातु ( अपि ) न उपेक्षते।

**अर्थः**—धृतराष्ट्रस्य पुत्रस्नेहदार्ढ्यं विचार्य विदुरस्तं पाण्डवपक्षपातिनं कर्तुमिच्छुः पुनरप्युपदिशन्नाह—**अतीवेति**। अतीव=अधिकं यथा स्यात्तथा, गुणसम्पन्नः गुणैः=दयादाक्षिण्यादिभिः सम्पन्नः=पूर्णः, विनयान्वितः=नम्रतया युक्तः पुरुषः, सुसूक्ष्ममपि=अतिस्वल्पमपि, भूतानां=प्राणिनां, 'भूतं प्राण्यतीते' इत्यमरः, उपमर्दम्=अवनतिं नाशं, जातु=कदाचिदपि, 'कदाचिज्जातु' इत्यमरः, नोपेक्षते=न विगणयति अपेक्षत एवेत्यर्थः।

**भावार्थः**—गुणवता विनयवता च पुंसा स्वल्पोऽपि प्राणिनां क्षयो नोपेक्षणीय इति॥

**भाषा**—विदुर बोले-अधिक गुणों से परिपूर्ण नम्र पुरुष प्राणियों के अत्यल्प नाश की भी उपेक्षा ( लापरवाही ) कभी नहीं करता॥ १०॥

**परापवादनिरताः परदुःखोदयेषु च।**
**परस्परविरोधे च यतन्ते सततोत्थिताः॥ ११॥**
**सदोषं दर्शनं येषां संवासे सुमहद्भयम्।**
**अर्थादाने महान् दोषः प्रदाने च महद्भयम्॥ १२॥**
**ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः।**
**ये पापा इति विख्याताः संवासे परिगर्हिताः॥**
**युक्ताश्चान्यैर्महादोषैर्ये नरास्तान विवर्जयेत्॥ १३॥**

**अन्वयः**—ये परापवादनिरताः ( सन्ति ), परदुःखोदयेषु च परस्परविरोधे च सततोत्थिताः ( सन्तः ) यतन्ते, येषां दर्शनं सदोषं, येषां संवासे सुमहत् भयं, येषाम् अर्थादाने महान् दोषः, येभ्यः ( अर्थस्य प्रदाने ) च महत् भयम् अस्ति, ये तु वै भेदनशीलाः सकामाः निस्त्रपाः शठाः ( सन्ति ), ये 'पापाः' इति ख्याताः संवासे ( च ) परिगर्हिताः ( सन्ति ), ये नराः अन्यैः च महादोषैः युक्ताः ( सन्ति ) तान् मनुष्यः विवर्जयेत्।

**अर्थः**—**परापवादेत्यादि**। ये=मनुष्याः, परापवादनिरताः परापवादे=लोकनिन्दायाम् 'अपवादौ तु निन्दाज्ञे' इत्यमरः, निरताः=लीनाः परायणाः सन्ति, परदुःखोदयेषु परेषाम्=स्वेतरेषां जनानां दुःखानां=कष्टानाम् उदयाः=आविर्भावाः वृद्धयो वा तेषु च, परस्परविरोधे परस्परम्=इतरेतरं विरोधः=विद्वेषः तस्मिंश्च, 'वैरं विरोधो विद्वेषः' इत्यमरः, सततोत्थिताः सततम्=अनिशम् उत्थिताः=उद्यताः सन्तः, 'सततेऽनारताश्रान्तसन्ततविरतानिशम्' इत्यमरः, यतन्ते=उद्योगं कुर्वन्ति, येषां=येषां नराणां, दर्शनम्=अवलोकनं, सदोषं=दोषेण सह वर्तमानं, येषां, संवासे=सहवासे, सुमहत्=गुरुतमं, भयं=भीतिः, येषाम्, अर्थादाने=धनग्रहणे, महान्=भूयान्, दोषः=अवगुणः, येभ्यः अर्थस्य, प्रदाने=वितरणे च महद् भयं वर्तते, ये तु=ये मनुष्याः, पुनः, वै=निश्चयेन, भेदनशीलाः भेदनं=परस्परं भेदोत्थापनं विघटनमिति यावत्,

तदेव शीलं = स्वभावो येषां ते, 'शीलं स्वभावे' इत्यमरः, सकामाः=साभिलाषाः स्वार्थपराः कामिनो वा, निस्त्रपाः=निर्लज्जाः, शठाः=वक्रान्तःकरणाः दुष्टा इति यावत् सन्ति, 'निकृत-स्त्वनृजुः शठ' इत्यमरः, ये पापाः = घातुकाः, 'घातुकः क्रूरः पाप' इत्यमरः, पापिनो वा, 'अर्श आदिभ्योऽच्' इत्यच्प्रत्ययः, इति = एवंरूपेण, ख्याताः = प्रसिद्धाः, संवासे=साहचर्ये च, परिगर्हिताः=निन्दिताः सन्ति, ये नराः=मनुष्याः, अन्यैश्च=पूर्वोक्तेभ्य इतरैश्च, महादोषैः=महद्भि-र्भयङ्करैरवगुणैः, युक्ताः=पूर्णाः सन्ति, तान्=तादृशान् दोषपूर्णान्नरानिति यावत् , मनुष्यः, विवर्जयेत्=दूरीकुर्यात् , तेभ्यः पृथक् तिष्ठेदित्यर्थः ।

**भावार्थः**—परनिन्दकाः परदुःखदानोद्यताः परस्परविरोधोत्पादनबद्धादरा दर्शने सहवासे दानाऽऽदानरूपे धनव्यवहारे च भयावहाः सङ्घटितान् विघटयन्तः स्वार्थिनः कामुका दुष्ट-चित्ता घातुकत्वेन प्रसिद्धाः पापिनो निन्दितसहवासास्तत्तन्महादोषपूर्णा मनुष्याः सर्वविधव्यव-हारतो बहिष्कार्या इति ॥

**भाषा**—जो दूसरों की निन्दा करने में लगे रह कर दूसरों के दुःख की वृद्धि तथा एक दूसरे के विरोध में सदा तत्पर होकर यत्न करते हैं। जिनके दर्शन से पाप लगता है तथा साथ रहने में बहुत बड़ा डर रहता है, जिनका धन लेने में भारी दोष तथा जिन्हे धन देने में भारी खतरा रहता है, जो आपस में भेद ( फूट ) करानेवाले, कामी, निर्लज्ज तथा कुटिल हृदयवाले हैं, जो पापी नाम से विख्यात तथा साथ रहने के लिए भी अयोग्य हैं तथा जो और बड़ी बड़ी बुराइयों से भरे हुए हैं, ऐसे मनुष्यों का त्याग करना चाहिए ॥ ११-१३ ॥

**निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ।**
**या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ॥ १४ ॥**
**यतते चापवादाय यत्नमारभते क्षये ।**
**अल्पेऽप्यपकृते मोहान्न शान्तिमधिगच्छति ॥ १५ ॥**

**अन्वयः**—सौहार्दे निवर्तमाने (सति) नीचे प्रीतिः प्रणश्यति, सौहृदे (सति) या च एव फलनिर्वृत्तिः; यत् च एव सुखं, ( तदुभयमपि प्रणश्यति ), च ( सः ) अपवादाय यतते (तथा) क्षये यत्नम् आरभते, अल्पे अपि अपकृते ( सति ) मोहात् शान्तिं न अधिगच्छति ।

**अर्थः—निवर्तमान इति, यतत इति च ।** सौहार्दे=सुहृदो भावे मित्रतायां, निवर्तमाने = निवृत्तिं गच्छति विनष्टे सतीति यावत् , नीचे = अधमपुरुषे, प्रीतिः=स्नेहः, प्रणश्यति= नष्टो भवति नावतिष्ठते, सौहृदे=मित्रतायां सत्यां, मित्रतां निमित्तीकृत्येत्यर्थः, निमित्तार्थे सप्तमी, या चैव फलनिर्वृत्तिः = फलावाप्तिः, यच्चैव सुखं=शर्म 'शर्मशातसुखानि च' इत्यमरः, तद् द्वयमपि, प्रणश्यति = नाशं गच्छति, च=अपिच, स नीचः पुरुषः, अपवादाय=निन्दायै, निन्दां कर्तुमिति यावत् , यतते=प्रयत्नं करोति, तथैव, क्षये=नाशे, नाशं कर्तुमिति यावत् , यत्नम् = उद्योगम् , आरभते=उपक्रमते, अल्पेऽपि = लघुन्यपि नाममात्रेणापीति यावत् , अपकृते=अपकारे

जाते सति, मोहात्=अज्ञानात्कारणात् मूर्खत्वादिति यावत्, शान्तिं=निर्वृतिं, नाधिगच्छति=न प्राप्नोति, मनसि क्षुब्धो भवतीत्यर्थः।

**भावार्थः**—मित्रत्वेन सह नीचपुरुषस्य प्रेमापि विलीनं भवति। तदानीं ततः कापि फलप्राप्तेराशा सुखस्य सम्भावना च कर्तुं न शक्येते। मित्रत्वेन हीनः स च नीचो भूतपूर्वमित्रस्य निन्दां नाशं च कर्तुं प्रवृत्तस्तेन कृतमपकारलेशमप्यसहमानो मूर्खत्वेन ततश्चञ्चलचित्तो भवतीति॥

**भाषा**—मित्रता (का हेतु) न रहने पर नीच जन का प्रेम, (उसकी सहायता से मिलने वाली) कार्य की सिद्धि तथा (उससे मिलनेवाला) सुख नष्ट हो जाता है और वह (नीच पुरुष) मित्र की निन्दा तथा हानि करने का यत्न करने लगता है और थोड़ा सा भी अपकार हो जाने पर अज्ञानवश अशान्त हो जाता है॥ १४-१५॥

**तादृशैः सङ्गतं नीचैर्नृशंसैरकृतात्मभिः।**
**निशम्य निपुणं बुद्ध्वा विद्वान् दूराद्विवर्जयेत्॥ १६॥**

**अन्वयः**—विद्वान् निशम्य निपुणं बुद्ध्वा तादृशैः नृशंसैः अकृतात्मभिः नीचैः सङ्गतं दूरात् विवर्जयेत्।

**अर्थः**—विद्वान्=ज्ञानवान् पुरुषः, निशम्य=श्रुत्वा, निपुणं=सम्यग्यथा स्यात्तथा, बुद्ध्वा=ज्ञात्वा पूर्वापरविचारं कृत्वेति यावत्, तादृशैः=पूर्वोक्तगुणविशिष्टैः, नृशंसैः=घातुकैः क्रूरैर्वा, 'नृशंसो घातुकः क्रूर' इत्यमरः, अकृतात्मभिः=अवशीकृतचित्तैः अशोधितान्तःकरणैर्वा, नीचैः=अधमैः पुरुषैः, सङ्गतं=सम्बन्धं, दूरात्=दूरतः, विवर्जयेत्=परिहरेत्।

**भावार्थः**—विदुषा नीचजनसम्पर्को विचारपुरःसरं दूरतः परिहर्तव्य इति॥

**भाषा**—इसप्रकार के नीच, क्रूर तथा चपल-चित्तवाले पुरुषों की सङ्गति के विषय में (लोगों से) सुनकर तथा उसे अच्छी तरह समझ कर विद्वान् उससे (नीच की सङ्गति से) एकदम दूर रहे॥ १६॥

**यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम्।**
**स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते॥ १७॥**

**अन्वयः**—यः दरिद्रं दीनम् आतुरं ज्ञातिम् अनुगृह्णाति, सः पुत्रपशुभिः वृद्धिम् आनन्त्यं श्रेयः च अश्नुते।

**अर्थः—यो ज्ञातिमिति।** यः=यो मनुष्यः, दरिद्रं=निर्धनं, दीनं=दुर्विधं दुःखिनमिति यावत्, आतुरं=व्याधितं रोगग्रस्तमिति यावत्, ज्ञातिं=सगोत्रं स्वजनम्, 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः, विकृतो व्याधितोऽपटुः। आतुरः, सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समा' इत्यमराः सर्वत्र, अनुगृह्णाति=अनुग्रहदृष्टिपूर्तं करोति, सः=तथाविधो मनुष्यः, पुत्रपशुभिः, पुत्राः=सन्ततयः पशवः=गवादयश्च तैः, वृद्धिम्=समृद्धिम् उन्नतिमिति यावत्, आनन्त्यम्, स्वार्थे ष्यञ्, अनन्तमिति यावत्, अक्षय्यमित्यर्थः, श्रेयश्च=पुण्यं च, 'पुण्यश्रेयसी' इत्यमरः, कल्याणं वा च, अश्नुते=व्याप्नोति, अधिगच्छतीत्यर्थः।

**भावार्थः**—स्वजनदुःखदूरीकरणमुन्नतिकरमक्षय्यश्रेयस्करञ्चेति ॥

**भाषा**—जो पुरुष गरीब, दुःखी तथा रोगी स्वजनपर अनुग्रह ( दया ) करता है, वह पुत्रों तथा पशुओं की बढ़ती तथा अनन्त कल्याण को प्राप्त होता है ॥ १७ ॥

**ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ॥ १८ ॥**

**अन्वयः**—तैः ज्ञातयः वर्धनीयाः, ये आत्मनः शुभम् इच्छन्ति ।

**अर्थः**—**ज्ञातय इति** । तैः=तैः पुरुषैः, ज्ञातयः=स्वजनाः, वर्धनीयाः=उन्नतिं प्रापणीयाः, ये=ये पुरुषाः, आत्मनः=स्वस्य, 'स्वो ज्ञातावात्मनि स्व'मित्यमरः, शुभं=कल्याणम्, 'कल्याणं मङ्गलं शुभ'मित्यमरः, इच्छन्ति=अभिलषन्ति ।

**भावार्थः**—कल्याणाभिलाषिभिः स्वजनवर्गस्योन्नतिः कर्तव्येति ॥

**भाषा**—हे नृपश्रेष्ठ ! जो लोग अपना कल्याण चाहते हैं उन्हें अपने सगोत्र लोगों की बढ़ती करनी चाहिए ॥ १८ ॥

**कुलवृद्धिं च राजेन्द्र ! तस्मात्साधु समाचर ।**
**श्रेयसा योक्ष्यते राजन् ! कुर्वाणो ज्ञातिसत्क्रियाम् ॥ १९ ॥**

**अन्वयः**—हे राजेन्द्र ! तस्मात् साधु कुलवृद्धिं च समाचर, हे राजन् ! ज्ञातिसत्क्रियां कुर्वाणः श्रेयसा योक्ष्यते ।

**अर्थः**—**कुलवृद्धिमिति** । हे राजेन्द्र !=हे महाराज !, तस्मात्=ततो हेतोः, साधु=सम्यगुचितं च यथा स्यात्तथा, कुलवृद्धिं=वंशाभिवृद्धिं, 'च' इति पादपूरणे, समाचर=कुरुष्व, हे राजन् !=हे नृपते ! ज्ञातिसत्क्रियां=स्वात्मीयजनानामादरं, कुर्वाणः=कुर्वन् पुरुषः, श्रेयसा=कल्याणेन, योक्ष्यते=युक्तो भविष्यति ।

**भावार्थः**—राज्ञा भवता वंशोऽभिवर्धनीयः । स्वजनान् सत्कर्तुः श्रेयो नूनं भविष्यतीति ॥

**भाषा**—इसलिए हे राजन् ! आप अच्छी तरह अपने कुल की वृद्धि ( बढ़ती ) करिये, ( क्योंकि ) मनुष्य अपने सगोत्रों का सत्कार करने से कल्याण से युक्त हो सकता है ॥ १९ ॥

**विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ! ।**
**किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ॥ २० ॥**

**अन्वयः**—हे भरतर्षभ ! हि विगुणाः अपि ज्ञातयः संरक्ष्याः, गुणवन्तः त्वत्प्रसादाभिकाङ्क्षिणः ते संरक्ष्या ( इति ) किं पुनः ( वक्तव्यम् ) ।

**अर्थः**—**विगुणा इति** । हे भरतर्षभ !=हे भरतकुलश्रेष्ठ ! 'पुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः'इत्यमरः, हि=निश्चयेन, विगुणाः=विगता गुणा येभ्यस्ते गुणरहिता अपीति यावत् , ज्ञातयः=स्वजनाः, संरक्ष्याः=सम्यक् पालनीयाः, स्नेहेन वीक्षणीया इत्यर्थः, गुणवन्तः=गुणयुक्ताः, त्वत्प्रसादाभिकाङ्क्षिणः तव=भवतः प्रसादम्=अनुग्रहम् अभिकाङ्क्षन्ति=इच्छन्ति तादृशाः, ते=ज्ञातयः, संरक्ष्या इति, किं पुनः=किं भूयः, वक्तव्यमिति शेषः !

**भावार्थः—**गुणैर्विरहितानामपि स्वजनानां रक्षणं कर्तुमुचितम्, गुणिनां पुनस्तत्कर्तव्यमित्येतत्कथनस्य त्वावश्यकतैव नास्ति ॥

**भाषा—**हे भरतकुलश्रेष्ठ ! गुणहीन बान्धवों की भी रक्षा करनी चाहिए, फिर वे (पाण्डव) तो गुणी तथा आप की कृपा के अभिलाषी हैं (उनकी रक्षा तो अवश्य ही करनी चाहिए) ॥२०॥

**प्रसादं कुरु वीराणां पाण्डवानां विशाम्पते ! ।**
**दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ! ।**
**एवं लोके यशः प्राप्तं भविष्यति नराधिप ! ॥ २१ ॥**

**अन्वयः—**हे विशाम्पते ! वीराणां पाण्डवानां प्रसादं कुरु, हे ईश्वर ! तेषां वृत्त्यर्थं केचित् ग्रामकाः दीयन्ताम्। हे नराधिप ! एवं ( सति ) लोके यशः प्राप्तं भविष्यति ।

**अर्थः—प्रसादमिति** । हे विशाम्पते ! = हे मनुजाधिप राजन् ! 'द्वौ विशौ वैश्यमनुजा'-वित्यमरः, वीराणां=शूराणां, पाण्डवानां = युधिष्ठिरादीनाम्, उपरीति शेषः, प्रसादं=प्रसन्नतां, कुरु=विधेहि दर्शयेति यावत् । हे ईश्वर ! = हे समर्थ ! तेषां=पाण्डवानां, वृत्त्यर्थं = जीविकायै जीवननिर्वाहार्थमिति यावत्, 'आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने' इत्यमरः, केचित् = केऽपि स्वल्पा अपि, ग्रामकाः=ग्रामाः संवसथाः 'समौ संवसथग्रामा'वित्यमरः, स्वार्थे कः, दीयन्ताम् = समर्प्यन्ताम् । हे नराधिप != हे राजन्, एवं सति=पाण्डवेभ्यो ग्रामेषु दत्तेषु, लोके= संसारे, यशः=कीर्तिः, प्राप्तं=लब्धं, भविष्यति=भवेत् ।

**भावार्थः—**प्रसीदता भवता कांश्चिद् ग्रामान् समर्प्य पाण्डवानां जीविका कल्पनीया । तेन च भवान् यशस्वी भविष्यति ॥

**भाषा—**हे राजन् ! हे प्रभो ! वीर पाण्डवों पर कृपा कीजिए और उनके जीवननिर्वाह के लिए कुछ गाँवों को दे दीजिए । ऐसा करने से हे राजन् ! आपको संसार में यश मिलेगा ॥२१॥

**वृद्धेन हि त्वया कार्यं पुत्राणां तात ! शासनम् ।**
**मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ॥ २२ ॥**

**अन्वयः—**हे तात ! वृद्धेन त्वया पुत्राणां शासनं कार्यम् । मया च अपि ( तव ) हितं वाच्यम्, मां त्वद्धितैषिणं विद्धि ।

**अर्थः—वृद्धेनेति** । हे तात != हे महाशय ! तातशब्दः सर्वेषां सम्बुद्धौ प्रयुज्यते, वृद्धेन= परिणतवयसा, त्वया=भवता, पुत्राणां=पाण्डवानां, शासनं=शिष्टिः, न्याय्ये पथि प्रवर्तनं रक्षणमिति यावत्, कार्यं=विधेयम् । मया चापि=विदुरेणापि, तव, हितं=कल्याणकरं, वचनमिति शेषः, वाच्यं=वक्तव्यम्, मां=विदुरं, त्वद्धितैषिणं=त्वत्कल्याणकाङ्क्षिणं विद्धि=जानीहि ।

**भावार्थः—**वृद्धो भवान् पाण्डवानां पालनं कुर्यात् । भवतो हितैषी हितमेवाहं ब्रूयामिति ॥

**भाषा—**हे तात ! आप वृद्ध हैं, आपको अपने पुत्रों पर शासन करना अर्थात् उन्हें वश में रखना चाहिए और मुझे भी आप से हितकी बात ही करनी चाहिए, आप मुझे अपना कल्याण चाहनेवाला जानिए ॥ २२ ॥

**ज्ञातिभिर्विग्रहस्तात ! न कर्तव्यः शुभार्थिना ।**
**सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ! ॥ २३ ॥**

**अन्वयः**—हे तात ! शुभार्थिना ज्ञातिभिः ( सह ) विग्रहः न कर्तव्यः, हे भरतर्षभ ! ज्ञातिभिः सह भोज्यानि सुखानि ( सन्ति ) ।

**अर्थः—ज्ञातिभिरिति** । हे तात !=हे राजन् !, शुभार्थिना=कल्याणेच्छुना पुरुषेण, ज्ञातिभिः=स्वजनैः सह, विग्रहः=युद्धं विरोध इति यावत् , न कर्तव्यः=कर्तुं नोचितः, हे भरतर्षभ !=हे भरतवंशश्रेष्ठ ! ज्ञातिभिः=स्वजनैः, सह=साकं, 'साकं सत्रा समं सहे'त्यमरः, भोज्यानि=भोजनानि, सुखानि=सुखकराणि सन्ति ।

**भावार्थः**—कल्याणमिच्छतः पुरुषस्य स्वजनैः सह विरोधो नोचितः, तैः सह भोजनं सुखकरमिति ॥

**भाषा**—हे तात ! कल्याण चाहनेवाले पुरुष को अपने बान्धवों से वैर नहीं करना चाहिए और हे भरतश्रेष्ठ ! उनके साथ सुखों का उपभोग करना चाहिए ॥ २३ ॥

**सम्भोजनं सङ्कथनं सम्प्रीतिश्च परस्परम् ।**
**ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ २४ ॥**

**अन्वयः**—ज्ञातिभिः सह सम्भोजनं सङ्कथनं परस्परं सम्प्रीतिः च कार्याणि, कदाचन विरोधः न कार्यः ।

**अर्थः—सम्भोजनमिति** । ज्ञातिभिः=बान्धवैः, सह=सार्धं, सम्भोजनं=सम्यगशनं, सङ्कथनं=सम्भाषणं, परस्परम्=अन्योन्यं, सम्प्रीतिः=सम्यग्दृढं प्रेम च, कार्याणि=कर्तव्यानि, कदाचन=कस्मिन्नपि समये, विरोधः=द्वेषभावः, न कार्यः=न कर्तव्यः ।

**भावार्थः**—स्वजनैः सह भोजनं भाषणं प्रेम च कुर्वता विरोधः परिहार्यः ॥

**भाषा**—बान्धवों के साथ सहभोज, वार्तालाप तथा पारस्परिक प्रेम करना चाहिए (पर) उनसे विरोध कभी नहीं करना चाहिए ॥ २४ ॥

**ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।**
**सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २५ ॥**

**अन्वयः**—इह ज्ञातयः तारयन्ति, ज्ञातयः च मज्जयन्ति, इह सुवृत्ताः तारयन्ति, दुर्वृत्ताः च मज्जयन्ति ।

**अर्थः—ज्ञातय इति** । इह=अस्मिञ्जगति, ज्ञातयः=बन्धुजनाः, तारयन्ति=उद्धरन्ति दुःखाब्धेः पारं नयन्ति, ज्ञातयः, च=पुनः, मज्जयन्ति=दुःखाब्धौ मग्नं कुर्वन्ति, इह=अत्र विषये, सुवृत्ताः=सदाचारिणः, तारयन्ति=सुखयन्ति, दुर्वृत्ताश्च=दुराचारिणश्च, मज्जयन्ति=क्लेशयन्ति ।

**भावार्थः**—सुखस्य दुःखस्य दातारः स्वजना एव सन्ति । तत्र सतां सुखदातृत्वमसतां च दुःखदातृत्वमिति ॥

भाषा—इस संसार में बान्धव ही निस्तार करते हैं और बान्धव ही डुबाते भी हैं। (उनमें) सदाचारी निस्तार करनेवाले और दुराचारी डुबानेवाले होते हैं ॥ २५ ॥

**सुवृत्तो भव राजेन्द्र ! पाण्डवान् प्रति मानद ! ।**
**अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ २६ ॥**

**अन्वयः**—हे राजेन्द्र ! पाण्डवान् प्रति सुवृत्तः भव, हे मानद ! तैः वृतः त्वं शत्रूणाम् अधर्षणीयः भविष्यसि ।

**अर्थः—सुवृत्त इति** । हे राजेन्द्र=हे नृपश्रेष्ठ !, पाण्डवान् प्रति=युधिष्ठिरादिविषये, सुवृत्तः सु=शोभनं वृत्तं=चरित्रं यस्य सः=सदाचरणशीलः, 'वृत्तं पद्ये चरित्रे चे'त्यमरः, भव=एधि, हे मानद !=हे आदरदायिन् ! तैः=पाण्डवैः, वृतः=युक्तः, त्वं=भवान्, शत्रूणां=रिपूणाम्, 'कृत्यानां कर्तरि वे'ति षष्ठी, अधर्षणीयः=अनाक्रमणीयः दुर्दम इति यावत्, भविष्यसि=भवेः ।

**भावार्थः**—पाण्डवेषु सद्भावं स्थापयंस्तत्सहितो भवान् रिपुभिर्न विजेष्यते ॥

**भाषा**—हे आदर देनेवाले नृपश्रेष्ठ ! पाण्डवों के प्रति सद्व्यवहार कीजिए, उनके साथ रह कर आप शत्रुओं द्वारा आक्रान्त नहीं हो सकेंगे ॥ २६ ॥

**श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।**
**दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥ २७ ॥**

**अन्वयः**—मृगः दिग्धहस्तम् इव यः ज्ञातिः श्रीमन्तं ज्ञातिम् आसाद्य ( अपि ) अवसीदति, सः तस्य एनः विन्दति ।

**अर्थः—श्रीमन्तमिति** । मृगः=हरिणः दिग्धहस्तं दिग्धः=विषाक्तो बाणः हस्ते=करे यस्य तं व्याधमित्यर्थः, 'विषाक्ते दिग्धलिप्तका'वित्यमरः, इव=यथा, यः ज्ञातिः=यः स्वजनः, श्रीमन्तं=धनिनं, ज्ञातिं=स्वजनम्, आसाद्य=प्राप्यापि, अवसीदति=कष्टं लभते दारिद्र्यदुःखमनुभवतीति यावत्, सः=धनी स्वजनः, तस्य=दुःखिनः स्वजनस्य, एनः=पापं 'पापंकिल्बिषकल्मषम्। कलुषं वृजिनैनोऽघ'मित्यमरः, विन्दति=प्राप्नोति ।

**भावार्थः**—धनवान् पुरुषः शरणागतं दुःखिनं स्वजनं दुःखादमोचयंस्तदीयं पापं तथा प्राप्नोति यथा समीपमागतं मृगं हिंसन् विषाक्तबाणधरो व्याध इति ॥

**भाषा**—किसी धनी बान्धव को पाकर भी जब कोई ( दूसरा ) बान्धव दुःख भोगता है तब वह धनी बान्धव उस ( निर्धन बान्धव के ) दुःखरूपी पाप का भागी होता है। जैसे हिरन विषैले बाणों को धारण करनेवाले बहेलिए के पास पहुँच कर प्राणघातक कष्ट पाता है और बहेलिये को उसके मारने का पाप लगता है ॥ २७ ॥

**पश्चादपि नरश्रेष्ठ ! तव तापो भविष्यति ।**
**तान् वा हतान् सुतान् वापि श्रुत्वा तदनुचिन्तय ॥ २८ ॥**

**अन्वयः**—हे नरश्रेष्ठ ! तान् वा सुतान् वा अपि हतान् श्रुत्वा पश्चात् अपि तव तापः भविष्यति, तत् अनुचिन्तय ।

**अर्थः—पश्चादिति ।** हे नरश्रेष्ठ ! = हे मनुजेन्द्र राजन् ! तान्=पाण्डवान् वा, सुतान्=दुर्योधनादीन् वापि, हतान्=युद्धे मृतान्, श्रुत्वा=आकर्ण्य, पश्चादपि=तदनन्तरमपि, तव=भवतः, तापः=सन्तापः पश्चात्तापरूपं दुःखमिति यावत्, भविष्यति = सम्पत्स्यते, तत्=इदम्, अनुचिन्तय=विचारय ।

**भावार्थः—**'कौरवपाण्डवयोर्युद्धे सति पाण्डवान् स्वसुतान् वा हतान् शृण्वन् पश्चात्तापमन्ते भवान् प्राप्स्यती'त्येतदपि साम्प्रतं विचारणीयं भवता ॥

**भाषा—**हे नरश्रेष्ठ ! आप इसका भी विचार कर लीजिए कि बाद में भी पाण्डवों अथवा अपने पुत्रों का मारा जाना सुनकर आपको कष्ट होगा ॥ २८ ॥

**येन खट्वां समारूढः परितप्येत कर्मणा ।**
**आदावेव न तत् कुर्यादध्रुवे जीविते सति ॥ २९ ॥**

**अन्वयः—**( मनुष्यः ) येन कर्मणा खट्वां समारूढः ( सन् ) परितप्येत, तत् जीविते अध्रुवे सति आदौ एव न कुर्यात् ।

**अर्थः—येनेति ।** मनुष्यः, येन कर्मणा = करिष्यमाणेन येन कार्येण, खट्वां = शय्यां, समारूढः=गतः सन्, एकाकी गृहे स्थितश्चिन्तामग्नो भवन्नित्यर्थः, परितप्येत=अन्ते सन्तापं प्राप्नुयात् दुःखी भवेदिति यावत्, तत्=सन्तापकारकं कार्यं, जीविते = जीवने, अध्रुवे = अस्थिरे क्षणविनाशिनि, सति=भवति, आदावेव=पूर्वमेव, न कुर्यात्=न विदध्यात् ।

**भावार्थः—**यत्कर्म रहसि पुरुषं चिन्तामग्नं कुर्वत् परिणामे कष्टकारकं भवेत्, जीवितमस्थिरं विभावयता पुरुषेण विचार्य तदुपक्रम एव न कार्यः ॥

**भाषा—**जब जीवन ही अनिश्चित है तो ऐसा काम ही न शुरू करे जिससे चारपाई पर पड़कर सन्तप्त होना पड़े ॥ २९ ॥

**न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।**
**शेषसम्प्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ ३० ॥**

**अन्वयः—**कश्चित् पुमान् भार्गवात् अन्यत्र न अपनयते ( इति ) न, तु शेषसम्प्रतिपत्तिः बुद्धिमत्सु एव तिष्ठति ।

**अर्थः—न कश्चिदिति ।** कश्चित् = कोऽपि, पुमान् = पुरुषः, भार्गवात्=शुक्राचार्यात्, 'शुक्रो दैत्यगुरुः काव्य उशना भार्गव' इत्यमरः, अन्यत्र=इतरत्र विनेत्यर्थः, न अपनयते=अनीतिं नाचरति, इति न = नास्ति, अपितु अनीतिमाचरत्येव, तु = किन्तु, शेषसम्प्रतिपत्तिः शेषस्य = अवशिष्टस्य भाविनोऽर्थस्येति यावत्, सम्प्रतिपत्तिः = सम्यग्विचारः, बुद्धिमत्स्वेव = धीमत्सु पुरुषेष्वेव, तिष्ठति = अवलम्बितास्ति ।

**भावार्थः—**शुक्राचार्य इव यथैवमेव बहवो जना अनीतिमाश्रयन्ति, किन्तु कृतं विस्मृत्य करिष्यमाणे कर्मण्यनीतेराश्रयणं बुद्धिमतामेव कार्यमिति ॥

**भाषा—**ऐसा नहीं है कि शुक्राचार्य के सिवा कोई दूसरा पुरुष ( जान बूझ कर ) अनीति

करता ही नहीं, किन्तु ( अनीति करने के ) बाद के कामों के औचित्य तथा अनौचित्य का विचार बुद्धिमानों में ही रहता है ॥ ३० ॥

**दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।**
**त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ! ॥ ३१ ॥**

**अन्वयः**—हे नरेश्वर ! पुरा दुर्योधनेन यदि तेषु एतत् पापं कृतं, ( तर्हि अद्य ) कुलवृद्धेन त्वया तत् प्रत्यानेयम् ।

**अर्थः—दुर्योधनेनेति ।** हे नरेश्वर !=हे राजन् !, पुरा = द्यूतक्रीडावसरे, दुर्योधनेन = तन्नाम्ना भवत्पुत्रेण, यदि=चेत् , तेषु = पाण्डवेषु, एतत् = राज्यापहरणादिकं, पापं=दुराचरणं, कृतं = विहितं, तर्हि अद्य, कुलवृद्धेन कुले = कुरुवंशे वृद्धः=स्थविरः तेन दुर्योधनादीनां पूज्येनादरणीयेनेत्यर्थः, त्वया = भवता, तत् = पूर्वकृतं दुराचरणं, प्रत्यानेयं=प्रतिकार्यम् ।

**भावार्थः**—दुर्योधनेन द्यूतच्छलेन यः किल पाण्डवेष्वत्याचारः कृतः स भवता कुरुवंशवृद्धेन पाण्डवेभ्य उचितं राज्यभागं दत्त्वा परिहरणीयः ॥

**भाषा**—हे राजन् ! दुर्योधन ने पाण्डवों पर जो पहले अत्याचार किया है, आप कुलवृद्ध के द्वारा उसका परिहार किया जाना चाहिए ॥ ३१ ॥

**तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।**
**भविष्यसि नरश्रेष्ठ ! पूजनीयो मनीषिणाम् ॥ ३२ ॥**

**अन्वयः**—हे नरश्रेष्ठ ! त्वं तान् पदे प्रतिष्ठाप्य लोके विगतकल्मषः सन् मनीषिणां पूजनीयः भविष्यसि ।

**अर्थः—तांस्त्वमिति ।** हे नरश्रेष्ठ ! = हे मनुजेन्द्र !, त्वं=भवान् , तान् = पाण्डवान् युधिष्ठिरादीन् , पदे = राज्ये, प्रतिष्ठाप्य=प्रतिष्ठितान् कृत्वा, लोके=पृथिव्यां, विगतकल्मषः विगतं = दूरीभूतं कल्मषं=पापं 'पापं किल्विषकल्मष'मित्यमरः, यस्य तादृशः सन् अनुचितकारितारूपात् कलङ्कान्मुक्तो भवन्नित्यर्थः, मनीषिणां = प्राज्ञानां 'धीरो मनीषी ज्ञः प्राज्ञ' इत्यमरः, पूजनीयः=मान्यः प्रशंसनीय इति यावत् , भविष्यसि = वर्तिष्यसे ।

**भावार्थः**—राज्यभागं पुनः पाण्डवेभ्यः समर्प्य लोके पुण्यकीर्तिर्भवान् विद्वन्मान्यो भवेदिति ॥

**भाषा**—हे पुरुषश्रेष्ठ ! उन ( पाण्डवों ) को राज्यपद पर स्थापित करके आप संसार में पापरहित तथा बुद्धिमानों के पूज्य हो जायँगे ॥ ३२ ॥

**सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः ।**
**अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ३३ ॥**

**अन्वयः**—यः धीराणां सुव्याहृतानि फलतः परिचिन्त्य कार्येषु अध्यवस्यति, ( सः ) चिरं यशसि तिष्ठति ।

**अर्थः—सुव्याहृतानीति ।** यः = यः पुरुषः, धीराणां = पण्डितानां, सुव्याहृतानि=सु-

भाषितानि सुन्दराण्युपदेशपूर्णानि वचनानीति यावत्, 'व्याहार उक्तिर्लपितं भाषित'मित्यमरः, फलतः=फलेन फलदृष्टयेत्यर्थः, परिचिन्त्य=विचार्य, कार्येषु=कर्तव्येषु कर्मसु, अध्यवस्यति=उद्युङ्क्ते प्रवर्तते, सः=स पुरुषः, चिरं=बहुकालपर्यन्तं, यशसि=कीर्तौ, तिष्ठति=स्थिरो भवति।

**भावार्थः**—विद्वत्पुरुषकर्तृकसफलोपदेशवचनानुसरणेन कर्तव्यमनुतिष्ठन् पुरुषश्चिरं यशस्वी विलसतीति ॥

**भाषा**—जो बुद्धिमानों के उपदेश को फल की दृष्टि से विचार करके कार्यों में तत्परता के साथ लग जाता है वह चिरकाल तक यश का भागी होता है ॥ ३३ ॥

**असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि ।**
**उपलभ्यं चाविदितं विदितं चाननुष्ठितम् ॥ ३४ ॥**

**अन्वयः**—सुकुशलैः उपयुक्तम् अपि ज्ञानं हि असम्यक् ( भवति ), ( यदि तत् ) उपलभ्यं च अविदितं, विदितं च अननुष्ठितं ( भवति )।

**अर्थः—असम्यगिति** । सुकुशलैः=निपुणैर्विद्वद्भिः, उपयुक्तमपि=उपदिष्टमपि, ज्ञानं=बोधः, हि=निश्चयेन, असम्यक्=असमीचीनं व्यर्थमिति यावत्, भवति, यदि, तज्ज्ञानम्, उपलभ्यं च=प्राप्यं ज्ञेयं च, अविदितम्=अज्ञातं, विदितं=ज्ञातं च, अननुष्ठितम्=अप्रयुक्तं भवति।

**भावार्थः**—विदुषां ज्ञानोपदेशपूर्णानि वचनानि तदैव फलवन्ति जायन्ते, यदा तानि ज्ञातव्यानि तत्त्वतो जानीयुर्जना ज्ञात्वा च तथैवानुतिष्ठेयुः ॥

**भाषा**—पण्डितों द्वारा उपदिष्ट ज्ञान भी व्यर्थ ही है यदि वह प्राप्त होने पर भी ज्ञात न हो तथा ज्ञात होने पर भी प्रयोग में न लाया जाय ॥ ३४ ॥

**पापोदयफलं विद्वान् यो नारभति वर्धते ।**
**यस्तु पूर्वकृतं पापमविमृश्यानुवर्तते ।**
**अगाधपङ्के दुर्मेधा विषमे विनिपात्यते ॥ ३५ ॥**

**अन्वयः**—यः विद्वान् पापोदयफलं ( कर्म ) न आरभति, ( सः ) वर्धते। तु यः अविमृश्य पूर्वकृतं पापम् अनुवर्तते, ( सः ) दुर्मेधाः, विषमे अगाधपङ्के विनिपात्यते।

**अर्थः—पापोदयफलमिति** । यः विद्वान्=ज्ञानवान् यः पुरुषः, पापोदयफलं पापस्य=दुरितस्य उदयः=उत्पत्तिरुन्नतिर्वा फलं=प्रयोजनं यस्य तत् परिणतौ कष्टकरमिति यावत्, कर्मेति शेषः, नारभति=नोपक्रमते, परस्मैपदमार्षम्, स पुरुषः, वर्धते=समृद्धो भवति उन्नतिं प्राप्नोति वा। तु=किन्तु, यः=यः पुरुषः, अविमृश्य=अविचार्य, पूर्वकृतं=पूर्वस्मिन् समये विहितं, पापं=दुष्कर्म, अनुवर्तते=सन्ततमाचरति, स दुर्मेधा=दुष्टबुद्धिः पुरुषः, , 'नित्यमसिच् प्रजामेधयोः'रित्यनेन असिच्, विषमे=भयङ्करे, अगाधपङ्के अगाधः=अतलस्पर्शः यः पङ्कः=कर्दमः तस्मिन् 'अगाधमतलस्पर्शे, पङ्कोऽस्त्री शादकर्दमा'वित्यमरौ, विनिपात्यते=निपातितो भवति पापेनेति शेषः।

**भावार्थः**—असत्फलदायकस्य कर्मणोऽननुष्ठानं वृद्धेः कारणम्, अविचारपूर्वकं पापकर्मणोऽनुवर्तनं च नरके निपातस्य कारणं पुरुषाणां भवतीति ॥

**भाषा**—जो विद्वान् पाप को बढ़ानेवाले कार्य को नहीं करता उसकी बढ़ती होती है, और जो दुर्बुद्धि पुरुष पहले के किये हुए पापों का विचार न करके उनका अनुसरण करता ही जाता है वह घोर अगाधपङ्क ( अथाह—कीचड़वाले नरक में ) गिराया जाता है ॥ ३५ ॥

**मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ।**
**अर्थसन्ततिकामस्तु रक्षेदेतानि नित्यशः ॥ ३६ ॥**
**मदं स्वप्नमविज्ञानमकारं चात्मसम्भवम् ।**
**दुष्टामात्येषु विस्रम्भं दूताच्चाकुशलादपि ॥ ३७ ॥**
**द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृप ! ।**
**त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ॥ ३८ ॥**

**अन्वयः**—प्राज्ञः मन्त्रभेदस्य इमानि षट् द्वाराणि लक्षयेत्। अर्थसन्ततिकामः तु एतानि नित्यशः रक्षेत्। 'मदं स्वप्नम् अविज्ञानम् आत्मसम्भवम् आकारं दुष्टामात्येषु अपि च अकुशलात् दूतात् विस्रम्भम्' ( इति ) एतानि द्वाराणि हे नृप ! यः ज्ञात्वा सदा संवृणोति, सः त्रिवर्गाचरणे युक्तः ( सन् ) शत्रून् अधितिष्ठति।

**अर्थः—मन्त्रभेदस्येत्यादि**। प्राज्ञः=बुद्धिमान् राजेति यावत्, मन्त्रभेदस्य मन्त्रस्य=गुप्तविचारस्य भेदः=स्फुटनं प्रकटनं तस्य, इमानि=वक्ष्यमाणानि मदादीनि, षट्=षट्सङ्ख्याकानि, द्वाराणि=द्वारः, मार्गान् कारणानीति यावत्, 'स्त्री द्वार्द्वार'मित्यमरः, लक्षयेत्=सावधानं पश्येत्, अथवा 'इमानि द्वाराणि सन्ती'ति लक्षयेत्=जानीयात्, अर्थसन्ततिकामस्तु अर्थस्य=सम्पदः सन्ततिः=अभिवृद्धिः सैव कामः=अभिलाषः यस्य तादृशः पुरुषस्तु, एतानि=द्वाराणि, नित्यशः=सदा, रक्षेत्=पालयेत्, यथेमानि मन्त्रभेदं न जनयेयुस्तथा प्रयतेतेत्यर्थः। तान्येवाह—**मदमिति**। मदं=मद्यपानजनितं चित्तविक्लवतारूपं क्षीवत्वं, 'मदो मद्योपयोगज' इत्युक्तेः, स्वप्नं=निद्राम्, अविज्ञानं=स्वस्य शत्रूणां च गुप्तचरादिकस्य ज्ञानाभावम्, आत्मसम्भवम् आत्मनः=स्वस्मात् सम्भवः=उत्पत्तिः प्रकाशो यस्य तम्, आकारं=स्वरूपरचनाविशेषं नेत्रवक्त्रविकारादिकं, दुष्टामात्येषु दुष्टाः=नीचाः कार्यविघातकाः ये अमात्याः=मन्त्रिणः तेषु, अपि च=किञ्च, अकुशलात्=कार्यचातुर्यशून्यात् मूर्खादिति यावत्, दूतात्=सन्देशहरात्, 'स्यात्सन्देशहरो दूत' इत्यमरः, पञ्चमी चेयं सप्तम्यर्थे, मूर्खे दूत इत्यर्थः, विस्रम्भं=विश्वासम्, इत्येतानि=इदानीमुक्तानि, द्वाराणि=मन्त्रभेदस्य कारणानि, हे नृप !=हे राजन् !, यः=यः पुरुषः, ज्ञात्वा=विदित्वा, सदा=सर्वस्मिन् काले, संवृणोति=अपिधत्ते नोद्घाटयतीति यावत्, सः पुरुषः, त्रिवर्गाचरणे त्रिवर्गस्य=धर्मार्थकामानां 'त्रिवर्गो धर्मकामार्थै'रित्यमरः, आचरणं=विधानं सम्पादनं तस्मिन्, युक्तः=प्रवृत्तः सन्, शत्रून्=रिपून्, अधितिष्ठति=आक्रम्य तिष्ठति, विजयत इत्यर्थः।

**भावार्थः—**अनवधानतायाः कारणैर्मदनिद्रादिभिः षड्भिर्मन्त्रः प्रकाशितो भवति राज्ञा-मिति तन्मदादिषट्कं दूरीकृत्य सम्पदो वृद्धिमिच्छन् धर्मार्थकामसाधनपरायणः शत्रूञ्जित्वा सुखी भवति भूपाल इति ॥

**भाषा—**धन की वृद्धि चाहनेवाले बुद्धिमान् पुरुष को मन्त्र ( गुप्त विचार ) के फूटने के इन छः द्वारों ( मार्गों ) को ध्यानपूर्वक देख कर नित्य इनकी रक्षा करनी चाहिए। नशा, निद्रा, ( अपने और शत्रु के गुप्तचर आदि के विषय में ) न जानना, अपने नेत्र, भ्रू आदि का विकार ( इङ्गित ) और दुष्ट मन्त्री तथा मूर्ख दूत पर विश्वास रखना, इन द्वारों को जान कर हे राजन्! जो सदा इन्हें बन्द रखता है वह धर्म, अर्थ तथा काम के आचरण में लगा हुआ पुरुष शत्रुओं को वश में कर लेता है ॥ ३६–३८ ॥

**न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य वा ।**
**धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥ ३९ ॥**

**अन्वयः—**श्रुतम् अविज्ञाय वा वृद्धान् अनुपसेव्य बृहस्पतिसमैः अपि धर्मार्थौ वेदितुं वै न शक्यौ ।

**अर्थः—**श्रुतं = शास्त्रम्, अविज्ञाय = अविदित्वा, वा = अथवा, वृद्धान् = ज्ञानादिभि-र्वृद्धान् पुरुषान्, अनुपसेव्य = अपरिचर्य अनाश्रित्येति यावत्, बृहस्पतिसमैरपि=देवगुरुसदृशै-रपि, बुद्धिमद्भिरिति शेषः, धर्मार्थौ=धर्मशास्त्रमर्थशास्त्रं चेति द्वयं, वेदितुं = ज्ञातुं, वै = निश्चयेन, न शक्यौ = न पार्यौ ।

**भावार्थः—**शास्त्रज्ञानं वृद्धोपसेवनं च विना बुद्धिमन्तोऽपि धर्मार्थज्ञानसम्पादने समर्था न भवन्ति ॥

**भाषा—**शास्त्र को बिना समझे और वृद्धों की बिना सेवा किये धर्म और अर्थ को बृह-स्पति के समान ( बुद्धिमान् ) पुरुष भी नहीं जान सकते ॥ ३९ ॥

**नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ।**
**अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ॥ ४० ॥**

**अन्वयः—**समुद्रे पतितं नष्टम्, अशृण्वति वाक्यं नष्टम्, अनात्मनि श्रुतं नष्टम्, अन-ग्निकं हुतं नष्टम् ।

**अर्थः—नष्टमिति ।** समुद्रे=सागरान्तः, पतितं=गतं, वस्त्विति शेषः, नष्टम् = अप्राप्यं निरर्थकम्, अशृण्वति = अनाकर्णयति पुरुषे, तमुद्दिश्य प्रयुक्तमिति यावत्, वाक्यं = वचनं, नष्टं=निष्प्रयोजनम्, अनात्मनि=दुष्टान्तःकरणे आत्माभिमानशून्ये मूर्खे वा पुरुषे, श्रुतं=शास्त्रं, नष्टं=निष्फलम्, अनग्निकं न विद्यतेऽग्निर्यस्मिंस्तत्, अग्निना विना भस्मनीत्यर्थः, हुतं= होमकरणं, नष्टं = व्यर्थम् ।

**भावार्थः—**समुद्रान्तः पतितं वस्तु, अशृण्वन्तमुद्दिश्य वचनोपन्यास, आत्माभिमानशून्ये दुष्टान्तःकरणे वा शास्त्रोपदेशो भस्मनि हवनं चेति सर्वं निरर्थकमेव ॥

**भाषा**—समुद्र में गिरी हुई वस्तु, न सुननेवाले के प्रति कहा गया वचन, अन्तःकरणहीन ( मूर्ख ) के लिए विद्या, तथा बिना आगके किया गया हवन नष्ट ( बेकार ) है ॥ ४० ॥

**मत्या परीक्ष्य मेधावी बुद्ध्या सम्पाद्य चासकृत् ।**
**श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥ ४१ ॥**

**अन्वयः**—मेधावी मत्या परीक्ष्य बुद्ध्या च असकृत् सम्पाद्य श्रुत्वा दृष्ट्वा अथ विज्ञाय प्राज्ञैः ( सह ) मैत्रीं समाचरेत् ।

**अर्थः—मत्येति** । मेधावी = बुद्धिमान् मनुष्यः, मत्या=मननेन विचारशक्त्येति यावत् , परीक्ष्य = वस्तुतत्त्वं समीक्ष्य, बुद्ध्या च = ज्ञानशक्त्या च, असकृत्=अनेकवारं, सम्पाद्य=पर्यालोच्य, श्रुत्वा=लोकेभ्यो गुणान्निशम्य, दृष्ट्वा=कार्यविशेषान् विलोक्य, अथ = अनन्तरं, विज्ञाय = सम्यग्ज्ञात्वा, प्राज्ञैः = बुद्धिमद्भिः सह, मैत्रीं = मित्रतां स्नेहमिति यावत् , समाचरेत्=कुर्यात् ।

**भावार्थः**—विचारेण वस्तुतत्त्वालोचनं ज्ञानेन पुनः पुनः पर्यालोचनं च कृत्वा लोकतो गुणश्रवणेन तत्र तत्र कार्यविशेषाणां दर्शनेन सम्यग्ज्ञानेन च बुद्धिमद्भिः सख्यं विदधीत बुद्धिमान् पुरुष इति ॥

**भाषा**—बुद्धिमान् पुरुष विचार के द्वारा परीक्षा करके, बुद्धि के द्वारा अनेक बार पर्यालोचन ( सब प्रकार का ठीक ठीक विचार ) करके, ( दूसरों से गुणों को ) सुन करके, ( स्वयं उनके कार्य आदि को ) देख करके तथा भलीभाँति समझ करके बुद्धिमानों से मित्रता करे॥४१॥

**अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।**
**हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ ४२ ॥**

**अन्वयः**—विनयः अकीर्तिं हन्ति, पराक्रमः अनर्थं हन्ति, क्षमा क्रोधं हन्ति, आचारः अलक्षणं हन्ति ।

**अर्थः—अकीर्तिमिति** । अत्र पद्ये तृतीयचरणोक्तं 'नित्य'मिति पदं सर्वत्र वाक्येष्वन्वेति, सर्वदेति तस्यार्थः । विनयः=नम्रता, अकीर्तिं = कीर्त्यभावम् अयशः, हन्ति=परिहरति, पराक्रमः=शौर्यम् उद्योगः, अनर्थम्=अर्थाभावं, कार्याऽसिद्धिं दरिद्रतामिति यावत् , हन्ति = दूरीकरोति, क्षमा=सहनशीलता, क्रोधं=कोपं 'कोपः क्रोधामर्षरोषे'त्यमरः, हन्ति=शमयति, आचारः =सदाचरणम् , अलक्षणं=लक्षणाभावं गुणहीनतां, हन्ति = विनाशयति ।

**भावार्थः**—अयशो नम्रतया, कार्यासिद्धिर्दारिद्र्यं च पुरुषार्थेन, क्रोधः सहनशीलतया गुणहीनता च सदाचारेण दूरीक्रियन्त इति ॥

**भाषा**—नम्रता अपयश को, पराक्रम ( उद्योग ) कार्य की असिद्धि तथा दरिद्रता को, क्षमा क्रोध को तथा सदाचार गुणहीनता को सदा दूर कर देता है ॥ ४२ ॥

**परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया ।**
**परीक्षेत कुलं राजन् ! भोजनाच्छादनेन च ॥ ४३ ॥**

**अन्वयः**—हे राजन् ! परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया भोजनाच्छादनेन च कुलं परीक्षेत ।

**अर्थः—परिच्छदेनेति** । हे राजन् !=हे भूपते ! परिच्छदेन=भोग्यपदार्थसाहित्येन, क्षेत्रेण =केदारेण, 'पुनपुंसकयोर्वप्रः केदारः क्षेत्र'मित्यमरः, वेश्मना=गृहेण, 'गृहं गेहोदवसितं वेश्म' इत्यमरः, परिचर्यया=आचरणेन, भोजनाच्छादनेन च=अन्नवस्त्राभ्यां च, समाहारद्वन्द्वे सत्येकवचनम् , कुलं=वंशं, परीक्षेत=सदसद्वेति जानीयात् ।

**भावार्थः**—भोग्यपदार्थसाहित्यकेदारगृहाचरणान्नवस्त्रैः कुलस्योत्तमत्वाधमत्वे ज्ञातव्ये ॥

**भाषा**—हे राजन् ! भोग की सामग्री, खेत, घर, चाल-चलन तथा अन्न और वस्त्र के द्वारा कुल की परीक्षा करनी चाहिए ॥ ४३ ॥

**उपस्थितस्य कामस्य प्रतिवादो न विद्यते ।**
**अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः ॥ ४४ ॥**

**अन्वयः**—निर्मुक्तदेहस्य अपि ( पुंसः ) उपस्थितस्य कामस्य प्रतिवादः न विद्यते, कामरक्तस्य ( पुंसः ) किं पुनः विद्यते ।

**अर्थः—उपस्थितस्येति** । निर्मुक्तदेहस्य निर्मुक्तः=त्यक्तः देहः=शरीरं तदभिमान इति यावत् , येन तादृशस्य जीवन्मुक्तस्यापि पुंसः, उपस्थितस्य=मनस्युत्पन्नस्य, कामस्य= इच्छायाः वासनायाः, प्रतिवादः=प्रत्याख्यानं त्याग इति यावत् , न विद्यते=न भवति, कामरक्तस्य कामे=इच्छायां विषये वा रक्तः=अनुरक्तः आसक्तः तस्य पुंसः, किं पुनः=इच्छात्यागः कथं वा भवेत् ? ।

**भावार्थः**—वासनात्यागो दुष्करः, जीवन्मुक्ता अपि वासनामुक्ता न भवन्ति यदा, तदा कामासक्तानां कथैव का ? ॥

**भाषा**—जीवन्मुक्त पुरुष की भी उपस्थित इच्छा का परित्याग नहीं होता ( अर्थात् कठिनाई से होता है ) तो फिर कामासक्त (इच्छा के अधीन रहनेवाले) पुरुष की कौन बात? ॥४४॥

**प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम् ।**
**मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ॥ ४५ ॥**

**अन्वयः**—( जनः ) प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनं मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ।

**अर्थः—प्राज्ञोपसेविनमिति** । जनः, प्राज्ञोपसेविनं प्राज्ञान्=पण्डितान् उपसेवते=परिचरति आश्रयतीति सः तं, वैद्यं=विद्यावन्तं, धार्मिकं=धर्मं चरन्तं, 'चरति' इत्यनेन ठक्प्रत्ययः, प्रियदर्शनं प्रियं=सर्वेषामभीष्टं दर्शनम्=अवलोकनं यस्य तं, मित्रवन्तं=सुहृदा युक्तं सहायवन्तमित्यर्थः, सुवाक्यं च सुष्ठु=शोभनं प्रियं वाक्यं=वचनं यस्य तं च, सुहृदं=मित्रं, परिपालयेत्=रक्षेत् सङ्गृह्णीयादित्यर्थः ।

**भावार्थः**—पण्डितानाश्रयम् विद्वान् धर्मात्मा सर्वेषां प्रियस्तथा सहायवान् सखा सङ्ग्राह्यः॥

**भाषा**—बुद्धिमानों के आश्रय मे रहनेवाले, विद्वान्, धार्मिक, सुन्दर, मित्रों (सहायक) वाले, तथा मीठा बोलनेवाले मित्र की भलीभांति रक्षा करनी चाहिए ॥ ४५ ॥

**दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।**
**धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनशताद्वरः ॥ ४६ ॥**

**अन्वयः**—दुष्कुलीनः वा कुलीनः यः मर्यादां न लङ्घयेत्, (तथा) धर्मापेक्षी मृदुः ह्रीमान् (अस्ति), सः कुलीनशतात् वरः ।

**अर्थः—दुष्कुलीन इति ।** दुष्कुलीनः=अधमकुलोत्पन्नः, वा=अथवा, कुलीनः=उत्तम-कुलोत्पन्नः, यः=यः पुरुषः, मर्यादां कुलस्थितिम् आचारमिति यावत्, न लङ्घयेत्=नातिक्राम्येत्, तथा धर्मापेक्षी=धर्मेऽनुरक्तः, मृदुः=दयालुः, ह्रीमान्=लज्जाशीलः विनयशालीत्यर्थः, अस्ति, सः=स पुरुषः, कुलीनशतात्=शतसङ्ख्याविशिष्टेभ्यः कुलीनपुरुषेभ्यः, वरः=श्रेष्ठः ।

**भावार्थः**—अकुलीनः कुलीनो वापि पुरुषो यदि कुलाचारपरिपालको धर्मप्रियः कृपालु-र्विनीतश्च भवेत्तर्हि स लोकैः सर्वश्रेष्ठः कुलीनो मन्यते ॥

**भाषा**—मित्र नीचकुल का हो अथवा ऊंचे कुल का हो, यदि वह मर्यादा का उल्लङ्घन नहीं करता, धर्म का इच्छुक तथा विनम्र और लज्जाशील है, तो वह सौ ऊँचेकुलवालों से अच्छा है ॥ ४६ ॥

**ययोश्चित्तेन वा चित्तं निभृतं निभृतेन वा ।**
**समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यति ॥ ४७ ॥**

**अन्वयः**=ययोः चित्तेन वा चित्तं निभृतेन वा निभृतं प्रज्ञया (च) प्रज्ञा समेति, तयोः मैत्री न जीर्यति ।

**अर्थः—ययोरिति ।** ययोः=ययोर्द्वयोः पुरुषयोः, चित्तेन वा=हृदयेन वा, चित्तं=हृदयं, निभृतेन वा=गुप्तेन विचारादिना वा, निभृतं=गुप्तं विचारादि, प्रज्ञया=बुद्धया च, प्रज्ञा=बुद्धिः, समेति=संवदति समानतां गच्छतीत्यर्थः, तयोः=तयोर्द्वयोः पुरुषयोः, मैत्री=मित्रता, न जीर्यति=न क्षीणा भवति स्थिरा भवतीत्यर्थः ।

**भावार्थः**—एकचित्तावेकगुप्तविचारावेकबुद्धी च पुरुषौ चिरं मित्रतां निर्वहतः ॥

**भाषा**—जिन दो पुरुषों का चित्त से चित्त, गुप्त विचार से गुप्त विचार तथा बुद्धि से बुद्धि मिल जाती है उनकी मित्रता क्षीण नहीं होती ॥ ४७ ॥

**दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।**
**विवर्जयीत मेधावी तस्मिन् मैत्री प्रणश्यति ॥ ४८ ॥**

**अन्वयः**—मेधावी दुर्बुद्धिम् अकृतप्रज्ञं (सुहृदं) तृणैः छन्नं कूपम् इव विवर्जयीत, तस्मिन् मैत्री प्रणश्यति ।

**अर्थः—दुर्बुद्धिमिति ।** मेधावी=बुद्धिमान् पुरुषः, दुर्बुद्धिं दुष्टा=दोषपूर्णा बुद्धिः=मतिः यस्य तम्, अकृतप्रज्ञम् अकृता=अनुत्पन्ना प्रज्ञा=विचारशक्तिर्यस्य तं विवेकशून्यबुद्धि-

मित्यर्थः, सुहृदं, तृणैः=घासैः, छन्नं=व्याप्तं, कूपं=प्रहिम्, इव=यथा, 'पुंस्येवान्धुः प्रहिः कूप' इत्यमरः, विवर्जयीत=वर्जयेत्, आर्षोऽयं प्रयोगः, त्यजेदित्यर्थः, तस्मिन्=पूर्वोक्तविशेषणद्वयविशिष्टे पुरुषे, मैत्री=मित्रता, प्रणश्यति=विनष्टा भवति न तिष्ठतीत्यर्थः।

**भावार्थः**—मूढबुद्धिं विचारशक्तिशून्यं च मित्रं न कुर्यात्, यतस्तत्र मित्रता न चिरं तिष्ठति॥

**भाषा**—बुद्धिमान् पुरुष कुबुद्धि, विचारशक्ति से हीन मनुष्य को तृण से व्याप्त (घास फूस से ढके अथवा भरे हुए) कुयें की भाँति त्याग दे अर्थात् उनसे मित्रता न करे, क्योंकि ऐसे लोगों के साथ की गई मित्रता नष्ट हो जाती है॥ ४८॥

**अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च।**
**तथवापेतधर्मेषु न मैत्रीमाचरेद् बुधः॥ ४९॥**

**अन्वयः**—बुधः अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च तथा एव अपेतधर्मेषु मैत्रीं न आचरेत्।

**अर्थः—अवलिप्तेष्विति**। बुधः=विद्वान्, अवलिप्तेषु=गर्वपूर्णेषु, मूर्खेषु=मूढेषु, रौद्रसाहसिकेषु च रौद्राः=क्रोधनाः साहसिकाः=अविचार्य कार्यकर्तारश्च तेषु च, तथैव=एवमेव, अपेतधर्मेषु अपेतः=अपगतः नष्टः धर्मः=सदाचारो येषां तेषु, मैत्रीं=सौहार्दं, नाचरेत्=न कुर्वीत।

**भावार्थः**—गर्वयुक्ता मूर्खाः क्रोधना अविमृश्यकारिणः पापाचाराश्च पुरुषा मित्रत्वयोग्या न सन्ति॥

**भाषा**—विद्वान् पुरुष अभिमानी, मूर्ख, क्रोधी, बिना विचार किये काम करनेवाले तथा धर्मरहित मनुष्यों से मित्रता न करे॥ ४९॥

**कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम्।**
**जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते॥ ५०॥**

**अन्वयः**—कृतज्ञं धार्मिकं सत्यम् अक्षुद्रं दृढभक्तिकं जितेन्द्रियं स्थित्यां स्थितं च मित्रम् अत्यागि इष्यते।

**अर्थः—कृतज्ञमिति**। कृतज्ञम्=उपकारवेदि, धार्मिकं=धर्मशीलं, सत्यं=सत्यमार्गे स्थितम्, अक्षुद्रं=क्षुद्रतारहितं महत्त्वशालीत्यर्थः, दृढभक्तिकं दृढा=निश्चला भक्तिः=प्रेम यस्य तत्, 'शेषाद्विभाषे'ति कः, जितेन्द्रियम्=इन्द्रियजेतृ, स्थित्यां=मर्यादायां, स्थितं=निश्चलं च, मित्रं=सुहृत्, अत्यागि त्यागोऽस्यास्तीति त्यागि न त्यागि अत्यागि=त्यागाऽयोग्यम् अत्यक्तुं ग्रहीतुमित्यर्थः, इष्यते=अभिलष्यते, जनैरिति शेषः।

**भावार्थः**—उपकाराभिज्ञो धर्मात्मा सत्यनिष्ठ उदारो दृढप्रेमा वशी सदाचारपरिपाटीपरिपालकश्च पुरुषो मित्रत्वेन सङ्ग्रहीतुमिष्यते लोकैः॥

**भाषा**—उपकार को माननेवाला, धार्मिक, सच्चा, उदार, दृढस्नेहवाला, तथा (विपत्ति में) साथ न छोड़नेवाला मित्र लोगों को अभीष्ट (प्यारा) होता है॥ ५०॥

**इन्द्रियाणामनुत्सर्गो मृत्युनापि विशिष्यते।**
**अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतानपि॥ ५१॥**

अन्वयः—इन्द्रियाणाम् अनुत्सर्गः मृत्युना अपि विशिष्यते, पुनः अत्यर्थम् उत्सर्गः दैवतान् अपि सादयेत् ।

**अर्थः—इन्द्रियाणामिति ।** इन्द्रियाणां = विषयग्राहकाणां चक्षुरादीनाम् , अनुत्सर्गः उत्सर्गः = स्वभावः विषयेषु प्रवृत्तिरिति यावत् , स न भवतीत्यनुत्सर्गः=विषयेभ्यो निवृत्तिः, मृत्युनापि मृत्युः = मरणं तेनापि मरणादपीति यावत् , विशिष्यते = विशिष्टाऽधिका भवति, पुनः = भूयः, अत्यर्थम् = अतिशयेन, उत्सर्गः=इन्द्रियाणां विषयेषु प्रवृत्तिः, दैवतानपि = देवता अपि, 'दैवतानि पुंसि वा देवताः स्त्रिया'मित्यमरः, सादयेत्=विनाशयेत् ।

**भावार्थः—**विषयेभ्य इन्द्रियाणां निवर्तनं मरणाधिककष्टकरं विषयेषु तेषां सातिशयं प्रवर्तनं च दैवतानामपि हानिकरं भवतीति मध्यममानेन विषयेष्विन्द्रियाणि प्रवर्तनीयानि ॥

**भाषा—**इन्द्रियों को विषयों से रोकना मृत्यु से भी बढ़कर है, और उनको विषयों में अधिक आसक्त करना देवताओं को भी नष्ट कर देता है ॥ ५१ ॥

**मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ।**
**आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ॥ ५२ ॥**

**अन्वयः—**सर्वभूतानां मार्दवम् अनसूया क्षमा धृतिः मित्राणाम् अविमानना च—( एतानि ) बुधाः आयुष्याणि प्राहुः ।

**अर्थः—मार्दवमिति ।** सर्वभूतानां=सर्वप्राणिनां, मध्य इति शेषः, मार्दवं = मृदुत्वं कोमलता दयेति यावत् , अनसूया=गुणेषु दोषाऽनुद्भावनं, क्षमाः=शान्तिः, धृतिः = धैर्यं, मित्राणां=सुहृदाम् , अविमानना च = आदरश्च,. एतानि, बुधाः=पण्डिताः, आयुष्याणि = आयुर्वर्धकानि, प्राहुः=कथयन्ति ।

**भावार्थः—**सर्वप्राणिदयाऽसूया क्षमा धृतिर्मित्रादरश्चेत्येतत्सर्वं दीर्घायुष्करं कथ्यते ॥

**भाषा—**सब जीवों के साथ कोमलता ( दया ) का वर्ताव करना, गुणों में दोष ढूँढने से दूर रहना, क्षमा, धैर्य तथा मित्रों का आदर, ( इन सब को ) बुद्धिमानों ने आयुवर्धक बताया है ॥ ५२ ॥

**अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते ।**
**मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ॥ ५३ ॥**

**अन्वयः—**यः अपनीतम् अर्थं सुदृढां मतिम् आस्थाय सुनीतेन प्रत्यानिनीषते, तत् अकापुरुषव्रतम् ( अस्ति ) ।

**अर्थः—अपनीतमिति ।** यः=यः पुरुषः, अपनीतम्=अन्यायद्वारा विनाशितम् , अर्थं = धनं, सुदृढां सुतराम् = अत्यन्तं दृढा = शक्ता तां कार्यसाधनसमर्थामिति यावत् , 'शक्तस्थूलौ त्रिषु दृढा'वित्यमरः, मतिम् = बुद्धिम् , आस्थाय = आश्रित्य, सुनीतेन=श्रेष्ठया नीत्या, प्रत्यानिनीषते=प्रत्यानेतुमाहर्तुमिच्छति, तत् = तदेतत्कार्यम् , अकापुरुषव्रतम् अकापुरुषाणाम्= आलस्यशून्यानामुद्योगिनाम् अथवा अकुत्सितपुरुषाणाम् 'विभाषा पुरुषे' इति कादेशः, व्रतं= नियमः सङ्कल्पः अस्ति ।

**भावार्थः**—अनीत्या विनाशितस्य धनस्य नीत्या पुनः प्राप्त्यभिलाषः पुरुषार्थसम्पन्ना-नामेव नियतकर्तव्यतयावतिष्ठते ॥

**भाषा**—पुरुष यदि अन्याय से नष्ट किये गये धन अथवा पदार्थ को, दृढ़ बुद्धि का आश्रय लेकर न्याय द्वारा लौटा लाने की इच्छा करता है तो उसका यह सङ्कल्प पुरुषार्थियों का ( संकल्प ) है ॥ ५३ ॥

**आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः ।**
**अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥ ५४ ॥**

**अन्वयः**-आयत्यां प्रतिकारज्ञः तदात्वे दृढनिश्चयः अतीते कार्यशेषज्ञः नरः अर्थैः न प्रहीयते ।

**अर्थः—आयत्यामिति** । आयत्याम्=उत्तरे काले भविष्यतीत्यर्थः, 'उत्तरः काल आयति'-रित्यमरः, प्रतिकारज्ञः =दुःखनिवारणोपायवित्, तदात्वे=तत्काले वर्तमान इत्यर्थः, 'तत्कालस्तु तदात्वं स्या'दित्यमरः, दृढनिश्चयः दृढः=कार्यक्षमः अपरिवर्तनीयः निश्चयः=कर्तव्याकर्तव्य-विषयको निश्चितो विचारो यस्य सः, अतीते=भूतकालविषये, कार्यशेषज्ञः=अवशिष्टकर्तव्य कार्यवित्, नरः=मनुष्यः, अर्थैः=धनैः कार्यसिद्ध्यादिभिः प्रयोजनैर्वा, न प्रहीयते=न वियुज्यते अर्थसिद्धिं प्राप्नोत्येवेत्यर्थः ।

**भावार्थः**—भूतकालिके कार्यशेषे दत्तदृष्टिर्वर्तमानकालिके कर्तव्ये दृढविचारो भविष्यत्कालिक-दुःखनिवारणोपायविच्च पुरुषः सम्पन्नार्थ एव सदा वर्तत इति ॥

**भाषा**—जो मनुष्य भविष्य में ( आनेवाले ) दुःखों के निवारण का उपाय जानता है, वर्तमान ( कर्तव्य अकर्तव्य ) के विषय में दृढ सङ्कल्पवाला है तथा भूतकाल के बचे हुए कार्यों की ही चिन्ता करता है अर्थात् बीती हुई बाते के लिए पश्चात्ताप नहीं करता, उसके अर्थ ( धन अथवा कार्य की सिद्धि ) की हानि ( कदापि ) नहीं होती ॥ ५४ ॥

**कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।**
**तदेवापहरत्येनं तस्मात् कल्याणमाचरेत् ॥ ५५ ॥**

**अन्वयः**—( नरः ) कर्मणा मनसा वाचा ( च ) यत् अभीक्ष्णं निषेवते, तत् एव एनम् अपहरति, तस्मात् कल्याणम् आचरेत् ।

**अर्थः—कर्मणेति** । नरः, कर्मणा=कृत्या, मनसा=चित्तेन, वाचा=वचनेन च, यत्= शुभमशुभं वा यत्कार्यम्, अभीक्ष्णं=पुनः पुनः, 'मुहुः पुनःपुनः शश्वदभीक्ष्ण'मित्यमरः, निषेवते=भजति, तदेव=तत्कार्यमेव, एनं=नरम्, अपहरति=स्वसम्मुखमाकर्षति, तस्मात्=ततः कारणात्, कल्याणं=शुभं कर्म, आचरेत्=कुर्यात् ।

**भावार्थः**—मनुष्यो निजकर्मानुसारमेव फलं प्राप्नोतीति सदा शुभमेव कर्म कुर्यात् ॥

**भाषा**—मनुष्य कर्म, मन तथा वचन से जिस कार्य का निरन्तर सेवन करता है वही कार्य उसे आकृष्ट कर लेता है, इसलिए मनुष्य को हितकर कार्य करना चाहिए ॥ ५५ ॥

**मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् ।**
**भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ५६ ॥**

**अन्वयः**—मङ्गलालम्भनं योगः श्रुतम् उत्थानम् आर्जवं सताम् अभीक्ष्णदर्शनं च एतानि भूतिं कुर्वन्ति ।

**अर्थः—मङ्गलालम्भनमिति ।** मङ्गलालम्भनं मङ्गलानां=मङ्गलकारिणां गवादीनाम् आलम्भनं=स्पर्शः, योगः=चित्तवृत्तिनिरोधः, श्रुतं=शास्त्रश्रवणम् , उत्थानम्=उद्योगः, आर्जवं= सरलता, सतां=सत्पुरुषाणाम् , अभीक्ष्णदर्शनं=नित्यमवलोकनम्–एतानि=इमानि सर्वाणि, भूतिं=कल्याणम् ऐश्वर्यं वा, कुर्वन्ति=सम्पादयन्ति ।

**भावार्थः**—गवादिस्पर्शचित्तवृत्तिनिरोधशास्त्रश्रवणोद्योगसरलतासत्पुरुषनित्यदर्शनानि कल्याणकारीणि सन्ति ॥

**भाषा**—माङ्गलिक वस्तु ( गाय आदि ) का स्पर्श, चित्तवृत्ति को रोकना, शास्त्र का श्रवण करना, उद्योग, सरलता तथा सज्जनों का नित्य–दर्शन–ये ऐश्वर्य को देने वाले हैं ॥५६॥

**अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च ।**
**महान् भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ॥ ५७ ॥**

**अन्वयः**—अनिर्वेदः श्रियः लाभस्य च शुभस्य च मूलम् ( अस्ति ), अनिर्विण्णः महान् भवति, सुखम् आनन्त्यं च अश्नुते ।

**अर्थः—अनिर्वेद इति ।** अनिर्वेदः=उद्योगपरायणत्वं, श्रियः=सम्पदो लक्ष्म्या वा, लाभस्य च=प्राप्तेः कार्यसिद्धेरिति यावत् , शुभस्य च=कल्याणस्य च, मूलं=कारणमस्ति, अनिर्विण्णः=उद्योगपूर्णः पुरुषः, महान्=महत्त्वयुक्तः श्रेष्ठ इति यावत् , भवति=जायते, सुखं=शर्म, आनन्त्यं नास्ति अन्तः=क्षणविनाशः यस्येत्यनन्तः तस्य भावस्तत्त्वं क्षणाऽविनाशित्वं दीर्घायुष्ट्वमित्यर्थः, अथवा अनन्तमेवानन्त्यं, स्वार्थे ष्यञ् , सुखविशेषणं चेदम् , अपरिमितमविनाशि वेति तदर्थः, अश्नुते=प्राप्नोति ।

**भावार्थः**—उद्योगेन श्रीः कार्यसिद्धिः कल्याणं महत्त्वमनन्तसुखप्राप्तिश्चेति सर्वं सम्भवति ॥

**भाषा**—उद्योग से विरक्त न होना लक्ष्मी, लाभ ( कार्यसिद्धि ) तथा कल्याण की जड़ है, उद्योग में लगा हुआ मनुष्य बड़ा हो जाता है और अनन्त सुख भोगता है ॥ ५७ ॥

**नातः श्रीमत्तरं किञ्चिदन्यत् पथ्यतमं मतम् ।**
**प्रभविष्णोर्यथा तात ! क्षमा सर्वत्र सर्वदा ॥ ५८ ॥**

**अन्वयः**—हे तात ! प्रभविष्णोः अतः अन्यत् किञ्चित् श्रीमत्तरं पथ्यतमं न मतम् , यथा सर्वत्र सर्वदा क्षमा ।

**अर्थः—नात इति ।** हे तात ! =हे महाशय !, प्रभविष्णोः=शक्तिशालिनः समर्थस्य पुरुषस्य, अतः=वक्ष्यमाणाद् गुणात् , अन्यत्=इतरत् , किञ्चित्=किमपि, श्रीमत्तरं=सुन्दर-

तरं, पथ्यतमम्=अत्यन्तं हितकरं, न मतं=नाभिमतं, यथा=यादृक्, सर्वत्र=अखिलेषु स्थानेषु, सर्वदा=सर्वस्मिन् काले, क्षमा=सहनशीलता नाम गुणः अस्ति ।

**भावार्थः**—क्षमा नाम समर्थस्य गुणः सर्वतः सुन्दरो हितकरश्चास्ति ॥

**भाषा**—हे तात ! समर्थ पुरुष के लिए सब जगह और सब समय क्षमा करने से बढ़कर परम सुन्दर तथा अत्यन्त हितकारक कोई दूसरा गुण नहीं है॥ ५८ ॥

**क्षमेदशक्तः सर्वस्य शक्तिमान् धर्मकारणात् ।**
**अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ५९ ॥**

**अन्वयः**—अशक्तः (आत्मरक्षाकारणात्) शक्तिमान् धर्मकारणात् सर्वस्य क्षमेत्, किन्तु यस्य अर्थानर्थौ समौ तस्य क्षमा नित्यं हिता ।

**अर्थः**—**क्षमेदिति** । अशक्तः=शक्तिहीनोऽसमर्थः पुरुषः, आत्मरक्षाकारणात्, शक्तिमान्=शक्तियुक्तः समर्थः पुरुषः, धर्मकारणात्=धर्मार्थं, सर्वस्य=सकलस्य जनस्य, अपराधमिति शेषः, यद्वा सर्वस्येति कर्मत्वाविवक्षायां षष्ठी, सर्वं जनमित्यर्थः, क्षमेत्=क्षाम्येत् क्षमां कुर्यात्, क्षमेदित्यार्षम्, किन्तु, यस्य=यस्य पुरुषस्य, अर्थानर्थौ=लाभालाभौ, समौ=तुल्यौ स्तः, तस्य=तादृशस्य पुरुषस्य, क्षमा=सहनशीलता, नित्यं=नियमेन सदा वा, हिता=हितकारीत्यर्थः ।

**भावार्थः**—शक्तिहीनः स्वात्मरक्षायै शक्तिशाली च धर्मरक्षायै क्षमां प्रदर्शयेदित्येतदुचितं किल, किन्तु लाभहान्योः समानो न क्षमो नाक्षमश्च पुरुषः स्वरूपगोपनाय क्षमां हितकारिणीं नियमेन समाश्रयेदेव ॥

**भाषा**—असमर्थ पुरुष (अपने बचाव के लिए) तथा समर्थ पुरुष धर्म रक्षा के लिए सबको क्षमा करे, और जिस पुरुष के लिए लाभ और हानि दोनों ही समान हैं उसके लिए तो क्षमा सदा हितकर है ॥ ५९ ॥

**यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।**
**कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ६० ॥**

**अन्वयः**—(मनुष्यः) यत् सुखं सेवमानः अपि (सन्) धर्मार्थाभ्यां न हीयते, तत् कामम् उपसेवेत, मूढव्रतं न आचरेत् ।

**अर्थः**—**यत्सुखमिति** । मनुष्यः, यत्सुखं=आत्मनः प्रियं यद् भोग्यं विषयादि, सेवमानोऽपि=अनुशीलयन्नपि पुनः पुनर्भोक्तुं प्रवर्तमानोऽपीति यावत्, धर्मार्थाभ्यां=धर्मेण धनेन च, न हीयते=न हीनो भवति, तत्=तत्सुखं, कामं=यथेच्छम्, उपसेवेत=पुनःपुनराश्रयेत्, मूढव्रतं मूढानां=मूर्खाणां व्रतं=नियमम् आहारविहारपरित्यागादिकं, नाचरेत्=न कुर्यात् ।

**भावार्थः**—स्वात्मसुखं धर्मार्थसहितं चेद्यदृच्छया सेवनीयमेव, किन्तु व्यर्थं आहारविहार-[illegible]गादिरूपः स्वात्मसुखत्यागो मूढजनाचरितो नानुकरणीयः ॥

**भाषा**—जिस सुख का सेवन करता हुआ भी मनुष्य धर्म और अर्थ से हीन नहीं होता,

उसका इच्छानुसार सेवन करे, मूर्खता का काम न करे अर्थात् उचित आहार-विहार का त्याग न करे ॥ ६० ॥

**दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।**
**न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ ६१ ॥**

**अन्वयः**—श्रीः दुःखार्तेषु प्रमत्तेषु नास्तिकेषु अलसेषु च अदान्तेषु, ये च उत्साहविवर्जिताः ( तेषु ) न वसति ।

**अर्थः—दुःखार्तेष्विति ।** श्रीः = लक्ष्मीः, दुःखार्तेषु=कष्टपीडितेषु, प्रमत्तेषु=अवधान-शून्येषु, नास्तिकेषु = ईश्वरपरलोकास्तित्ववेदप्रामाण्यानभ्युपगन्तृषु, अलसेषु च = उद्योगं कर्तुम-निच्छत्सु मन्देषु च, 'मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः' इत्यमरः, अदान्तेषु=तपः क्लेशासहेषु 'तपःक्लेशसहो दान्त' इत्यमरः, ये च=ये जनाश्च, उत्साहविवर्जिताः=अध्यवसाय-शून्याः तेषु, 'उत्साहोऽध्यवसायः स्या'दित्यमरः, न वसति=न स्थितिं करोति ।

**भावार्थः**—दुःखपीडिताऽनवहितनास्तिकालसाऽतपस्विषूत्साहविहीनेषु च लक्ष्म्याः स्थितिर्न भवतीति ॥

**भाषा**—दुःख से पीड़ित, असावधान, नास्तिक, आलसी, तपस्या के कष्ट को न सहनेवाले तथा उत्साहहीन पुरुषों के यहाँ लक्ष्मी नहीं रहती ॥ ६१ ॥

**आर्जवेन नरं युक्तमार्जवात् सव्यपत्रपम् ।**
**अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ६२ ॥**

**अन्वयः**—कुबुद्धयः आर्जवेन युक्तम् आर्जवात् सव्यपत्रपं नरम् अशक्तं मन्यमानाः (सन्तः) तु धर्षयन्ति ।

**अर्थः—आर्जवेनेति ।** कुबुद्धयः=निन्दितमतयः पुरुषाः, आर्जवेन=सरलतया, युक्तं= समन्वितम्, आर्जवात्=सरलतायाः कारणात्, सव्यपत्रपं विशेषेण अपत्रपा=लज्जा व्यपत्रपा 'लज्जा सापत्रपान्विते'त्यमरः, तया सहितः सव्यपत्रपः तं=लज्जातिशयशालिनं, नरं=मनुष्यम्, अशक्तं शक्त्या=सामर्थ्येन हीनं, मन्यमानाः=सम्भावयन्तः सन्तः, 'तु' इति पादपूरणे, धर्ष-यन्ति = अवमन्यन्ते ।

**भावार्थः**—सरलः पुमान् स्वीयसारल्यकारणात् क्वचिदनुचितं लज्जाभावमुद्वहन्नशक्तोऽ-यमिति मत्वा दुष्टबुद्धिभिरभिभूतो जायत इति ॥

**भाषा**—कुबुद्धि लोग सरलतायुक्त तथा सरलता के कारण लज्जाशील पुरुष को असमर्थ समझ कर उसका अपमान करते हैं ॥ ६२ ॥

**अत्यार्यमतिदातारमतिशूरमतिव्रतम् ।**
**प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ६३ ॥**

**अन्वयः**—श्रीः भयात् अत्यार्यम् अतिदातारम् अतिशूरम् अतिव्रतं प्रज्ञाभिमानिनं च एव ( पुरुषं ) न उपसर्पति ।

**अर्थः—अत्यार्यमिति** । श्रीः=लक्ष्मीः, भयात्=तिरस्कारभीतेः कारणात्, अत्यार्यम्=अधिकश्रेष्ठम्, अतिदातारम्=अधिकदानकर्तारम्, अतिशूरम्=अधिकपराक्रमशालिनम्, अतिव्रतम्=अधिकसङ्कल्पशालिनं, प्रज्ञाभिमानिनम्='अहं बुद्धिमानस्मी'ति गर्वयुक्तं चैव पुरुषं, नोपसर्पति=नोपगच्छति ।

**भावार्थः—**अधिकमात्रया श्रेष्ठत्वं दातृत्वं शूरत्वं सङ्कल्पं च बिभ्रतो बुद्धिमत्त्वाभिमानपूर्णस्य पुरुषस्य पुरः स्वात्मावमानभयाल्लक्ष्म्या न कदाप्युपस्थीयते ॥

**भाषा—**अतिश्रेष्ठ (बहुत बड़े) आचारवाले, बहुत दान देनेवाले, अत्यन्त शूरता दिखानेवाले, बहुत बड़ा सङ्कल्प करनेवाले तथा बुद्धि का गर्व रखनेवाले पुरुष के पास लक्ष्मी डर के मारे नहीं जाती ॥ ६३ ॥

> **न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च ।**
> **नैषा गुणान् कामयते नैर्गुण्यान्नानुरज्यते ।**
> **उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ॥ ६४ ॥**

**अन्वयः—**एषा अतिगुणवत्सु च न, अत्यन्तं निर्गुणेषु च न ( तिष्ठति ), एषा गुणान् न कामयते, नैर्गुण्यात् न अनुरज्यते, अन्धा श्रीः उन्मत्ता गौः इव क्वचित् एव अवतिष्ठते ।

**अर्थः—न चेति** । एषा=श्रीः, अतिगुणवत्सु=गुणातिशयशालिषु च, न=न तिष्ठति, अत्यन्तं=सर्वथा, निर्गुणेषु च=गुणहीनेषु च, न=न तिष्ठति, एषा=श्रीः, गुणान्=कुलीनत्वादीन्, न कामयते=न वाञ्छति, नैर्गुण्यात्=गुणराहित्यात्कारणात्, नानुरज्यते=नानुरक्ता भवति, अन्धा=नेत्रविहीना उचितानुचितं किमप्यपश्यन्तीत्यर्थः, श्रीः=लक्ष्मीः, उन्मत्ता=उन्मादं गता, गौरिव=धेनुरिव, क्वचिदेव=कुत्रचिदेव यथेच्छं यत्र क्वापीत्यर्थः, अवतिष्ठते=अवस्थितिं लभते । 'समवप्रविभ्यस्थ' इत्यात्मनेपदम् ।

**भावार्थः—**विचित्रचरित्रशालिनी श्रीरियं समधिकैर्गुणैः रमणीयं गुणलेशेनापि शून्यं वा नरं नाभिलष्यति, निर्गुणे सगुणे वाप्यनुरक्ता न जायते । उन्मत्तां धेनुमिव यत्र कुत्रापि स्वैरं स्थितिं कुर्वतीं श्रियं नूनमविमृश्यकारिणीमन्धां जानीयाज्जन इति ॥

**भाषा—**( लक्ष्मी ) न तो भारी गुणवानों के पास ही रहती है और न एकदम गुणहीन के ही पास रहती है, न तो गुणों को ही चाहती है और न गुणहीनता में ही अनुरक्त होती है, पागल गाय की तरह अन्धी लक्ष्मी कदाचित् ही कहीं स्थिर रहती है ॥ ६४ ॥

> **अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।**
> **रतिपुत्रफला नारी दत्तभुक्तफलं धनम् ॥ ६५ ॥**

**अन्वयः—**वेदाः अग्निहोत्रफलाः, श्रुतं शीलवृत्तफलं, नारी रतिपुत्रफला, धनं दत्तभुक्तफलम् ।

**अर्थः—अग्निहोत्रफला इति** । वेदाः=आम्नायाः, अग्निहोत्रफलाः अग्निहोत्रम्=अग्न्याधानं फलं=प्रयोजनं येषां तादृशा भवन्ति, 'यावज्जीवमग्निहोत्रं जुहुया'दिति श्रुत्युक्तेः,

श्रुतं = शास्त्रं, शीलवृत्तफलं शीलं = सत्स्वभावः वृत्तं = चरित्रं च फले प्रयोजने यस्य तथाभूतं भवति, 'शीलं स्वभावे, वृत्तं पद्ये चरित्रे च' इत्यमरौ, नारी=स्त्री, 'स्त्री योषिदबला योषा नारी'-त्यमरः, रतिपुत्रफला रतिः = प्रेम नर्मक्रीडा च पुत्रः = आत्मजश्च फले यस्याः सा भवति, धनं = द्रव्यं दत्तभुक्तफलं दत्तं = दानं भुक्तं = भोगश्च फले यस्य तत् भवति। 'दत्तभुक्ते'त्यत्र भावे क्तप्रत्ययौ।

**भावार्थः**—वेदादीनामग्निहोत्रादिकं फलमिति वेदादिभिरग्निहोत्रादेः कर्तव्यता स्फुटं प्रतिपादिता भवति॥

**भाषा**—वेदाध्ययन का फल अग्निहोत्र करना, शास्त्राभ्यास का फल अच्छे स्वभाव और सदाचार का होना, स्त्री का फल रतिसुख तथा पुत्र को प्राप्त करना और धन का फल दान देना तथा भोग करना है॥ ९५॥

**अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम्।**
**न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात्॥ ९६॥**

**अन्वयः**—यः अधर्मोपार्जितैः अर्थैः और्ध्वदेहिकं करोति, सः प्रेत्य तस्य फलम् अर्थस्य दुरागमात् न भुङ्क्ते।

**अर्थः—अधर्मोपार्जितैरिति।** यः=यः पुमान्, अधर्मोपार्जितैः अधर्मेण=पापेन अन्यायेन वा अर्जिताः = सम्पादिताः तैः, अर्थैः = धनैः, और्ध्वदेहिकम्=ऊर्ध्वं देहादुत्पन्नं परलोकसाधनीभूतं यज्ञदानादिकमिति यावत्, करोति = आचरति, सः=तादृशः पुमान्, प्रेत्य=मृत्वा मरणानन्तरं, तस्य = और्ध्वदेहिकस्य कर्मणः, फलं=प्रयोजनमुद्देश्यम्, अर्थस्य=धनस्य, दुरागमात्=दुष्टमार्गेण प्राप्तेः कारणात्, न भुङ्क्ते = न प्राप्नोति।

**भावार्थः**—अधर्मेण धनं प्राप्य कृतं यज्ञदानादि कर्तुः पुरुषस्य न नूनं फलतीति॥

**भाषा**—जो पुरुष पापाचरण से कमाये हुए धन से परलोक के साधनभूत ( यज्ञ आदि ) कर्म को करता है वह धन के अनुचित उपार्जन के कारण मरने पर उस कर्म के फल को नहीं भोगता॥ ९६॥

**कान्तारे वनदुर्गेषु कृच्छ्रास्वापत्सु सम्भ्रमे।**
**उद्यतेषु च शस्त्रेषु नास्ति सत्त्ववतां भयम्॥ ९७॥**

**अन्वयः**—कान्तारे वनदुर्गेषु कृच्छ्रासु आपत्सु सम्भ्रमे शस्त्रेषु उद्यतेषु च सत्त्ववतां भयं न अस्ति।

**अर्थः—कान्तार इति।** कान्तारे=दुर्गमे वर्त्मनि, दुःखेन गन्तुं शक्ये विषमे मार्गे इति यावत्, 'कान्तारं वर्त्म दुर्गम'मित्यमरः, वनदुर्गेषु वनस्य=अरण्यस्य दुर्गाः=दुर्गमाः प्रदेशाः तेषु, कृच्छ्रासु = कष्टकरीषु, आपत्सु=विपत्तिषु, सम्भ्रमेषु = उद्वेगेषु, शस्त्रेषु = आयुधेषु, उद्यतेषु= उत्थितेषु च सत्सु हन्तुं प्रवृत्तेष्विति यावत्, सत्त्ववतां सत्त्वम्=आन्तरो धर्मः मानसं बलं बुद्धिरिति यावत्, विद्यते येषु तादृशानां पुरुषाणां, भयं भीतिः, नास्ति = न जायते।

**भावार्थः**—बुद्धिमन्तः कुत्रापि भयङ्करेऽपि स्थाने कस्मिन्नपि प्रसङ्गे न भीताः पराङ्मुखा भवन्ति ॥

**भाषा**—दुर्गम मार्ग में, वन के दुर्गम प्रदेशों में, कष्ट देनेवाली विपत्तियों में, घबराहट में तथा उठे हुए शस्त्रों से सत्त्वशाली ( बुद्धिमानों ) को भय नहीं होता ॥ ६७ ॥

**उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।**
**समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तु ॥६८॥**

**अन्वयः**—उत्थानं संयमः दाक्ष्यम् अप्रमादः धृतिः स्मृतिः च समीक्ष्य समारम्भः तु भवस्य मूलम् ( अस्ति, इति ) विद्धि ।

**अर्थः—उत्थानमिति ।** उत्थानम्=उद्योगः, संयमः=इन्द्रियाणां नियमनं, दाक्ष्यं=कुशलता, अप्रमादः=अवधानं सावधानतेति यावत्, प्रमादोऽनवधानते'त्यमरः, धृतिः=धैर्यं, स्मृतिः=स्मरणं समयोचितार्थाऽविस्मरणमित्यर्थः, च=किञ्च, समीक्ष्य=पर्यालोच्य विचारपूर्वक इति यावत्, समारम्भः=कार्यस्य प्रारम्भस्तु, भवस्य=ऐश्वर्यस्य कल्याणस्य वा, मूलं=कारणमुत्पादकं, समूहाभिप्रायेणैकत्वम्, अस्ति-इति, विद्धि=जानीहि, त्वमिति शेषः ।

**भावार्थः**—उद्योगादिकमैश्वर्यसाधकमिति ॥

**भाषा**—उद्योग, संयम ( जितेन्द्रियता ), कुशलता, सावधानी, धैर्य, स्मरण तथा विचार कर कार्य को आरम्भ करना-इन ( सब ) को ऐश्वर्य की जड़ समझो ॥ ६८ ॥

**तपो बल तापसानां ब्रह्म ब्रह्मविदां बलम् ।**
**हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ६९ ॥**

**अन्वयः**—तापसानां बलं तपः, ब्रह्मविदां बलं ब्रह्म, असाधूनां बलं हिंसा, गुणवतां बलं क्षमा ( अस्ति ) ।

**अर्थः—तप इति ।** तापसानां=तपस्विनां, बलं सामर्थ्यं, तपः=तपश्चरणं, ब्रह्मविदां=वेदविदां, बलं, ब्रह्म=वेदः, असाधूनां=दुर्जनानां, बलं, हिंसा=प्राणिनां मारणं दुःखप्रदानं वा, गुणवतां=सौजन्यादिगुणशालिनां, बलं, क्षमा=सहनशीलता, अस्तीति शेषः ।

**भावार्थः**—तपस्विवेदविद्दुर्जनगुणवन्तो जगति तपोवेदहिंसाक्षमाभिरेव बलयुक्ता भवन्ति॥

**भाषा**—तपस्वियों का बल तपस्या, वेद जाननेवालों का बल वेद, दुष्टों का बल हिंसा तथा गुणवानों का बल क्षमा है ॥ ६९ ॥

**अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।**
**हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ ७० ॥**

**अन्वयः**—आपः मूलं फलं पयः हविः ब्राह्मणकाम्या गुरोः वचनम् औषधम् च तानि अष्टौ अव्रतघ्नानि ( सन्ति ) ।

**अर्थः—अष्टाविति ।** आपः=जलम्, 'आपः स्त्री भूम्नी'ति कोषप्रामाण्यादप्शब्दस्य बहुत्वम्, मूलं=भूमेरुत्पन्नं भोज्यं शाकादिभेदो मूलकादिकं, फलं=दाडिमादिकं, पयः=दुग्धं,

'पयः क्षीर'मित्यमरः, हविः=घृतं 'घृतमाज्यं हवि'रित्यमरः, ब्राह्मणकाम्या=ब्राह्मणेच्छा, गुरोः=पूज्यस्य पित्रादेः, वचनम्=वाक् आज्ञेति यावत्, औषधं च=भेषजं च-तानि=एतानीति यावत्, अष्टौ=अष्टसङ्ख्याकानि वस्तूनि, अव्रतघ्नानि व्रतम्=उपवासफलाहारादिकं घ्नन्ति=नाशयन्तीति व्रतघ्नानि न व्रतघ्नानि अव्रतघ्नानि, सन्ति ।

**भावार्थः**—जलमूलफलदुग्धघृतौषधानि भुक्तानि ब्राह्मणेच्छया तथा गुरोराज्ञया कृतानि कार्याणि च व्रतलोपकराणि न भवन्तीति ॥

**भाषा**—जल, मूल, फल, दूध, घी, ब्राह्मण की इच्छा, गुरु की आज्ञा तथा तथा औषध ये आठ व्रत को नष्ट नहीं करते ॥ ७० ॥

**न तत्परस्य सन्दध्यात् प्रतिकूलं यदात्मनः ।**
**सङ्ग्रहेणैष धर्मः स्यात् कामादन्यः प्रवर्तते ॥ ७१ ॥**

**अन्वयः**—यत् आत्मनः प्रतिकूलं तत् परस्य ( अपि ) न सन्दध्यात्, सङ्ग्रहेण एषः धर्मः स्यात्, अन्यः कामात् प्रवर्तते ।

**अर्थः—न तदिति** । यत्=यत्कार्यम्, आत्मनः=स्वस्य, प्रतिकूलं=विरुद्धमनिष्टं, भवेत्, तत्=तत्कार्यं, परस्य=अन्यस्य कृतेऽपि, न सन्दध्यात्=न विदध्यात्, सङ्ग्रहेण=सङ्क्षेपेण, एषः=उपरिष्टादुक्तः, धर्मः=धर्मनामकः पदार्थः, स्यात्=भवेत्, भवितुमर्हतीत्यर्थः, अन्यः=एतस्मादितरो धर्मः, कामात्=इच्छायाः, प्रवर्तते=प्रभवति ।

**भावार्थः**—'आत्मनोऽनभीष्टं कार्यं कस्यापि कृते न कर्तव्य'मित्येष सङ्क्षेपादुक्तो धर्मो निष्काम, एतदन्यस्तु सकामः प्रोक्तः ॥

**भाषा**—जो काम अपने को अच्छा न लगे उसे दूसरों के प्रति न करे। संक्षेप में यही ( निष्काम ) धर्म ( का स्वरूप ) है, इससे भिन्न धर्म स्वेच्छामूलक अर्थात् सकाम है ॥ ७१ ॥

**अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ।**
**जयेत् कदर्यं दानेन जयेत् सत्येन चानृतम् ॥ ७२ ॥**

**अन्वयः**—(मनुष्यः) अक्रोधेन क्रोधं जयेत्, साधुना असाधुं जयेत्, दानेन कदर्यं जयेत्, सत्येन च अनृतं जयेत् ।

**अर्थः—अक्रोधेनेति** । मनुष्यः, अक्रोधेन=शान्त्या, क्रोधं=कोपं, जयेत्=अभिभूय वशीकुर्यात्, साधुना=उत्तमेन कार्येणेति यावत्, असाधुम्=अधमं दुर्जनमिति यावत्, जयेत्, दानेन=वस्तुविशेषाणां वितरणेन, कदर्यं=कृपणं 'कदर्ये कृपणे'त्यमरः, जयेत्, सत्येन च=तथ्येन च, अनृतम्=असत्यं, जयेत् ।

**भावार्थः**—शान्तिसत्कर्मदानसत्यैः पुरुषेण क्रोधदुर्जनकृपणासत्यानि विजेतव्यानि ॥

**भाषा**—क्रोध के अभाव ( दया ) से क्रोध को, सज्जनता के व्यवहार से असज्जन को दान से कृपण को और सत्य से झूठ को जीतना चाहिए ॥ ७२ ॥

**स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ।**
**चौरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ॥ ७३ ॥**

**अन्वयः**—स्त्रीधूर्तके अलसे भीरौ चण्डे पुरुषमानिनि चौरे कृतघ्ने विश्वासः न कार्यः, नास्तिके च न ।

**अर्थः—स्त्रीधूर्तक इति** । स्त्रीधूर्तके स्त्री=योषित्, धूर्तकः=वञ्चकश्चेत्यनयोः समाहारः स्त्रीधूर्तकं तस्मिन्, 'स्त्री योषिदबला योषा, धूर्तस्तु वञ्चकः' इत्यमरौ, अलसे=उद्योगशून्ये, भीरौ=भयशालिनि, चण्डे=अत्यन्तकोपने अतिक्रोधशालिनीत्यर्थः, 'चण्डस्त्वत्यन्तकोपन' इत्यमरः, पुरुषमानिनि आत्मानं पुरुषं=पुरुषार्थशालिनं मन्यत इति पुरुषमानी तम्, 'आत्ममाने खश् चे'त्यनेन चकाराण्णिनिप्रत्ययः, चौरे=तस्करे, कृतघ्ने=उपकाराऽमन्तरि, विश्वासः= विस्रम्भः, न कार्यः=न कर्तव्यः, नास्तिके च=वेदनिन्दके च, न=न कार्य इत्यर्थः ।

**भावार्थः**—स्त्रीधूर्तप्रभृतिषु कदापि विश्वासं न कुर्यात् ॥

**भाषा**—स्त्री, धूर्त, आलसी, डरपोक, अत्यन्त क्रोधी, पुरुषार्थ का गर्व रखनेवाले, चोर, उपकार को भूल जानेवाले तथा नास्तिक में विश्वास नहीं रखना चाहिए ॥ ७३ ॥

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।**
**चत्वारि सम्प्रवर्धन्ते कीर्तिरायुर्यशो बलम् ॥ ७४ ॥**

**अन्वयः**—अभिवादनशीलस्य नित्यं वृद्धोपसेविनः, कीर्तिः, आयुः यशः बलम् ( एतानि ) चत्वारि सम्प्रवर्धन्ते ।

**अर्थः—अभिवादनशीलस्येति** । अभिवादनशीलस्य अभिवादनं=पूज्यानां पादग्रहणं प्रणामकरणं 'समे तु पादग्रहणमभिवादनमित्युभे' इत्यमरः, शीलं=स्वभावः यस्य तादृशस्य, नित्यं=सर्वदा, वृद्धोपसेविनः वृद्धान्=वयोज्ञानादिभिर्ज्येष्ठान् उपसेवते=आश्रयति यः तस्य पुरुषस्य, कीर्तिः=जीवति सति गुणकीर्तनम्, आयुः=जीवितकालः, यशः=मरणोत्तरं गुणकीर्तनं, बलं=सामर्थ्यम्-एतानि चत्वारि=चतुःसङ्ख्याकानि वस्तूनि, सम्प्रवर्धन्ते=सम्यगेधन्ते ।

**भावार्थः**—प्रणतिशीलः सदा वृद्धसेवी पुमान् स्वस्य कीर्त्यायुर्यशोबलानि समुन्नयति ॥

**भाषा**—( गुरु जनों को ) नमस्कार करनेवाले तथा नित्य वृद्धों की सेवा करनेवाले पुरुष की कीर्ति, आयु, यश तथा बल-ये चारों बढ़ते हैं ॥ ७४ ॥

**अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण वा ।**
**अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥ ७५ ॥**

**अन्वयः**—ये अर्थाः अतिक्लेशेन धर्मस्य अतिक्रमेण वा अरेः प्रणिपातेन वा स्युः, तेषु मनः मा स्म कृथाः ।

**अर्थः—अतिक्लेशेनेति** । ये, अर्थाः=कार्याणि, अतिक्लेशेन=बहुना कष्टेन, धर्मस्य, अतिक्रमेण=उल्लङ्घनेन वा अधर्माचरणेनेति यावत्, अरेः=शत्रोः, प्रणिपातेन=नमस्कारेण

वा, स्युः=प्राप्ता भवेयुः सिध्येयुरिति यावत् , तेषु = अर्थेषु, मनः=चित्तं, मा स्म कृथाः=न विधेहि, 'स्मोत्तरे लङ् च' इति लुङ्, 'न माङ्योगे' इत्यडागमप्रतिषेधः ।

**भावार्थः**—बहुकष्टेन धर्मत्यागेन शत्रोः पुरस्तात् पराजयस्वीकरणेन च लभ्येऽर्थजाते न मनो निवेशयेति ॥

**भाषा**—जो अर्थ ( धन आदि ) अत्यन्त कष्ट, धर्म के उल्लङ्घन अथवा शत्रु के सामने झुकने से मिलें उनमें चित्त न लगाइये ॥ ७५ ॥

**अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।**
**निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् ॥ ७६ ॥**

**अन्वयः**—अविद्यः पुरुषः शोच्यः, अप्रजं मैथुनं शोच्यम् , निराहाराः प्रजाः शोच्याः, अराजकं राष्ट्रं शोच्यम् ।

**अर्थः—अविद्य इति ।** अविद्यः=विद्याहीनः मूर्खः, पुरुषः = मनुष्यः, शोच्यः=शोकस्य विषयः, अप्रजं=सन्ततिहीनं, 'प्रजा स्यात्सन्ततौ जने' इत्यमरः, मैथुनं=रतं, 'मैथुनं निधुवनं रत'मित्यमरः, शोच्यम् , निराहाराः=भोजनहीनाः बुभुक्षया पीडिताः, प्रजाः=जनाः, शोच्याः, अराजकं=राज्ञा विरहितं, राष्ट्रं=राज्यं, शोच्यम् ।

**भावार्थः**—विद्यासन्तत्याहारनृपतिरहितानि पुरुषमैथुनजनराज्यानि शोकस्य विषयतां गतानि मनसः शल्यरूपाणि भवन्ति ॥

**भाषा**—विद्याहीन पुरुष, सन्तान न उत्पन्न करनेवाला मैथुन, भूखी प्रजा तथा राजा से हीन राष्ट्र ये शोक के विषय हैं ॥ ७६ ॥

**अध्वा जरा देहवतां पर्वतानां जलं जरा ।**
**असम्भोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ॥ ७७ ॥**

**अन्वयः**—अध्वा देहवतां जरा, जलं पर्वतानां जरा, असम्भोगः स्त्रीणां जरा, वाक्शल्यं मनसः जरा ।

**अर्थः—अध्वेति ।** अध्वा = मार्गः, देहवतां=शरीरधारिणां, जरा=वृद्धत्वं, जलम्=उदकं, पर्वतानां = शैलानां जरा, असम्भोगः = रत्यभावः, स्त्रीणां=योषितां जरा, वाक्शल्यं=वचनरूपः शङ्कुः, 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः, मनसः=चेतसः, जरा वर्तते ।

**भावार्थः**—मनुष्यपर्वतस्त्रीमनसामध्वजलासम्भोगवाक्शल्यानि दौर्बल्यक्लेशसम्पादकतया विकृतिकारीणि जरास्वरूपाणि ॥

**भाषा**—शरीरधारियों के लिए रास्ता चलना, पर्वतों के लिए जल, स्त्रियों के लिए पति से सहवास न होना, तथा मन के लिए कठोर वचन बुढापास्वरूप (निर्बल तथा दुःखी कर देनेवाला ) है ॥ ७७ ॥

**अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ॥ ७८ ॥**
**मलं पृथिव्या बाह्लीकाः पुरुषस्यानृतं मलम् ।**
**कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥ ७९ ॥**

**सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।**
**ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥ ८० ॥**

**अन्वयः**—वेदाः अनाम्नायमलाः, अव्रतं ब्राह्मणस्य मलं, बाह्लीकाः पृथिव्याः मलम्, अनृतं पुरुषस्य मलं, साध्वी कौतूहलमला, स्त्रियः विप्रवासमलाः, रूप्यं सुवर्णस्य मलं, त्रपु रूप्यस्य अपि मल, सीसं त्रपुमलं, मलं, सीसस्य अपि मलं ज्ञेयम् ।

**अर्थः—अनाम्नायमला इति** । वेदाः=ऋग्यजुःसामाथर्वरूपास्त्रयः, अनाम्नायमलाः अनाम्नायः = अनभ्यासः मलं = मालिन्यं येषां ते, अव्रतं=ब्रह्मचर्यादिव्रताभावः, ब्राह्मणस्य = विप्रस्य, 'विप्रश्च ब्राह्मणोऽसौ षट्कर्मे'त्यमरः, मलं = मालिन्यं, बाह्लीकाः=म्लेच्छदेशविशेषाः, तथाचोक्तं–'पञ्चानां सिन्धुषष्ठानां नदीनां यत्र सङ्गमः । बाह्लोका नाम ते देशा' इति, पृथिव्याः= भूमेः, मलम् , अनृतम्=असत्यं, पुरुषस्य = मनुष्यस्य, मलं, साध्वी = पतिव्रता स्त्री, 'सती साध्वी पतिव्रते'त्यमरः, कौतूहलमला कौतूहलं=कौतुकम् 'कौतूहलं कौतुकं चे'त्यमरः, उत्सव-समाजदर्शनगमनाद्युत्कण्ठेति यावत् , मलं=मलिनता यस्याः सा, स्त्रियः = योषितः, विप्रवास-मलाः विप्रवासः=विशेषेण प्रवासः पत्युः परदेशगमनं स एव मलं यासां ताः, रूप्यं=रजतं, 'दुर्वर्णं रजतं रूप्य'मित्यमरः, सुवर्णस्य=कनकस्य, 'स्वर्णं सुवर्णं कनक'मित्यमरः, मलं, त्रपु= रङ्गं धातुविशेषः 'त्रपु पिच्चिटम् । रङ्गवङ्ग' इत्यमरः, रूप्यस्यापि=रजतस्य च, मलं, सीसं=नागं धातुविशेषः, 'नागसीसकयोगेष्टवप्राणी'त्यमरः, त्रपुमलं त्रपुणः=रङ्गस्य मलं=मालिन्यं, मलं = मालिन्यं, सीसस्यापि=नागस्य च, मलं=मालिन्यं, ज्ञेयं = ज्ञातव्यम् ।

**भावार्थः**—वेदब्राह्मणपृथिवीपुरुषसाध्वीस्त्रीसुवर्णरूप्यत्रपुसीसकानाम् अनभ्यासव्रताभाव-बाह्लीकदेशासत्यकौतुकपतिप्रवासरूप्यत्रपुसीसमलान्येव दूषकत्वान्मलरूपाणि सन्तीति ॥

**भाषा**—अनभ्यास वेद का, व्रतहीनता ब्राह्मण का, बाह्लीक देश पृथ्वी का, असत्यता पुरुष-का, कौतुक ( क्रीड़ा ) पतिव्रता स्त्री का, तथा पति का प्रवास स्त्रियों का, चाँदी सोने का, राँगा चादी का, सीसा राँगे का और मल ( गन्दगी ) सीसे का मल ( दूषक ) है ॥ ७८–८० ॥

**न स्वप्नेन जयेन्निद्रां न कामेन जयेत् स्त्रियः ।**
**नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ८१ ॥**

**अन्वयः**—स्वप्नेन निद्रां न जयेत् , कामेन स्त्रियः न जयेत्, इन्धनेन अग्निं न जयेत् , पापेन सुरां न जयेत् ।

**अर्थः—न स्वप्नेनेति** । स्वप्नेन=शयनेन कर्मणा, 'स्यान्निद्रा शयनं स्वापः स्वप्न' इत्यमरः, निद्रां=जागरणाभावरूपां तदाख्यां वृत्तिमवस्थां वा; न जयेत्=नाभिभवेत् , कामेन=विषयाभिलाषेण, स्त्रियः = योषितः, न जयेत् , इन्धनेन=काष्ठेन, 'काष्ठं दार्विन्धनं त्वेध'इत्यमरः, अग्निं=वह्निं, न जयेत् , पानेन= पानक्रियया, सुरां=हालां मद्यमिति यावत् , 'सुरा हलिप्रिया हाले'त्यमरः, न जयेत् ।

**भावार्थः**—निद्रास्त्रीवैश्वानरमदिराणां शयनकामेन्धनपानैर्जयस्तु न भवति, प्रत्युत वृद्धिरेव भवतीत्यतः शयनादींस्त्यजेत्॥

**भाषा**—शयन ( सोना ) से निद्रा को, काम ( भोग ) से स्त्रियों को, इन्धन ( लकड़ी ) से आग को, तथा पीने से शराब को न जीते ( न जीतने की चेष्टा करे ) ॥ ८१ ॥

**यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः ।**
**अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ ८२ ॥**

**अन्वयः**—यस्य मित्रं दानजितं, यस्य शत्रवः युधि निर्जिताः, यस्य दाराः अन्नपानजिताः, तस्य जीवितं सफलम्।

**अर्थः—यस्येति ।** यस्य=यस्य पुरुषस्य, मित्रं=सखा, 'अथ मित्रं सखा सुहृ'दित्यमरः, दानजितं दानेन=धनादिवितरणेन जितं=वशीकृतं, यस्य, शत्रवः=रिपवः, युधि=युद्धे, निर्जिताः=पराभूताः, यस्य, दाराः=स्त्री, 'दाराः पुंभूम्नी'ति कोषप्रामाण्याद्दारशब्दस्य बहुत्वम्, अन्नपानजिताः अन्नपानाभ्यां=भोजनेन पानेन च जिताः=स्वायत्तीकृताः, तस्य=तस्य पुरुषस्य, जीवितं=प्राणनं, सफलं=सार्थकम्।

**भावार्थः**—संसारे तस्यैव जीवनं सफलं मन्यते, यो दानयुद्धान्नपानादिभिर्मित्रशत्रुदारान् विजित्य वशं नीतवान्॥

**भाषा**—जिसने दान से मित्र को, युद्ध से शत्रुओं को तथा खिलाने पिलाने से स्त्री को जीत लिया है उसका जीवन सफल है ॥ ८२ ॥

**सहस्रिणोपि जीवन्ति जीवन्ति शतिनस्तथा ।**
**धृतराष्ट्र ! विमुञ्चेच्छां न कथञ्चिन्न जीव्यते ॥ ८३ ॥**

**अन्वयः**—सहस्रिणः जीवन्ति तथा शतिनः अपि जीवन्ति, हे धृतराष्ट्र ! इच्छां विमुञ्च, कथञ्चित् न जीव्यते ( इति ) न।

**अर्थः—सहस्रिण इति ।** सहस्रिणः सहस्रं=सहस्रसङ्ख्याका मुद्राः सन्ति येषां तादृशाः पुरुषाः, जीवन्ति=प्राणान् धारयन्ति, तथा=तादृक्, शतिनः अपि शतं=शतसङ्ख्याका मुद्राः सन्ति येषां तथाभूता अपि पुरुषाः, जीवन्ति, हे धृतराष्ट्र !=हे राजन्!, इच्छाम्=अभिलाषं धनादिलालसामिति यावत्, विमुञ्च=विशेषेण त्यज, मनुष्यैः, कथञ्चित्=केनापि प्रकारेण, न जीव्यते=प्राणधारणं न क्रियते इति न किन्तु जीव्यत एव।

**भावार्थः**—आयुषः शेषे सति न्यूनधना अधिकधनाश्चापि सर्वे एव जीवनसुखोपभोगं कुर्वन्तीत्यतो राजन्! धनस्य लोभं परिहर, कर्मानुसारं सर्वेषां जीवनं सुलभमेवेति ॥

**भाषा**—हज़ार के धनी तथा सौ के धनी सभी मनुष्य (आयु रहने पर) जीवित रहते हैं तो हे धृतराष्ट्र ! लोभ छोड़ दीजिए और ऐसा न समझिए कि अब किसी प्रकार जीना न होगा॥८३॥

**यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।**
**नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ८४ ॥**

**अन्वयः**—पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ( इत्यादि ) यत् ( अस्ति ), तत् सर्वं 'एकस्य ( कृते अपि ) अलं न' इति पश्यन् न मुह्यति।

**अर्थः—यदिति।** पृथिव्या=भूमौ, व्रीहियवं व्रीहयश्च=धान्यानि च यवाश्च=शितशूकाश्चेत्यनयोः समाहारो व्रीहियवं, 'शितशूकयवौ समा'वित्यमरः, हिरण्यं=सुवर्णं, 'स्वर्णं सुवर्णं कनकं हिरण्य'मित्यमरः, पशवः=गवादयः, स्त्रियः=नार्यः, 'स्त्री योषिदबला योषा नारी'त्यमरः, इत्यादि यत्=यत्किञ्चिदस्ति, तत्सर्वं=तत्सकलं वस्तुजातम्, एकस्य=एकपुरुषस्यापि कृते, अलं=पर्याप्तम्, 'अलं भूषणपर्याप्तिशक्तिवारणवाचक'मित्यमरः, न=नास्ति, इति=इत्येवं पूर्वोक्तं, पश्यन्=विचारयन्, पुरुष इति शेषः, न मुह्यति=न मोहमज्ञानं प्राप्नोति।

**भावार्थः**—हे राजेन्द्र ! तृष्णायाः सीमा नास्ति, जगत्यां वर्तमानं व्रीहियवहिरण्यपशुयोषादिकं सकलमेकस्यापि तृप्तिकरं नास्तीति विचारेण लोभात्मा संमोहोऽपनेयो भवतीति॥

**भाषा**—'पृथिवी पर धान, जौ, सोना, पशु, तथा स्त्रियाँ ( इत्यादि ) जो कुछ है, वह सब एक पुरुष के लिए ( भी ) पर्याप्त नहीं है' ऐसा समझनेवाला पुरुष मोह मे नहीं पड़ता॥८४॥

**राजन् ! भूयो ब्रवीमि त्वां पुत्रेषु सममाचर।**
**समता यदि ते राजन् ! स्वेषु पाण्डुसुतेषु वा॥ ८५॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि सप्तमोऽध्यायः।

**अन्वयः**—हे राजन् ! भूयः त्वां ब्रवीमि यदि ते स्वेषु पाण्डुसुतेषु वा समता (अस्ति, तर्हि) हे राजन् ! पुत्रेषु समम् आचर।

**अर्थः—राजन्निति।** हे राजन्=हे भूपते ! भूयः=पुनः, त्वां=भवन्तं, ब्रवीमि=कथयामि निवेदयामीति यावत्, यदि=चेत्, ते=भवतः, स्वेषु=आत्मीयेषु दुर्योधनादिषु, 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः, पाण्डुसुतेषु वा=पाण्डोः पुत्रेषु युधिष्ठिरादिषु वा, समता=समानो भावः, अस्ति तर्हि, हे राजन्=हे नरेश्वर !, पुत्रेषु=सुतेषु कौरवेषु पाण्डवेषु चेति यावत्, समं=समानरूपेण यथा स्यात्तथा, आचर=आचरणं कुरु व्यवहरेत्यर्थः।

**भावार्थः**—पूर्वं निवेदितो भवान् भूयः, पुनरपीदानीं निवेद्यते यत्किल हे राजन् ! स्वपुत्रेषु पाण्डुपुत्रेषु च भवतो यदि वैषम्यं किमपि नास्ति तर्हि सर्वेष्वमीषु समानभावेन वर्ततां भवान्, अनेनैव नूनं भवतः श्रेयो भवितेति॥

इति श्रीजगन्नाथशास्त्रिहोशिङ्गविनिर्मितायां तत्त्वार्थदर्शिनीत्याख्यायां
विदुरनीतिव्याख्यायां सप्तमोऽध्यायः।

**भाषा**—हे राजन् ! मैं फिर आपसे कहता हूँ कि यदि आप अपने तथा पाण्डु के पुत्रों में समता का भाव रखते हैं तो उनके विषय में निष्पक्षता का व्यवहार कीजिए॥ ८५॥

श्री अनन्तराम शास्त्री वेताल कृत विदुरनीति की हिन्दी भाषाटीका
सरलार्थबोधिनी का सप्तम अध्याय समाप्त।



## अष्टमोऽध्यायः ।

**योऽभ्यर्चितः सद्भिरसज्जमानः करोत्यर्थं शक्तिमहापयित्वा ।**
**क्षिप्रं यशस्तं समुपैति सन्तमलं प्रसन्ना हि सुखाय सन्तः ॥ १ ॥**

**अन्वयः**—सद्भिः अभ्यर्चितः असज्जमानः यः शक्तिम् अहापयित्वा अर्थं करोति, यशः तं स तं क्षिप्रं समुपैति । हि सन्तः प्रसन्नाः ( चेत् , तर्हि ) सुखाय अलम् ।

**अर्थः**—सतां प्रसादे सुखमिति दर्शयति—**य इति** । सद्भिः=सज्जनैः, अभ्यर्चितः= पूजितः सत्कृत इति यावत्, असज्जमानः=आसक्तिरहितः अभिमानशून्य इति यावत् , यः= यः पुरुषः, शक्तिं=सामर्थ्यम् , अहापयित्वा=अत्याजयित्वा अनतिक्रम्येत्यर्थः, अर्थं=प्रयोजनं धनं च 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'त्यमरः, करोति=सम्पादयति, यशः=कीर्तिः 'यशः कीर्तिः समज्ञाचे' त्यमरः, तं=पूर्वोक्तगुणयुक्तं, सन्तं=सत्पुरुषं, क्षिप्रं=द्रुतं 'लघु क्षिप्रमरं द्रुत'मित्यमरः, समुपैति=प्राप्नोति, हि=तथाहि, सन्तः=सत्पुरुषाः, प्रसन्नाः=सन्तुष्टाः, चेत् ,तर्हि, सुखाय सुखं दातुमुत्पादयितुं च,अलं=समर्थाः 'अलं भूषणपर्याप्तिशक्तिवारणवाचक'मित्यमरः, सन्तीति शेषः।

**भावार्थः**—सन्मान्यो यथाशक्ति सम्पादयन्नर्थं यशस्वी भवति, सन्तश्च प्रसन्नाः सन्तः सुखं प्रयच्छन्तीति ॥

**भाषा**—सज्जनों द्वारा जित तथा अभिमानरहित होकर जो सज्जन पुरुष अपने सामर्थ्य के अनुसार कार्य करता है उसे शीघ्र यश प्राप्त होता है, क्योंकि प्रसन्न होने पर सज्जन सुख देने मे समर्थ होते हैं ॥ १ ॥

**महान्तमप्यर्थमधर्मयुक्तं यः सन्त्यजत्यनपाकृष्ट एव ।**
**सुखं सुदुःखान्यवमुच्य शेते जीर्णां त्वचं सर्प इवावमुच्य ॥ २ ॥**

**अन्वयः**—यः अनपाकृष्टः एव अधर्मयुक्तं महान्तम् अपि अर्थं सन्त्यजति, ( सः ) जीर्णां त्वचम् अवमुच्य सर्पः इव सुदुःखानि अवमुच्य सुखं शेते ।

**अर्थः—महान्तमिति** । यः=यः पुरुषः, अनपाकृष्टः एव=अनपहृतचित्त एव सन् , अधर्मयुक्तम्=अन्यायोपार्जितं, महान्तम् अपि=बहुलमपि, अर्थं=धनं, सन्त्यजति=जहाति, सः, जीर्णां=पुरातनीं, त्वचं=चर्म कञ्चुकमिति यावत् , अवमुच्य=मुक्त्वा, सर्पः इव=भुजङ्गम इव 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गम' इत्यमरः, सुदुःखानि=अतिकष्टानि, अवमुच्य=त्यक्त्वा, सुखं=सुखेन क्रियाविशेषणमेतत् , शेते=स्वपिति, सुखपूर्वकं तिष्ठतीत्यर्थः ।

**भावार्थः**—अन्यायार्जितं धनं लोभविरहेण त्यजन् नरः सुखमाप्नोतीति ॥

**भाषा**—अधर्म ( अन्याय ) से कमाए हुए बहुत बड़े धन को पाकर भी जो उसे छोड़ देता है तथा उससे आकृष्ट नहीं होता वह पुरुष, पुरानी केंचुल को जैसे साँप छोड़ देता है उसीप्रकार, भारी दुःखों को छोड़ कर सुखपूर्वक सोता अर्थात् रहता है ॥ २ ॥

**अनृते च समुत्कर्षो राजगामि च पैशुनम् ।**
**गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ३ ॥**

**अन्वयः**—अनृते समुत्कर्षः, राजगामि पैशुनं, गुरोः अलीकनिर्बन्धः च ब्रह्महत्यया समानि।

**अर्थः—अनृत इति** । अनृते = असत्यव्यापारे, समुत्कर्षः = उन्नतिः, राजगामि राजानं गच्छतीति राजगामि=राज्ञा सहेत्यर्थः, पैशुनं = खलता, भावार्थेऽण्प्रत्ययः, 'पिशुनो दुर्जनः खल' इत्यमरः, गुरोः=पित्रादेः, पुर इति शेषः, अलीकनिर्बन्धः अलीकः=असत्यश्चासौ निर्बन्धः= आग्रहश्च—एतानि, ब्रह्महत्यया = ब्राह्मणवधेन महापातकेन 'ब्रह्महत्या सुरापानमि'त्याद्युक्तेन, समानि = तुल्यानि, सन्ति ।

**भावार्थः**—असत्यव्यवहारेणोन्नती, राज्ञा समं दुर्जनता, गुरूणां पुरस्तान्मिथ्याग्रहश्चेत्ये- तानि ब्रह्महत्यासदृशानि बोद्धव्यानि ।

**भाषा**—असत्य में बढ़ती, राजा तक पहुँची हुई चुगलखोरी, तथा गुरु से झूठा आग्रह से दुष्टता ये ब्रह्महत्या के समान हैं ॥ ३ ॥

**असूयैकपदं मृत्युरतिवादः श्रियो वधः ।**
**अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः ॥ ४ ॥**

**अन्वयः**—असूया एकपदं मृत्युः, अतिवादः श्रियः वधः, अशुश्रूषा त्वरा श्लाघा-( एते ) त्रयः विद्यायाः शत्रवः ( सन्ति ) ।

**अर्थः—असूयेति** । असूया = गुणेष्वपि दोषारोपः 'अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपी'त्यमरः, एकपदं = सर्वात्मना, मृत्युः = आत्मवधः, अतिवादः = पारुष्यं 'पारुष्य- मतिवादः स्या'दित्यमरः, श्रियः = सम्पत्तेः, वधः=नाशः, अशुश्रूषा=गुरुसेवाऽकरणं, त्वरा= सम्भ्रमः क्षिप्रकारितेत्यर्थः 'सम्भ्रमस्त्वरे'त्यमरः, श्लाघा=आत्मप्रशंसा, एते त्रयः, विद्यायाः= ज्ञानस्य अध्ययनस्य च, शत्रवः = रिपवः प्रतिबन्धका इत्यर्थः ।

**भावार्थः**—असूयया सर्वथात्मनाशः, पारुष्येण श्रीविनाशः, अशुश्रूषात्वराश्लाघाभिश्च विद्यानाशो भवति ॥

**भाषा**—गुणों में दोष ढूंढ़ना तो एकदम मृत्यु ( के समान ) है और कड़ा बोलना लक्ष्मी के घात ( के समान ) है। गुरु की सेवा न करना, जल्दबाजी तथा अपनी प्रशंसा, ये तीन विद्या के शत्रु हैं ॥ ४ ॥

**आलस्यं मदमोहौ च चापलं गोष्ठिरेव च ।**
**स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च ।**
**एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ॥ ५ ॥**

**अन्वयः**—आलस्यं मदमोहौ चापलं गोष्ठिः एव स्तब्धता च अभिमानित्वं तथा अत्या- गित्वम् एव—एते सप्त सदा विद्यार्थिनां दोषाः मताः स्युः ।

**अर्थः**—विद्यार्थिदोषान् गणयन्नाह—**आलस्यमिति** । आलस्यम्=अलसता, मदमोहौ मदश्च=बुद्धेर्मान्द्यञ्च मोहश्च=चित्तभ्रमश्चेति तौ, चापलं=चाञ्चल्यं, गोष्ठिः एव=परिषदपि 'समज्या परिषद्गोष्ठी'त्यमरः, लोकसमुदायमेकीकृत्य वृथालापादीत्यर्थः, स्तब्धता = औद्धत्यम् , अभि-

मानित्वं=गर्विता अभिमान इति यावत्, तथा=तेनैव प्रकारेण, अत्यागित्वम् एव त्यागः=दान-मस्यास्तीति त्यागी=दानी तस्य भावः=धर्मः त्यागित्वं=दानिता न त्यागित्वम् अत्यागित्वं=लुब्धतापि-एते=पूर्वोक्ताः, सप्त=सप्तसङ्ख्याकाः, मदमोहयोरेकत्वेन सप्तत्वमत्र बोध्यम्, सदा=सर्वदा, विद्यार्थिनां=छात्राणां, दोषाः=अवगुणाः, मताः स्युः=सम्मताः भवेयुः, सर्वैरेव बुधैः स्वीकृताः सन्तीति ।

**भावार्थः**—आलस्यादयः सप्त विद्यार्थिनां विद्योन्नतिबाधका दोषाः सन्तीति ॥

**भाषा**—आलस्य, मद-मोह ( बुद्धि की मन्दता तथा कर्तव्याकर्तव्य का अज्ञान ), चपलता, बैठकबाजी, औद्धत्य ( उजड्डपन ), गर्व तथा लोभ-ये सात सदा विद्यार्थियों के दोष समझे गये हैं ॥ ५ ॥

**सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ।**
**सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम् ॥ ६ ॥**

**अन्वयः**—सुखार्थिनः विद्या कुतः ? विद्यार्थिनः सुखं न अस्ति । सुखार्थी विद्यां त्यजेत् वा विद्यार्थी सुखं त्यजेत् ।

**अर्थः—सुखार्थिन इति** । सुखार्थिनः=सुखाभिलाषुकस्य, विद्या, कुतः=कथम्, नैव भवतीत्यर्थः, विद्यार्थिनः=विद्याकामस्य, सुखं=शर्म 'शर्मशातसुखानि चे'त्यमरः, न अस्ति=न विद्यते, अतः, सुखार्थी=सुखाभिलाषी, विद्यां, त्यजेत्=मुञ्चेत्, वा=अथवा, विद्यार्थी=विद्यार्जनकामः, सुखं, त्यजेत्=परिहरेत् ।

**भावार्थः**—सुखार्थी न विद्याया अधिकारी, नापि विद्यार्थी सुखाधिकारीति तौ विद्यासुखे त्यजताम् ॥

**भाषा**—आराम चाहनेवाले को विद्या कहाँ से मिल सकती है विद्या चाहनेवाले को आराम नहीं मिल सकता, तो आराम चाहनेवाला विद्या को छोड़ दे अथवा ( तथा ) विद्या चाहनेवाला आराम को छोड़ दे ॥ ६ ॥

**नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।**
**नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ७ ॥**

**अन्वयः**—अग्निः काष्ठानां न तृप्यति, महोदधिः आपगानां न, अन्तकः सर्वभूतानां न, वामलोचना पुंसां न ।

**अर्थः—नाऽग्निरिति** । अग्निः=वह्निः 'अग्निर्वैश्वानरो वह्नि'रिति कोषः, काष्ठानां=दारूणां 'काष्ठं दार्वि'त्यमरः, करणत्वाविवक्षया सम्बन्धसामान्ये षष्ठी, एवमेवोत्तरत्रापि, काष्ठैरित्यर्थः, न तृप्यति=तृप्तिं नाप्नोति, महोदधिः महान्=विशालश्चासौ उदधिः=सिन्धुश्च 'उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णव' इत्यमरः, आपगानां=नदीनाम् ताभिरिति यावत्, 'अथ नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी । स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा' इत्यमरः, न=न तृप्यति, अन्तकः=कालः यम इति यावत्, 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तक' इति कोषः, सर्वभूतानां=सर्वप्राणिनां, सर्वप्राणिभिरिति यावत्, न=न तृप्यति, वाम-

लोचना=कामिनी 'कामिनी वामलोचने'त्यमरः, पुंसां=पुरुषाणां पुरुषैरिति यावत्, न=न तृप्यन्ति।

**भावार्थः**—अग्निसिन्धुयमस्त्रियः काष्ठनदीसर्वभूतपुरुषैस्तृप्ता न भवन्ति, प्रत्युत वर्धन्त एव॥

**भाषा**—काठ से आग, नदियों से महासमुद्र, सभी प्राणियों से मृत्यु तथा पुरुषों से (सुन्दर-नेत्रवाली) स्त्रियां (कभी) तृप्त नहीं होतीं ॥ ७ ॥

**आशा धृतिं हन्ति समृद्धिमन्तकः क्रोधः श्रियं हन्ति यशः कदर्यता ।**
**अपालनं हन्ति पशूंश्च राजन्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ८ ॥**

**अन्वयः**—हे राजन् ! आशा धृतिं हन्ति, अन्तकः समृद्धिं हन्ति, क्रोधः श्रियं हन्ति, कदर्यता यशः हन्ति, अपालनं च पशून् हन्ति, क्रुद्धः एकः ब्राह्मणः राष्ट्रं हन्ति ।

**अर्थः—आशेति** । हे राजन्!=हे नृप ! आशा=विशाला तृष्णा 'आशा तृष्णापि चायते'-त्यमरः, धृतिं=धैर्यं 'धृतिर्धारणधैर्ययो'रित्यमरः, हन्ति=नाशयति, अन्तकः=यमः, समृद्धिम्=ऋद्धेराधिक्यं, हन्ति=नाशयति, क्रोधः=कोपः 'कोपः क्रोधामर्षरोषप्रतिघा' इत्यमरः, श्रियं=सम्पदं, हन्ति=नाशयति, कदर्यता=कृपणता 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचा' इत्यमरः, यशः=कीर्तिं, हन्ति=नाशयति, अपालनं च=अरक्षणं च, पशून्=मृगान्, हन्ति=नाशयति, क्रुद्धः=कुपितः, एकः=एकाकी एव 'एकाकी त्वेक एककः' इत्यमरः, ब्राह्मणः=विप्रः, राष्ट्रं=राज्यं, हन्ति=नाशयति ।

**भावार्थः**—आशान्तकक्रोधकृपणताऽपालनानि धृतिसमृद्धिश्रीयशःपशून् यथा घ्नन्ति तथैव कुपित एको ब्राह्मणो राज्यं विनाशयतीति ॥

**भाषा**—हे राजन् ! आशा धैर्य को, मृत्यु समृद्धि (ऐश्वर्य) को, क्रोध लक्ष्मी को, कृपणता यश को, पालन न करना पशुओं को तथा अकेला कुपित ब्राह्मण सारे राष्ट्र को बरबाद कर देता है ॥ ८ ॥

**अजाश्च कांस्यं रजतं च नित्यं मध्वाकर्षः शकुनिः श्रोत्रियश्च ।**
**वृद्धो ज्ञातिरवसन्नः कुलीन एतानि ते सन्तु गृहे सदैव ॥ ९ ॥**

**अन्वयः**—अजाः च कांस्यं रजतं च मधु आकर्षः शकुनिः श्रोत्रियः च वृद्धः ज्ञातिः अवसन्नः कुलीनः-एतानि नित्यं सदा एव ते गृहे सन्तु ।

**अर्थः—अजा इति** । अजाः=छगलकाः छाग्यश्च 'अजा छागी शुभच्छागवस्तच्छगलका अजे' इत्यमरः, कांस्यं=धातुविशेषः, तन्निर्मितं पात्रमिति यावत्, रजतं=रूप्यं 'दुर्वर्णं रजतं रूप्य'मित्यमरः, मधु=क्षौद्रं 'मधु क्षौद्रं माक्षिकादी'त्यमरः, आकर्षः=विषादीनाम् आकर्षणम्, शकुनिः=पक्षी 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा' इत्यमरः, श्रोत्रियः=छान्दसः वेदाध्यायीति यावत्, 'श्रोत्रियच्छान्दसौ समा'विति कोषः, 'श्रोत्रियंश्छन्दोऽधीते' इति निपातनाच्छ्रोत्रियशब्दः साधुः, वृद्धः=स्थविरः, ज्ञातिः=बान्धवः, अवसन्नः=दुःखं प्राप्तः दीनः, कुलीनः=सत्कुलोत्पन्नः-एतानि=पूर्वोक्तानि, नित्यम्=अनवरतं, सदा एव=सर्वदैव, ते=तव, गृहे=गेहे, सन्तु=वर्तन्ताम् ।

**भावार्थः**—हे राजन् ! अजादयः पदार्थाः सर्वकालं त्वद्गृहे वसन्तु, यतस्तैः समये कार्यसिद्धिर्भवति ॥

भाषा—बकरे, काँसे के बर्तन, चाँदी, शहद (विषआदि का) आकर्षण, चिड़िया, वेदपाठी, वृद्ध बान्धव तथा विपत्ति में पड़ा हुआ ऊँचे कुल का आदमी, ये सदा आपके (गृहस्थ के) घर में रहें॥ ९॥

**अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी।**
**विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना॥१०॥**
**गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत्।**
**देवब्राह्मणपूजार्थमतिथीनां च भारत!॥ ११॥**

**अन्वयः**—हे भारत! अजा उक्षा चन्दनं वीणा आदर्शः मधुसर्पिषी विषम् औदुम्बरं शङ्खः स्वर्णनाभः अथ रोचना (एतानि) धन्यानि (वस्तूनि) अतिथीनां देवब्राह्मणपूजार्थं च गृहे स्थापयितव्यानि (इति) मनुः अब्रवीत्।

**अर्थः**—गृहे स्थापयितव्यान् पदार्थान् युग्मेनाह-**अजोक्षेति, गृह इति च**। हे भारत!=हे भरतकुलोत्पन्न राजन्! अजा=छागी, उक्षा=बलीवर्दः 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृष' इत्यमरः, अथवा अजोक्षेत्येकं पदम्, अजेन सहित-उक्षा इति अजोक्षा=छागसहितो वृषभ इति यावत्, चन्दनं=मलयजः 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रिया'मित्यमरः, वीणा=वल्लकी 'वीणा तु वल्लकी'त्यमरः, आदर्शः=दर्पणः 'दर्पणे मुकुरादर्शौ' इत्यमरः, मधुसर्पिषी मधु च=क्षौद्रं च सर्पिश्च=घृतं च ते, 'घृतमाज्यं हविः सर्पि'रिति कोषः, विषं=लोहम्, औदुम्बरं=ताम्रमयं पात्रम् 'उदुम्बरं स्मृतं ताम्र'मिति विश्वः, शङ्खः=दक्षिणावर्तः कम्बुः 'शङ्खः स्यात्कम्बुरस्त्रिया'मित्यमरः, स्वर्णनाभः=शालग्रामः, अथ=अपि च, रोचना=गोरोचना, एतानि, धन्यानि=प्रशस्तानि वस्तूनि, अतिथीनाम्=अभ्यागतानाम् 'अतिथिर्ना गृहागते' इत्यमरः, देवब्राह्मणपूजार्थं देवाः=अमराः, ब्राह्मणाः=विप्राश्च तेषां पूजार्थं=सपर्यार्थं च देवब्राह्मणातिथीनां पूजार्थमित्यर्थः, अत्र 'पूजार्थ'शब्दः समासेन गुणीभूतो नान्वेति 'अतिथीना'मित्यनेन, परं प्रसङ्गानुरोधात्तत्राप्यन्वयः सुतरामावश्यकः, अथवा 'अतिथीना'मिति तादर्थ्ये षष्ठी कल्पनीया। गृहे=वेश्मनि, स्थापयितव्यानि=निधेयानि-इति मनुः=तन्नामा प्रसिद्धः, स्मृतिकारः, अब्रवीत्=उक्तवान् स्वग्रन्थे प्रत्यपादयत्।

**भावार्थः**—देवब्राह्मणातिथिपूजार्थमजादिवस्तुजातं गृहेऽवश्यं सङ्ग्राह्यमिति॥

**भाषा**—हे भरतवंशी राजा! देवता, ब्राह्मण तथा अतिथियों की पूजा के लिए बकरे, बैल, चन्दन, वीणा, दर्पण, मधु, घी, लोहा ताँबे का बर्तन, शङ्ख, शालग्राम, तथा गोरोचन–इन माङ्गलिक द्रव्यों को घर में रखना चाहिए। ऐसा मनु जी ने कहा है॥ १०–११॥

**इदं च त्वां सर्वपरं ब्रवीमि पुण्यं पदं तात! महाविशिष्टम्।**
**न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः॥१२॥**

**अन्वयः**—हे तात! जीवितस्य अपि हेतोः जातु न कामात् न भयात् न लोभात् धर्मं जह्यात्–इदं च सर्वपरं महाविशिष्टं पुण्यं पदं त्वां ब्रवीमि।

**अर्थः**—**इदमिति**। हे तात=हे राजन्! धृतराष्ट्रं प्रति विदुरस्योक्तिरियम्, जीवितस्य

अपि = जीवनस्यापि, हेतोः = कारणात्, जातु = कदाचित्, न कामात्=नाभिलाषात् 'कामोऽभिलाषस्तर्षश्चे'त्यमरः, न भयात्=न भीतेः, न लोभात्=न गार्ध्यात् सन्तोषाभावादित्यर्थः, धर्मं=श्रुत्युक्तमाचारं, जह्यात्=त्यजेत्–इदञ्च=एतत् किल, सर्वपरं=सर्वेभ्योऽधिकं, महाविशिष्टम् = उत्सवसमं माङ्गलिकम्, अथवा अत्यसाधारणं, पुण्यं = पुण्यकारकं, पदं=वस्तु, 'पदं=व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः, त्वां=त्वा, ब्रवीमि=कथयामि ।

**भावार्थः**—परमं रहस्यमिदमेव यत् कामादिवशाज्जीवनार्थमपि धर्मत्यागो न युक्त इति ॥

**भाषा**—हे तात ! काम ( इच्छा ), भय अथवा लोभ के वश तथा जान बचाने के लिए भी धर्म को कभी नहीं छोड़ना चाहिए । यही एक अत्यन्त श्रेष्ठ सबसे परे पवित्र पद (धर्ममार्ग) है–यह मैं आप से कहता हूँ ॥ १२ ॥

**नित्यो धर्मः सुखदुःखे त्वनित्ये जीवा नित्यो हेतुरस्य त्वनित्यः ।**
**त्यक्त्वाऽनित्यं प्रति तिष्ठस्व नित्यं सन्तुष्य त्वं तोषपरा हि लाभः ॥१३॥**

**अन्वयः**—धर्मः नित्यः; सुखदुःखे तु अनित्ये, जीवः नित्यः, अस्य हेतुः तु अनित्यः, त्वम् अनित्यं त्यक्त्वा नित्यं प्रति तिष्ठस्व, सन्तुष्य, हि तोषपरः लाभः ।

**अर्थः**—नित्योपासना विधेयेति दर्शयति—**नित्य इति** । धर्मः, नित्यः=सर्वदा वर्तमानः, सुखदुःखे = आनन्दक्लेशौ तु, अनित्ये = नश्वरे, क्षणिके इति यावत्, जीवः=आत्मा, नित्यः, अस्य=जीवात्मनः, हेतुः = कारणमविद्या तु, अनित्यः, अतः, त्वं=भवान्, अनित्यं = नश्वरं सुखदुःखादिकं, त्यक्त्वा=विमुच्य, नित्यं=शाश्वतं, धर्मादिकं प्रति, तिष्ठस्व=वर्तस्व, आत्मनेपदमार्षम्, सन्तुष्य = सन्तोषं धारय, हि = यस्मात्, तोषपरः तोषः = सन्तोषः एव परः=श्रेष्ठः, लाभः=प्राप्तिः ।

**भावार्थः**—धर्मसुखदुःखादिषु नित्यानित्येषु पदार्थेषु नित्यवस्तूपासना विधेया, तेन सन्तोषरूपो लाभः स्यात् ॥

**भाषा**—धर्म नित्य ( सदा रहनेवाला ) है पर सुख और दुःख अनित्य ( क्षणिक ) हैं ( इसी प्रकार ) जीव नित्य है पर इसका हेतु ( कारण–अविद्या में लानेवाला कर्म ) अनित्य है । आप अनित्य को छोड़ कर नित्य का आश्रय लीजिए और सन्तोष कीजिए क्योंकि सन्तोष ही मुख्य लाभ है ॥ १३ ॥

**महाबलान् पश्य महानुभावान् प्रशास्य भूमिं धनधान्यपूर्णाम् ।**
**राज्यानि हित्वा विपुलांश्च भोगान् गतान्नरेन्द्रान् वशमन्तकस्य ॥१४॥**

**अन्वयः**—धनधान्यपूर्णां भूमिं प्रशास्य राज्यानि विपुलान् भोगान् च हित्वा अन्तकस्य वशं गतान् महाबलान् महानुभावान् नरेन्द्रान् पश्य ।

**अर्थः**—अनित्यसेविनां परिणामं दर्शयति–**महाबलानिति** । धनधान्यपूर्णां धनं=द्रव्यं च धान्यं = व्रीहियवादि 'धान्यं व्रीहिः स्तम्बकरि'रित्यमरः, धनधान्ये धनधान्याभ्यां पूर्णां = परिपूर्णां तां, भूमिं = भुवं, प्रशास्य = शासित्वा, राज्यानि = राष्ट्राणि, विपुलान्=अनेकान्, भोगान् = सुखानि च 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो'रित्यमरः, हित्वा = विमुच्य,

अन्तकस्य=यमस्य, वशम्=अधीनतां, गतान्=प्राप्तान् मृतानिति यावत्, महाबलान्=बल-विशेषशालिनः, महानुभावान्=महाप्रभावान्, नरेन्द्रान्=राज्ञः, पश्य=अवलोकय।

**भावार्थः**—तेजस्विनो बलिनोऽपि राजानः समृद्धिमतीं भूमिं राज्यं भोगांश्चोपभुञ्जाना अन्तकस्य वशं गता एवेति॥

**भाषा**—धन-धान्य से भरी हुई पृथ्वी का शासन करके राज्य तथा विपुल भोग सामग्री को छोड़कर मृत्यु के वश में भये हुए महाबलशाली तथा महाप्रभावशाली राजाओं को देखिए॥ १४॥

**मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन्! स्वगृहान्निर्हरन्ति।**
**तं मुक्तकेशाः करुणं रुदन्ति चितामध्ये काष्ठमिव क्षिपन्ति॥ १५॥**

**अन्वयः**—हे राजन्! मनुष्याः दुःखपुष्टं मृतं पुत्रम् उत्क्षिप्य स्वगृहात् निर्हरन्ति, मुक्तकेशाः (सन्तः) तं करुणं रुदन्ति, चितामध्ये काष्ठम् इव क्षिपन्ति।

**अर्थः—मृतमिति।** हे राजन्=हे भूप! मनुष्याः=जनाः, दुःखपुष्टं दुःखेन=कष्टेन पुष्टं=वर्धितं पालितं पोषितं चेत्यर्थः, तथापि मृतं=प्राप्तमृत्युं, पुत्रं=सुतम्, उत्क्षिप्य=उत्थाप्य, स्वगृहात्=आत्मनो गेहात्, निर्हरन्ति=श्मशानं नयन्ति, अपि च मुक्तकेशाः मुक्ताः=त्यक्ताः केशाः=कचाः यैस्ते एवंभूताः सन्तः, 'कचः केशः शिरोरुहः' इत्यमरः तं=मृतपुत्रम्, उद्दिश्येति शेषः, करुणं=दीनं यथा स्यात्तथा, रुदन्ति=रोदनं कुर्वन्ति, अथ च, चितामध्ये=चितिमध्ये 'चिता चित्या चितिः स्त्रिया'मित्यमरः, काष्ठम् इव=दारुवत्, क्षिपन्ति=त्यजन्ति।

**भावार्थः**—कष्टेन पालितोऽपि पुत्रो मृत्युमुपेतो न गृहे स्थाप्यते जनैन,अपितु गृहान्निःसार्य श्मशानं नीत्वा चितायां प्रक्षिप्य च केवलं रुद्यत इति॥

**भाषा**—कष्ट से पाले गये मरे हुए पुत्र को उठाकर मनुष्य घर के बाहर ले जाते हैं, उसके लिए बाल खोलकर करुणा के साथ रोते हैं और उसे काठ की तरह चिता में फेंक देते हैं॥१५॥

**अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून्।**
**द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः॥ १६॥**

**अन्वयः**—अन्यः प्रेतगतस्य धनं भुङ्क्ते, वयांसि अग्निः च शरीरधातून् भुञ्जते, अयं पुण्येन पापेन च वेष्ट्यमानः द्वाभ्यां सह अमुत्र गच्छति।

**अर्थः—अन्य इति।** अन्यः=इतरः, प्रेतगस्य=मृतस्य, धनं=द्रव्यं, भुङ्क्ते=उपभुङ्क्ते, वयांसि=पक्षिणः 'खगबाल्यादिनोर्वय' इत्यमरः, अग्निः=वैश्वानरश्च, प्रेतगतस्य, शरीरधातून् शरीरं=देहं च धातवश्च=श्लेष्मादिरसांश्च 'श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातव' इत्यमरः, तान्, भुञ्जते, अयं=मृतः पुमान्, पुण्येन=सुकृतेन, पापेन=दुष्कृतेन च, वेष्ट्यमानः=वृतः, द्वाभ्यां=पुण्यपापाभ्यां, सह=सार्धम्, अमुत्र=परलोके, गच्छति=याति।

**भावार्थः**—मृतस्य पुंसो धनं तद्भिन्न एव कश्चिदादत्ते, पक्षिणः शरीरं वह्निर्धातूंश्चात्मसात्कुर्वन्ति। मृतस्तु केवलं पुण्यपापाभ्यां सह परलोकं प्रयाति॥

भाषा—मरे हुए पुरुष के धन को दूसरे लोग भोगते हैं और उसके शरीर तथा धातुओं ( मांस-मज्जा आदि ) को चिड़ियां तथा आग खाती हैं। पुण्य और पाप से घिरा हुआ इन्हीं ( पुण्य और पाप ) के साथ वह परलोक जाता है ॥ १६ ॥

**उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ।**
**अपुष्पानफलान् वृक्षान् यथा तात ! पतत्रिणः ॥ १७ ॥**

**अन्वयः**—हे तात ! ज्ञातयः सुहृदः सुताः पतत्रिणः अपुष्पान् अफलान् वृक्षान् यथा उत्सृज्य विनिवर्तन्ते ।

**अर्थः**—उत्सृज्येति । हे तात !=हे राजन् ! ज्ञातयः=बन्धवः, सुहृदः=सखायः, सुताः= पुत्राः, पतत्रिणः=पक्षिणः 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः' इत्यमरः, अपुष्पान्=पुष्परहितान्, अफलान्=फलरहितान्, वृक्षान् यथा=शाखिन इव 'वृक्षो महीरुहः शाखी विटपी पादपस्तरु'रित्यमरः, उत्सृज्य=त्यक्त्वा, मृतमिति शेषः, विनिवर्तन्ते=प्रत्यागच्छन्ति ।

**भावार्थः**—पुत्रमित्रबन्धवो मृतं परित्यज्य गृहं प्रत्यावर्तन्ते ॥

**भाषा**—हे तात ! ( मरे हुए मनुष्य को ) छोड़ कर बान्धव, मित्र तथा पुत्र इस भाँति लौट आते हैं जैसे बिना फूल और फलवाले पेड़ों को छोड़ कर चिड़ियां लौट जाती हैं ॥१७॥

**अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयङ्कृतम् ।**
**तस्मात्तु पुरुषो यत्नाद्धर्मं सञ्चिनुयाच्छनैः ॥ १८ ॥**

**अन्वयः**—स्वयङ्कृतं कर्म तु अग्नौ प्रास्तं पुरुषम् अन्वेति, तस्मात् पुरुषः तु यत्नात् शनैः धर्मं सञ्चिनुयात् ।

**अर्थः**—अग्नाविति । स्वयङ्कृतम्=आत्मना विहितं, कर्म=सदसदाचरणं तु, अग्नौ= वह्नौ, प्रास्तं=निक्षिप्तं, पुरुषं=नरम्, अन्वेति=अनुयाति, तस्मात्=ततो हेतोः, पुरुषस्तु= जनस्तु, यत्नात्=प्रयासात्, शनैः=मन्दं मन्दं, धर्मं=सत्कर्म, सञ्चिनुयात्=सङ्गृह्णीयात् ।

**भावार्थः**—यतो हि कर्मैव मृतं पुमांसमन्वेति, ततोऽत्र सत्कर्माऽनुष्ठेयं जनेनेति ॥

**भाषा**—आग में फेंके गये ( चिता पर रखे गये ) पुरुष के साथ उसका किया हुआ कर्म ही जाता है, इसलिए पुरुष को धीरे धीरे यत्नपूर्वक धर्म का सङ्ग्रह करना चाहिए ॥ १८ ॥

**अस्माल्लोकादूर्ध्वममुष्य चाधो महत्तमस्तिष्ठति ह्यन्धकारम् ।**
**तद्वै महामोहनमिन्द्रियाणां बुध्यस्व मा त्वां प्रलभेत राजन् ! ॥१९॥**

**अन्वयः**—हे राजन् ! अस्मात् लोकात् ऊर्ध्वम् मनुष्य अधः च अन्धकारं महत्तमः तिष्ठति, हि ( त्वं ) तत् इन्द्रियाणां महामोहनं बुध्यस्व, त्वां मा प्रलभेत ।

**अर्थः**—अस्मादिति । हे राजन् !=हे नरेन्द्र ! अस्मात्=एतस्मात्, लोकात्=भुवनात् मर्त्यलोकादित्यर्थः, 'लोकस्तु भुवने जन' इत्यमरः, ऊर्ध्वम्=उपरिष्टात्, अमुष्य=परलोकादित्यर्थः अधः च=नीचैश्च, अन्धकारम्=अन्धङ्करणं पुरुषानन्धान् कर्तुं समर्थं, महत्तमः=गाढं तिमिरं 'तमिस्रं तिमिरं तम' इत्यमरः, तिष्ठति=वर्तते, हीति निश्चये, त्वं, तत्=अन्धतमसम्,

इन्द्रियाणां=चक्षुः प्रभृतीनां, महामोहनं=बहुमोहकरं, बुध्यस्व=जानीहि, तत्, त्वां=त्वा, मा प्रलभेत=नाऽवाप्नुयात्। तदावृतो मा भूद्भवानित्यर्थः।

**भावार्थः**—मर्त्यलोकादूर्ध्वं परलोकादधश्च वर्तमानमन्धतमसं न त्वामावृणोत्विति॥

**भाषा**—हे राजन्! इस लोक से ऊपर और स्वर्गलोक से नीचे निबिड़ घना अन्धकार है (अन्धतामिस्र नामक नरक है) उसे इन्द्रियों को विकल कर देनेवाला समझिए, वह कहीं आपको न छू ले॥ १९॥

**इदं वचः शक्ष्यसि चेद्यथावन्निशम्य सर्वं प्रतिपत्तुमेव।**
**यशः परं पश्यसि जीवलोकं भयं न चामुत्र न चेह तेऽस्ति॥ २०॥**

**अन्वयः**—इदं वचः यथावत् निशम्य सर्वम् एव प्रतिपत्तुं, शक्ष्यसि चेत् (तर्हि) जीवलोके परं यशः प्राप्स्यसि। इह ते भयं न अस्ति, अमुत्र च न।

**अर्थः—इदमिति।** इदं=मदुक्तं, वचः=वाक्यं, यथावत्=पूर्णरूपेण, निशम्य=आकर्ण्य, सर्वं=सकलमेव पूर्वरूपेणेति यावत्, प्रतिपत्तुं=कर्तव्यबुद्ध्याऽवधारयितुं, शक्ष्यसि चेत्=समर्थो भविष्यसि यदि, तर्हि, जीवलोके=मनुष्यलोके, परं=श्रेष्ठं, यशः=कीर्तिं, प्राप्स्यसि=लप्स्यसे। इह=अस्मिन् जगति, ते=तव, भयं=साध्वसं, न अस्ति=न वर्तते, अमुत्र च=परलोकेऽपि च, न=नास्ति।

**भावार्थः**—एतद्वाक्यश्रवणोत्तरं कर्तव्यं सम्पादयिष्यति चेत्तर्हि यशोलाभं निर्भयतां च लप्स्यते भवानिति॥

**भाषा**—मेरे वचन को भलीभाँति सुनकर यदि आप इसको पूर्णरूप से समझ पावेंगे तो इस जीवलोक में परम यश के भागी होंगे और आपको इस लोक तथा परलोक में (कहीं) भय न होगा॥ २०॥

**आत्मा नदी भारत! पुण्यतीर्था सत्योदका धृतिकूला दयोर्मिः।**
**तस्यां स्नातः पूयते पुण्यकर्मा पुण्यो ह्यात्मा नित्यमलोभ एव॥२१॥**

**अन्वयः**—हे भारत! पुण्यतीर्था सत्योदका धृतिकूला दयोर्मिः आत्मानदी (अस्ति), पुण्यकर्मा तस्यां स्नातः पूयते, हि नित्यम् अलोभः एव पुण्यः आत्मा।

**अर्थः—आत्मेति।** हे भारत!=हे भरतवंशीय नृप! पुण्यं=धर्ममेव 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी' इत्यमरः, तीर्थं=जलावतरणमार्गो यस्याः सा, सत्योदका सत्यं=तथ्यम् उदकं=जलं यस्यास्तादृशी, धृतिः=धैर्यमेव 'धृतिर्धारणधैर्ययो'रित्यमरः, कूलं=तीरं 'कूलं रोधश्च तीरं च प्रतीरञ्च तटं त्रिषु' इति कोषः, यस्यास्तथाविधा, दया=कृपैव ऊर्मिः=तरङ्गः यस्यां सा 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि'रित्यमरः, एवम्भूता, आत्मा, नदी=सरित् 'अथ नदी सरित्' इति कोषः, अस्ति, पुण्यकर्मा=पुण्यकर्मकरणशीलः, तस्याम्=आत्मनद्यां, स्नातः=कृतावगाहनः सन् पूयते=पवित्रो भवति, हि=यतः, नित्यं=सर्वदा, अलोभः एव=लोभविरह एव, पुण्यः=पूतः आत्मा=अन्तःकरणमस्ति।

**भावार्थः**—सम्पादितात्मज्ञानः पुरुषो निर्लोभः सन् परमपूतो भवतीति॥

**भाषा**—हे भरतवंशी ! आत्मा नदी है जिसमें पुण्य का घाट बना है, सत्य जलरूप से वर्तमान है, धैर्य किनारा है तथा दया लहर है। इसमें स्नान करनेवाला धर्मात्मा पुरुष पवित्र हो जाता है, क्योंकि सर्वदा लोभ से रहित होना ही पवित्र आत्मा ( माना गया ) है॥ २१॥

**कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम्।**
**नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर॥ २२॥**

**अन्वयः**—( त्वं ) कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीं धृतिमयीं नावं कृत्वा जन्मदुर्गाणि सन्तर।

**अर्थः—कामक्रोधग्राहवतीमिति**। त्वं, कामक्रोधग्राहवतीं कामः = स्मरः क्रोधः=कोपः तावेव ग्राहौ विद्येते यस्यां तां, पञ्च च तानि इन्द्रियाणि च पञ्चेन्द्रियाणि=श्रोत्रादीन्येव जलं= सलिलं 'सलिलं कमलं जल'मित्यमरः, नदीं=संसारसरितं, धृतिमयीं=धैर्यरूपां, नावं = तरणिं, कृत्वा=विधाय, जन्मदुर्गाणि=जन्मलाभरूपाणि कष्टानि सन्तर=समुत्तर अतिक्राम्येरर्थः।

**भावार्थः**—धैर्येण कामक्रोधादीन् निर्जित्य जन्मबन्धनान्मुक्तो भवान् भवतु॥

**भाषा**—काम-क्रोधरूपी मगर से पूर्ण पञ्चेन्द्रियरूपी जलवाली ( विश्वरूपी ) नदी में धैर्य की नाव पर चढ़कर संसार में उत्पन्न होने की कठिनाइयों से निस्तार पाइये॥ २२॥

**प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम्।**
**कार्याकार्ये पूजयित्वा प्रसाद्य यः सम्पृच्छेन्न स मुह्येत् कदाचित्॥२३॥**

**अन्वयः**—यः प्रज्ञावृद्धं धर्मवृद्धं विद्यावृद्धं वयसा अपि वृद्धं च स्वबन्धुं पूजयित्वा प्रसाद्य कार्याकार्ये सम्पृच्छेत्, सः कदाचित् न मुह्येत्।

**अर्थः—प्रज्ञावृद्धमिति**। यः=पुरुषः प्रज्ञावृद्धं=बुद्ध्या श्रेष्ठं, धर्मवृद्धं=धर्मेण श्रेष्ठं, विद्यावृद्धं=विद्यया श्रेयांसं, वयसा अपि=अवस्थयापि वृद्धं=ज्येष्ठं च, स्वबन्धुं=स्वीयबान्धवं, पूजयित्वा=अभ्यर्च्य, प्रसाद्य=सन्तोष्य, कार्याकार्ये=कर्तव्याकर्तव्ये, सम्पृच्छेत्=सादरं पृच्छेत, सः=पुरुषः, कदाचित्=जातु, न मुह्येत्=मोहं न प्राप्नुयात्।

**भावार्थः**—ज्ञानधर्मविद्यावयोभिर्वृद्धं स्वजनं सादरं कर्तव्यमकर्तव्यं च पृष्ट्वा कार्यं कुर्वन्नरो मोहं नाधिगच्छेदिति॥

**भाषा**—कर्तव्याकर्तव्य के विषय में जो पुरुष बुद्धि, धर्म, विद्या तथा अवस्था में बड़े स्वजन को संमानित तथा प्रसन्न करके उससे राय लेता है वह कभी मोह को नहीं प्राप्त होता॥ २३॥

**धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा।**
**चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा॥ २४॥**

**अन्वयः**—( नरः ) धृत्या शिश्नोदरं, चक्षुषा पाणिपादं, मनसा चक्षुःश्रोत्रे, कर्मणा मनः वाचं च रक्षेत्।

**अर्थः—धृत्येति**। नरः, धृत्या=धैर्येण, कामं बुभुक्षां च जित्वेति यावत्, शिश्नोदरं शिश्नं च उदरं च शिश्नोदरं गुह्याङ्गमुदरं च 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना'मिति प्राण्यङ्गत्वादेकवद्भावः,

चक्षुषा=नेत्रेण दृशेति यावत्, विलोक्येति शेषः, पाणिपादं=करचरणं पूर्ववत्प्राण्यङ्गत्वादेकवद्भावः, मनसा=मानसेन परदारकुशब्देभ्यः, चक्षुःश्रोत्रे=नेत्रकर्णौ, कर्मणा=सत्कार्येण, मनः=चित्तं, वाचं=वाणीं च, रक्षेत्=संरक्षणं कुर्यात्।

**भावार्थः**—धृतिचक्षुर्मनःकर्मभिः शिश्नोदरपाणिपादचक्षुःश्रोत्रमनोवाचां रक्षणं विधेयम्॥

**भाषा**—कामवासना तथा उदर पूर्ति की धैर्य के द्वारा, और हाथ पांव की आँख के द्वारा, आँख और कान की चित्त के द्वारा तथा मन की और वाणी की कर्म के द्वारा रक्षा करे॥२४॥

**नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी।**
**सत्यं ब्रुवन् गुरवे कर्म कुर्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात्॥ २५॥**

**अन्वयः**—नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी सत्यं ब्रुवन् गुरवे कर्म कुर्वन् ब्रह्मलोकात् न च्यवते।

**अर्थः**—ब्राह्मणकर्तव्यमुपदिशति—**नित्योदकीति**। नित्योदकी नित्यं=प्रतिदिनं यथासमयम् उदकं=जलं स्नानसन्ध्याद्यर्थमस्त्यस्येति तथाभूतः, नित्ययज्ञोपवीती नित्यं=यथाकालं सूर्योपरागोपाकर्माशौचान्तादिषु उपवीतं=ब्रह्मसूत्रं यज्ञोपवीतमस्त्यस्येति तादृशः, अथवा स्वोपनयनोत्तरं सर्वकालमविच्छेदेन धृतब्रह्मसूत्रः, नित्यस्वाध्यायी नित्यम्=अनध्यायातिरिक्तदिनेषु स्वाध्यायः=वेदाध्ययनमस्त्यस्येति तथाविधः, पतितान्नवर्जी पतितस्य=पापिनः, अन्नं वर्जयितुं शीलमस्यास्तीति पतितान्नवर्जी, सत्यं=तथ्यं, ब्रुवन्=भाषमाणः, गुरवे=गुरोः कृते, कर्म=कार्यं, कुर्वन्=आचरन्, ब्राह्मणः=ब्रह्मविद्विप्रः, ब्रह्मलोकात्=ब्रह्मणो लोकात्, न च्यवते=च्युतो न भवति न भ्रश्यतीत्यर्थः।

**भावार्थः**—ब्राह्मणः शुचि कर्म स्नानसन्ध्यादिकं कुर्वन् ब्रह्मलोके महीयत इति॥

**भाषा**—नित्य स्नान करनेवाला, नित्य यज्ञोपवीत धारण करनेवाला, नित्य वेदाध्ययन करनेवाला, पतित मनुष्य के अन्न को न खानेवाला, सत्य बोलनेवाला, तथा गुरु का काम करनेवाला ब्राह्मण ब्रह्मलोक से नीचे नहीं गिरता॥ २५॥

**अधीत्य वेदान् परिसंस्तीर्य चाग्नीनिष्ट्वा यज्ञैः पालयित्वा प्रजाश्च।**
**गोब्राह्मणार्थं शस्त्रपूतान्तरात्मा हतः सङ्ग्रामे क्षत्रियः स्वर्गमेति॥२६॥**

**अन्वयः**—वेदान् अधीत्य अग्नीन् परिसंस्तीर्य यज्ञैः इष्ट्वा प्रजाः पालयित्वा च गोब्राह्मणार्थं शस्त्रपूतान्तरात्मा सङ्ग्रामे हतः क्षत्रियः स्वर्गम् एति।

**अर्थः**—क्षत्रियकर्तव्यमुपदिशति—**अधीत्येति**। वेदान्=श्रुतीः 'श्रुतिः स्त्री वेद आम्नाय' इत्यमरः, अधीत्य=पठित्वा, अग्नीन्=दक्षिणाग्निप्रभृतींस्त्रीन् 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नय' इत्यमरः, परिसंस्तीर्य=परिस्तरणं कृत्वा, यज्ञैः=यागैः, इष्ट्वा=यजनं कृत्वा, प्रजाः=जनान् 'प्रजा स्यात् सन्ततौ जन' इत्यमरः, पालयित्वा=रक्षित्वा च, गोब्राह्मणार्थं=गवार्थे ब्राह्मणार्थे च, सङ्ग्रामे=युद्धे, हतः, शस्त्रपूतान्तरात्मा शस्त्रेण=आयुधेन 'आयुधं तु प्रहरणं शस्त्रमस्त्र'मित्यमरः, पूतः=पवित्रः 'पवित्रः प्रयतः पूत' इत्यमरः, अन्तरात्मा=अन्तःकरणं यस्य सः, त्यक्तप्राणः, क्षत्रियः=क्षत्रियजात्युत्पन्नः पुरुषः, स्वर्गं=सुरलोकम्, एति=गच्छति।

**भावार्थः**—वेदाध्ययनादिसत्कर्मकर्ता रणे हतश्च क्षत्रियः स्वर्गं लभत इति ॥

**भाषा**—वेदों का अध्ययन करके, अग्नि के चारों ओर कुश बिछाकर अर्थात् अग्निहोत्र करके, यज्ञों का अनुष्ठान करके, तथा प्रजा का पालन करके गाय और ब्राह्मण के लिए युद्ध में मारा गया शस्त्राघात द्वारा पवित्र-अन्तःकरणवाला क्षत्रिय स्वर्ग में जाता है ॥ २६ ॥

**वैश्योऽधीत्य ब्राह्मणान् क्षत्रियांश्च धनैः काले संविभज्याश्रितांश्च ।**
**त्रेतापूतं धूममाघ्राय पुण्यं प्रेत्य स्वर्गे दिव्यसुखानि भुङ्क्ते ॥ २७ ॥**

**अन्वयः**—वैश्यः अधीत्य काले ब्राह्मणान् क्षत्रियान् आश्रितान् च धनैः संविभज्य त्रेतापूतं पुण्यं धूमम् आघ्राय प्रेत्य स्वर्गे दिव्यसुखानि भुङ्क्ते ।

**अर्थः**—वैश्यकर्तव्यं प्रदर्शयति—**वैश्य इति** । वैश्यः = अर्यः 'ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः' इत्यमरः, अधीत्य = वेदादिकं द्विजत्वात् पठित्वा, काले = योग्यसमये, ब्राह्मणान्=विप्रान्, क्षत्रियान्=राजन्यान् 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः, आश्रितान् च = प्राप्ताश्रयानन्यांश्च, धनैः=द्रव्यैः, संविभज्य=सम्यग् विभागपूर्वं दत्त्वा, त्रेतापूतम्=अग्नित्रयपवित्रम् 'अग्नित्रयमिदं त्रेता' इत्यमरः, अत एव पुण्यं=श्रेयस्करं, धूमं=धूम्रम्, आघ्राय=घ्रात्वा, प्रेत्य=परलोकमुपेत्य, स्वर्गे=नाके, दिव्यसुखानि दिव्यानि=स्वर्गीयाण्यलौकिकानि च तानि सुखानि=शर्माणि, भुङ्क्ते=अनुभवति ।

**भावार्थः**—वैश्योऽपि स्ववर्णोचितं समस्तं कार्यं कुर्वन् स्वर्गे सुखमवाप्नोतीति ॥

**भाषा**—वैश्य वेदाध्ययन करके, ब्राह्मणों, क्षत्रियों तथा आश्रितों को अवसर पड़ने पर यथोचित धन देकर तथा त्रेताग्नि ( दाक्षिणाग्नि, गार्हपत्य तथा आह्वनीय ) द्वारा पवित्र किये गये धूएँ की महक लेकर मरने के बाद स्वर्ग में अलौकिक सुखों का उपभोग करता है॥२७॥

**ब्रह्मक्षत्रं वैश्यवर्णं च शूद्रः क्रमेणैतान्न्यायतः पूजयानः ।**
**तुष्टेष्वेतेष्वव्यथो दग्धपापस्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते ॥२८॥**

**अन्वयः**—शूद्रः ब्रह्मक्षत्रं वैश्यवर्णं च-एतान् न्यायतः पूजयानः एतेषु तुष्टेषु अव्यथः दग्धपापः ( सन् ) देहं त्यक्त्वा स्वर्गसुखानि भुङ्क्ते ।

**अर्थः**—शूद्रकर्तव्यं निर्दिशति—**ब्रह्मेति** । शूद्रः=वृषलः 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरः, ब्रह्म=ब्राह्मणजाति, क्षत्रं = क्षत्रियजाति, वैश्यवर्णं=वैश्यजाति च पुरुषम्-एतान्, क्रमेण=क्रमशः, पूजयानः=पूजयन्, मुगभाव आर्षः, एतेषु=ब्रह्मादिषु, तुष्टेषु=प्रसन्नेषु सत्सु, अव्यथः=निर्बाधः, दग्धपापः दग्धं=भस्मीभूतं पापं=कल्मषं 'पापं किल्विषकल्मष'मित्यमरः, यस्य तादृशः सन्, देहं=कायं 'कायो देहः क्लीबपुंसो'रित्यमरः त्यक्त्वा=विहाय, स्वर्गसुखानि=सुरलोकसुखानि, भुङ्क्ते=उपभोगं करोति ।

**भावार्थः**—ब्राह्मणादिसेवापरायणो निर्धूतपाप्मा शूद्रः प्रेत्य स्वर्गीयसुखोपभोगं करोतीति ॥

**भाषा**—ब्राह्मण, क्षत्रिय तथा वैश्य को क्रम से न्यायपूर्वक आदर देता हुआ शूद्र इनके प्रसन्न होने पर व्यथारहित तथा पाप से मुक्त होकर शरीर छोड़ने के बाद स्वर्ग के सुखों का उपभोग करता है ॥ २८ ॥

**चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो हेतुं चानुब्रुवतो मे निबोध ।**
**क्षात्राद्धर्माद्धीयते पाण्डुपुत्रस्तं त्वं राजन्! राजधर्मे नियुङ्क्ष्व॥ २९ ॥**

**अन्वयः**—चातुर्वर्ण्यस्य एषः धर्मः तव उक्तः, अनुब्रुवतः च मे हेतुं निबोध । हे राजन्! पाण्डुपुत्रः क्षात्रात् धर्मात् हीयते, त्वं तं राजधर्मे नियुङ्क्ष्व ।

**अर्थः**—उपसंहरन्नाह—**चातुर्वर्ण्यस्येति** । चातुर्वर्ण्यस्य चत्वारश्च ते वर्णाश्च चतुर्वर्णाः त एव चातुर्वर्ण्यं स्वार्थे ष्यञ्, तस्य = ब्राह्मणादिकस्य, एषः = अयं, धर्मः = आचारः, तव = ते त्वामुद्दिश्येति यावत्, उक्तः = कथितः मयेति शेषः, अनुब्रुवतः = कथयतः, मे = मम मत्त इत्यर्थः, हेतुं = कारणं, 'हेतुर्ना कारणं बीज'मित्यमरः, निबोध=जानीहि, हे राजन्! = हे भूप! पाण्डुपुत्रः = युधिष्ठिरः, क्षात्रात् = क्षत्रियसम्बन्धिनः, धर्मात् = आचारात्, हीयते=हीनो भवति, त्वं = भवान्, तं = युधिष्ठिरं, राजधर्मे = राजोचितकर्मणि पृथ्वीपालनादिरूपे, नियुङ्क्ष्व = स्थापय ।

**भावार्थः**—विदुरो धृतराष्ट्रं प्रति सारभूतमर्थं कथयति—चातुर्वर्ण्यस्य धर्मो मयोक्तस्त्वया सम्यग् विविच्यताम् । धर्मराजस्तु सम्प्रति क्षात्रधर्महीनो वर्ततेऽतस्तं राज्ये नियुज्य तद्युक्तं विधेहीति ॥

**भाषा**—हे राजन्! चारों वर्णों के इस धर्म को जो मैंने आपसे कहा है उसके कारण को भी मैं आपसे कह रहा हूँ, उसे समझ लीजिए। युधिष्ठिर क्षत्रिय के धर्म ( राज्यशासन ) से हीन हो रहे हैं, इसलिए आप उन्हें राजा के कर्तव्य ( राज्यशासन ) में लगा दीजिए ॥२९॥

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=कुरुपतिः, उवाच=विदुरोक्तं सर्वं निशम्य कथितवान् ।

**एवमेतद्यथा त्वं मामनुशाससि नित्यदा ।**
**ममापि च मतिः सौम्य! भवत्येवं यथात्थ माम् ॥ ३० ॥**

**अन्वयः**—हे सौम्य! एतत् एवम्, यथा त्वं मां नित्यदा अनुशाससि, मम अपि मतिः एवं भवति, यथा आत्थ ।

**अर्थः**—विदुरोक्तं स्वीकुर्वन्निव धृतराष्ट्रः प्रतिपादयति—**एवमिति** । हे सौम्य!=हे साधो विदुर! एतत्=इदम्, एवम् = ईदृगेवास्ति, यथा=येन प्रकारेण, त्वं=भवान्, मां=मा, नित्यदा =सदा 'सर्वैकान्यकियत्तदः काले दा' इति सप्तम्याः स्थाने दादेशः, अनुशाससि=अनुशास्सि शिक्षयसीत्यर्थः, आर्षोऽयं प्रयोगः, मम अपि=मेऽपि, मतिः=बुद्धिः, एवम्=ईदृशी, भवति, यथा= यादृक्, त्वम्, आत्थ=ब्रवीषि, 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति शासनेन परस्मैपदे लटि ब्रूधातोराद्येषु पञ्चसु तिबादिषु आहादेशे रूपमिदम् ।

**भावार्थः**—त्वदनुशासनवचनानुरूपं ममापि बुद्धिर्भवति, सत्यं न्याय्यं च तदस्तीति ॥

**भाषा**—धृतराष्ट्र बोले—हे सौम्य! आप जो मुझे नित्य उपदेश देते हैं वह सब ठीक है और आप जैसा मुझसे कह रहे हैं वैसा ही मेरा भी विचार है ॥ ३० ॥

**सा तु बुद्धिः कृताप्येवं पाण्डवान् प्रति मे सदा ।**
**दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ ३१ ॥**

**चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो हेतुं चानुब्रुवतो मे निबोध।**
**क्षात्राद्धर्माद्धीयते पाण्डुपुत्रस्तं त्वं राजन्! राजधर्मे नियुङ्क्ष्व॥ २९॥**

**अन्वयः**—चातुर्वर्ण्यस्य एषः धर्मः तव उक्तः, अनुब्रुवतः च मे हेतुं निबोध। हे राजन्! पाण्डुपुत्रः क्षात्रात् धर्मात् हीयते, त्वं तं राजधर्मे नियुङ्क्ष्व।

**अर्थः**—उपसंहरन्नाह—**चातुर्वर्ण्यस्येति**। चातुर्वर्ण्यस्य चत्वारश्च ते वर्णाश्च चतुर्वर्णाः त एव चातुर्वर्ण्यं स्वार्थे ष्यञ्, तस्य = ब्राह्मणादिकस्य, एषः = अयं, धर्मः = आचारः, तव = ते त्वामुद्दिश्येति यावत्, उक्तः = कथितः मयेति शेषः, अनुब्रुवतः = कथयतः, मे = मम भक्त इत्यर्थः, हेतुं = कारणं, 'हेतुर्ना कारणं बीज'मित्यमरः, निबोध=जानीहि, हे राजन्! = हे भूप! पाण्डुपुत्रः = युधिष्ठिरः, क्षात्रात् = क्षत्रियसम्बन्धिनः, धर्मात् = आचारात्, हीयते=हीनो भवति, त्वं = भवान्, तं = युधिष्ठिरं, राजधर्मे = राजोचितकर्मणि पृथ्वीपालनादिरूपे, नियुङ्क्ष्व = स्थापय।

**भावार्थः**—विदुरो धृतराष्ट्रं प्रति सारभूतमर्थं कथयति—चातुर्वर्ण्यस्य धर्मो मयोक्तस्त्वया सम्यग् विविच्यताम्। धर्मराजस्तु सम्प्रति क्षात्रधर्महीनो वर्ततेऽतस्तं राज्ये नियुज्य तद्युक्तं विधेहीति॥

**भाषा**—हे राजन्! चारों वर्णों के इस धर्म को जो मैंने आपसे कहा है उसके कारण को भी मैं आपसे कह रहा हूँ, उसे समझ लीजिए। युधिष्ठिर क्षत्रिय के धर्म (राज्यशासन) से हीन हो रहे हैं, इसलिए आप उन्हें राजा के कर्तव्य (राज्यशासन) में लगा दीजिए॥२९॥

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=कुरुपतिः, उवाच=विदुरोक्तं सर्वं निशम्य कथितवान्।

**एवमेतद्यथा त्वं मामनुशाससि नित्यदा।**
**ममापि च मतिः सौम्य! भवत्येवं यथात्थ माम्॥ ३०॥**

**अन्वयः**—हे सौम्य! एतत् एवम्, यथा त्वं मां नित्यदा अनुशाससि, मम अपि मतिः एवं भवति, यथा आत्थ।

**अर्थः**—विदुरोक्तं स्वीकुर्वन्निव धृतराष्ट्रः प्रतिपादयति—**एवमिति**। हे सौम्य!=हे साधो विदुर! एतत्=इदम्, एवम् = ईदृगेवास्ति, यथा=येन प्रकारेण, त्वं=भवान्, मां=मा, नित्यदा =सदा 'सर्वैकान्यकियत्तदः काले दा' इति सप्तम्याः स्थाने दादेशः, अनुशाससि=अनुशास्सि शिक्षयसीत्यर्थः, आर्षोऽयं प्रयोगः, मम अपि=मेऽपि, मतिः=बुद्धिः, एवम्=ईदृशी, भवति, यथा= यादृक्, त्वम्, आत्थ=ब्रवीषि, 'णलः पञ्चानामादित आहो ब्रुवः' इति शासनेन परस्मैपदे लटि ब्रूधातोराद्येषु पञ्चसु तिबादिषु आहादेशे रूपमिदम्।

**भावार्थः**—त्वदनुशासनवचनानुरूपं ममापि बुद्धिर्भवति, सत्यं न्याय्यं च तदस्तीति॥

**भाषा**—धृतराष्ट्र बोले—हे सौम्य! आप जो मुझे नित्य उपदेश देते हैं वह सब ठीक है और आप जैसा मुझसे कह रहे हैं वैसा ही मेरा भी विचार है॥ ३०॥

**सा तु बुद्धिः कृताप्येवं पाण्डवान् प्रति मे सदा।**
**दुर्योधनं समासाद्य पुनर्विपरिवर्तते॥ ३१॥**

**अन्वयः**-तु पाण्डवान् प्रति सदा एवं कृता अपि मे सा बुद्धिः दुर्योधनं समासाद्य पुनः विपरिवर्तते।

**अर्थः**—स्वबुद्धेरस्थैर्यं प्रकटयन् पुनराह-**सा तु बुद्धिरिति**। तु=किन्तु, पाण्डवान् प्रति=पाण्डुपुत्रान् युधिष्ठिरादीन् उद्दिश्य, सदा=सर्वदा, एवं=पूर्वोक्तप्रकारेण, कृता अपि=विहितापि स्थिरतां नीतापीति यावत् , मे=मम, सा=पाण्डवपक्षपातिनी, बुद्धिः=मतिः 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मति'रित्यमरः, दुर्योधनं=ज्येष्ठं स्वपुत्रं, समासाद्य=प्राप्य दुर्योधनं लक्षीकृत्येति यावत् , पुनः=भूयः, विपरिवर्तते=विपरीता भवतीत्यर्थः।

**भावार्थः**—विचारेण पाण्डवाभिमुख्यपि मे मतिः सहसा सुयोधनमुपगता तद्वैपरीत्यमेव भजत इति ॥

**भाषा**—परन्तु पाण्डवों के प्रति इसभाँति सदा निश्चित किया गया मेरा विचार दुर्योधन के सामने फिर बदल जाता है ॥ ३१ ॥

**न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् ।**
**दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ३२ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतौ अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

**अन्वयः**—केनचित् भूतेन दिष्टम् अभ्यतिक्रान्तुं न शक्यम् , दिष्टम् एव ध्रुवं मन्ये, पौरुषं तु निरर्थकं मन्ये।

**अर्थः**—दैवमेव सर्वतो बलवत्तममिति स्वविचारं प्रकटयति-न **दिष्टमिति**। केनचित्=केनापि, भूतेन=प्राणिना, 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः, दिष्टं=दैवं भाग्यमिति यावत् , 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि'रित्यमरः, अभ्यतिक्रान्तुं = उल्लङ्घयितुं, न शक्यं=न शक्यत इति यावत्, दिष्टम् एव=दैवमेव, ध्रुवं=निश्चितं 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिष्वि'त्यमरः, मन्ये=जानामि, पौरुषं तु=पुरुषार्थस्तु 'पुंभावे तत्क्रियायां च पौरुष'मिति कोषः, निरर्थकं=मोघं 'मोघं निरर्थक'मित्यमरः, असफलं व्यर्थमिति यावत्, मन्ये।

**भावार्थः**—दैवमेव सर्वतो बलीयस्तल्लङ्घने न कस्यापि सामर्थ्यमतो न पौरुषं बहु मन्य इति॥

इति होशिङ्गजगन्नाथशास्त्रिविनिर्मितायां तत्त्वदर्शिन्याख्यायां विदुरनीति-
व्याख्यायामष्टमोऽध्यायः समाप्तः।

**भाषा**—प्रारब्ध का उल्लङ्घन किसी भी प्राणी के द्वारा नहीं किया जा सकता, ( इसलिए ) मैं प्रारब्ध को ही अटल और पुरुषार्थ को निरर्थक समझता हूँ ॥ ३२ ॥

श्री अनन्तरामशास्त्री वेताल कृत विदुरनीति की हिन्दी भाषाटीका
सरलार्थबोधिनी का अष्टम अध्याय समाप्त।

होशिङ्गान्वयविश्वनाथचरणश्रीलाऽन्नपूर्णाजनेः श्रीमल्लक्ष्मणभालचन्द्रविबुधोत्तंसाप्तबोधश्रियः।
काशीस्थस्य कृतौ यथामति जगन्नाथस्य पूर्तिं गता व्याख्या श्रीविदुरस्य नीतिनिचये तत्त्वार्थदर्शिन्यसौ॥
रसनिधिनन्दक्षणदापतिसम्मितवर्षकेऽधिके नभसि। शुक्ले पर्वणि सोमे पूर्णाऽभूद्विदुरनीतिटीकेयम्॥

## समाप्ता चेयं विदुरनीतिः।